न्यायावतार जैसी छोटीसी कृतिमें जैनदर्शन संमत इन चारों तत्त्वोंकी व्याख्या करनेका सफल व्यवस्थित प्रयत्न किया है। उन्होंने प्रमाणका लक्षण किया है और उसके भेद-प्रभेदोंका भी लक्षण किया है। खासकर अनुमानके विषयमें तो उसके हेत्वादि सभी अंगप्रत्यंगोंकी संक्षेपमें मार्मिक चर्चा की है।

जैन न्यायशास्त्रकी चर्चा प्रमाणनिरूपणमें ही उन्होंने समाप्त नहीं की किन्तु नयोंका लक्षण और विषय बताकर जैनन्याय शास्त्रकी विशेषताकी ओर भी दार्शनिकोंका ध्यान खींचा है।

इस छोटीसी कृतिमें सिद्धसेन स्वमतानुसार न्यायशास्त्रोपयोगी प्रमाणादि पदार्थोंकी व्याख्या करके ही संतुष्ट नहीं हुए किन्तु परमतका निराकरण भी संक्षेपमें करनेका उन्होंने प्रयत्न किया है। लक्षणप्रणयनमें दिङ्नाग जैसे बौद्धोंका यत्र तत्र अनुकरण करके भी उन्हींके 'सर्वमालम्बने भ्रान्तम्' तथा पक्षाप्रयोगके सिद्धान्तोंका युक्तिपूर्वक खण्डन किया है। बौद्धोंने जो हेतुलक्षण किया था उसके स्थानमें अन्तर्व्याप्तिके बौद्धसिद्धान्तसे ही फलित होनेवाला 'अन्यथानुपपत्तिरूप' हेतुलक्षण अपनाया जो आज तक जैनाचार्योंके द्वारा प्रमाणभूत माना जाता है।

## ४. वार्तिकके कर्ता।

वार्तिककी रचना किसने की इस विषयमें अभीतक किसीने निर्णय नहीं किया है। प्रतियोंमें वार्तिककी समाप्तिके बाद कोई प्रशस्ति लेख नहीं है। उसकी अन्तिम कारिकामें 'सूत्रके ऊपर मैंने वार्तिककी रचना की है' सिर्फ इतना ही सूचन है—

**"सूत्रं सूत्रकृता कृतं मुकुलितं सद्भूरिबीजैर्घनम्,**
**तद्वाचः किल वार्तिकं मृदु मया प्रोक्तं शिशूनां कृते।**
**भानोर्यत्किरणैर्विकासि कमलं नेन्दोः करैस्तत्तथा,**
**यद्वेन्दूदयतो विकासि जलजं भानोर्न तस्मिन्गति॥"**

'मैंने' अर्थात् किसने इसका कुछ पता नहीं लगता। इसी लिये जैनभाण्डारोंकी सूचियोंमें वार्तिकके कर्ताका नाम दिया नहीं जाता, देखो—**'पत्तनस्थप्राच्यजैनभाण्डागारीयग्रन्थसूची,'** भाग १. पृ० ४१,८६,२९९।

इन सूचियोंके आधारसे अन्य लेखकोंने भी वार्तिकको अज्ञातकर्तृक कृति माना है।

किन्तु निम्न कारणोंसे यह वार्तिक शान्त्याचार्यकी ही कृति है ऐसा मेरा अनुमान है—

१ वार्तिक अत्यन्त प्राचीन कृति नहीं है जिससे उसके कर्ताका नाम विस्मृत हो जाय। आचार्य अकलंक ही नहीं किन्तु उनके ग्रन्थके कई टीकाकारोंको भी वार्तिककारने देखा है यह बात कारिका १९,३८—४० से स्पष्ट है।

२ शान्त्याचार्यने वार्तिककी अंतिम पूर्वोद्धृत कारिका जिसमें 'मैंने वार्तिक बनाया' ऐसी सूचना है, उसकी व्याख्या नहीं की है। इससे भी यही फलित होता है कि शान्त्याचार्यके अतिरिक्त और कोई वार्तिकका कर्ता नहीं है।

३ जिस कालकी (सं० ९००-१३००) यह रचना है उस कालमें ग्रथित अन्य दार्शनिक कारिकाबद्ध छोटे छोटे ग्रन्थ प्रायः ऐसे ही हैं जिनमें मूल कारिका और उनकी टीका एककर्तृक ही हैं। जैसे विद्यानन्दकी आप्तपरीक्षा और उसकी वृत्ति, जिनेश्वरका प्रमालक्ष्म और उसकी वृत्ति, चन्द्रसेनकी उत्पादादिसिद्धि और उसकी टीका इत्यादि।

४ कारिका नं० १९ में 'नः' शब्द है। उसकी व्याख्यामें शान्त्याचार्यने 'नः' का अर्थ 'अस्माकम्' ही किया है। कहीं ग्रन्थकारका नाम नहीं दिया। विशेष विवरणमें 'नः' का मतलब 'वार्तिककार' शब्दसे बताया है। स्वोपज्ञटीकाकार मूल यदि सूत्ररूप हो तो मूलकारको सूत्रकाररूपसे संबोधित करते हुए प्रायः देखे जाते हैं। प्रस्तुतमें मूलग्रन्थ वार्तिकरूप होनेसे टीकामें उसके कर्ताको 'वार्तिककार' कहा है। वार्तिककार यदि दूसरे होते तो यह संभव नहीं है कि शान्त्याचार्य उसका नाम न जानते क्योंकि वार्तिक शान्त्याचार्यके कालकी कृति है इसमें तो संदेह है ही नहीं।

५ वार्तिककारने सिद्धसेनको तो सूर्य की उपमा दी है ( का० १,५७ ) और खुदको चन्द्रकी ( का० ५७ )। इससे भी यही नतीजा निकलता है कि यह शान्त्याचार्यकी ही कृति होनी चाहिए क्योंकि चन्द्र शान्त होता है, अतएव श्लेषसे शान्त्याचार्यके नामकी सूचना वार्तिककी अंतिम कारिकामें मानी जा सकती है।

इन कारणोंसे जब तक कोई बाधक प्रमाण न मिले वार्तिकके कर्तारूपसे शान्त्याचार्यको ही मानना उचित है।

## ५. शान्त्याचार्य और उनका समय।

शान्त्याचार्य नामके अनेक श्वेताम्बर आचार्य हुए हैं। उनमेंसे किसने वार्तिक और उसकी वृत्तिकी रचना की इसका निर्णय करना आवश्यक है। शान्त्याचार्य या शान्तिसूरिके नामसे प्रसिद्ध जिन आचार्योंका पता मैंने लगाया है वे ये हैं—

१ **थारापद्रगच्छीय शान्तिसूरि**—इन्होंने उत्तराध्ययनसूत्रकी बृहत् टीकाकी रचना की है। उत्तराध्ययनकी टीकाकी प्रशस्तिमें स्पष्टरूपसे इन्होंने अपना गच्छ थारापद्र बताया है। इनका जो चरित्र प्रभावकचरितमें वर्णित है उससे पता चलता है कि उनका गच्छ थारापद्र था, उनके गुरुका नाम विजयसिंह था। वे राजा भोज और कवि धनपालके समकालीन थे। उनकी मृत्यु वि० सं० १०९६ के ज्येष्ठ शुक्ल ९ को हुई। प्रभावकचरितमें कहा गया है कि वादिवेताल ऐसा विरुद राजा भोजने शान्त्याचार्यको दिया था। इन्होंने धनपालकृत तिलकमञ्जरीका संशोधन किया है और उत्तराध्ययनटीकाकी रचना की है—प्रभावकचरित पृ० १३३–१३७।

२ **पूर्णतल्लगच्छीय शान्तिसूरि**—तिलकमञ्जरी टिप्पणकी प्रशस्तिमें उसके कर्ता शान्तिसूरिने अपनेको पूर्णतल्लगच्छीय कहा है। अपना परिचय देते हुए कहा है कि मैं मतिमानोंमें श्रेष्ठ हूँ और बहुशास्त्रको जाननेवाला हूँ।

> **"श्रीशान्तिसूरिरिह श्रीमति पूर्णतल्ले,**
> **गच्छे वरो मतिमतां बहुशास्त्रवेत्ता।**
> **तेनामलं विरचितं बहुधा विमृश्य,**
> **संक्षेपतो वरमिदं बुध ! टिप्पनं भोः[1] ॥"**

---

१ पत्तनस्थप्राच्यजैनभाण्डागारीयग्रन्थसूची पृ० ८७।

इन्हीं शान्त्याचार्यने मेघाभ्युदयकाव्यकी वृत्तिकी भी रचना की है। उसकी प्रशस्तिमें अपना परिचय देते हुए लिखा है कि वे पूर्णतल्लगच्छके वर्धमानसूरिके शिष्य थे—

**"श्रीपूर्णतल्लगच्छसंबंधिश्रीवर्धमानाचार्यस्वपदस्थापितश्रीशान्तिसूरिविरचिता मेघाभ्युदयकाव्यवृत्तिः"**[1]।

पं० लालचन्द्रने 'जेसलमीरभाण्डागारीयग्रन्थानां सूची' की प्रस्तावना 'अप्रसिद्धग्रन्थकृत्परिचय' (पृ० ५९) में लिखा है कि शान्त्याचार्यने पांच यमककाव्योंकी टीका करनेकी प्रतिज्ञा की थी[2] तदनुसार उन्होंने वृन्दावनकाव्य, घटखर्परकाव्य, मेघाभ्युदयकाव्य, शिवभद्रकाव्य और चन्द्रदूतकाव्य इन पांच यमककाव्योंकी टीकाओंकी रचना की थी।

पं० लालचन्द्रका अनुमान है कि ये आचार्य वि० ११ से १२ वी शताब्दीके बीचमें हुए हैं।

३ **बृहद्गच्छीय शान्तिसूरि**—इनके गुरुका नाम नेमिचन्द्र है। इन्होंने अपना परिचय पृथ्वीचन्द्र चरित्रकी प्रशस्तिमें दिया है। पृथ्वीचंद्रचरित्र बृहत् और लघु की रचना विक्रमसं० ११६१ में हुई है।[3] धर्मरत्न प्रकरणमें पृथ्वीचन्द्र चरित्र देखनेकी प्रेरणा की गई है। अतएव उसके रचयिता शान्तिसूरि भी यही हो सकते हैं।

४ **खंडिल्लगच्छीय शान्तिसूरि**—जैनग्रन्थावली (पृ० २८५) में भक्तामरस्तोत्रकी वृत्ति खंडिल्लगच्छीय शांतिसूरिके नाम दर्ज है।

५ **भद्रेश्वरशिष्य शान्तिसूरि**—गर्गर्षि सूरिके कर्मविपाकके ऊपर परमानन्दने टीका लिखी है। उसकी प्रशस्तिमें उन्होंने आचार्यपरंपरा दी है उससे पता चलता है कि वे भद्रेश्वरसूरिके शिष्य शान्तिसूरिके शिष्य अभयदेवके शिष्य थे। श्री मो. द. देसाईने अनुमान किया है कि परमानन्द वि. सं. १२२१ में विद्यमान थे (देखो, जैन. सा० सं० इ० पृ० २८०); अतएव प्रस्तुत शान्त्याचार्यका समय बारहवींका उत्तरार्ध निश्चित होता है।

इनके गच्छका ठीक निश्चय करना कठिन है।

६ **संढेरगच्छके शान्त्याचार्य**—सं० १५९७ के एक लेखसे पता चलता है कि संढेर गच्छमें दो शान्त्याचार्य हुए हैं। दोनों सुमतिके शिष्य थे। किन्तु एक १५९७ सं० में हुए और दूसरे उनसे कई पीढी पहले हुए—प्राचीन लेखसंग्रह, लेख नं० ३३६।

७ **नाणकीयगच्छके शान्तिसूरि**—इनका एक शिलालेख सं० १२६५ का 'प्राचीन जैन लेखसंग्रह' में उद्धृत है। देखो लेख नं० ४०३। उसमें उनके गुरुका नाम कल्याणविजय और गच्छकानाम नाणकीय निर्दिष्ट है।

८ **नागेन्द्रकुलके शान्त्याचार्य**—उपदेशमाला वृत्ति(कर्णिका)के रचयिता उदयप्रभने अपनी गुरुपरंपराका वर्णन करते हुए कहा है कि नागेन्द्रकुलके महेन्द्रसूरिके पट्टपर शान्तिसूरि हुए। उनका परिचय उन्होंने इस प्रकार दिया है—

---

१ जेसलमीरभाण्डागारीयग्रन्थानां सूची पृ० ४३।

२ "वृन्दावनादिकाव्यानां यमकैरतिदुर्विदाम्।
वक्ष्ये मन्दप्रबोधाय पञ्चानां वृत्तिमुत्तमाम्॥"

३ जैन साहित्यनो संक्षिप्त इतिहास, पृ० २३८।

"श्रीनागेन्द्रकुले मुनीन्द्रसवितुः श्रीमन्महेन्द्रप्रभोः,
पट्टे पारगतागमोपनिषदां पारंगमग्रामणीः ।
देवः संयमदैवतं निरवधिस्त्रैविद्यवागीश्वरः,
संजज्ञे कलिकल्मषैरकलुषः श्रीशान्तिसूरिगुरुः ॥
शक्तिः क्वापि न कापिलस्य न नये नैयायिको नायकः
चार्वाकः परिपाकमुज्झितमतिर्बौद्धश्च नौद्धत्यभाक् ।
स्याद्वैशेषिकशेमुषी च विमुखी वादाय वेदान्तिके
दांतिः केवलमस्य वक्तुरयते सीमां न मीमांसकः ॥"

देखो, पत्तनस्थ० पृ० २३६ ।

ये सिद्धराजके समकालीन या कुछ पूर्ववर्ती होंगे । क्योंकि उसी वृत्तिमें कहा है कि इनके प्रशिष्य अमरचन्द्रका सिद्धराजकी सभामें काफी सन्मान था । सिद्धराजने इनको 'सिंह-शिशुक' का बिरुद दिया था ( जै० सा० सं० पृ० २४९ ) सिद्धराजका राजत्व काल वि० सं० ११५०-११९९ है ।

'प्राचीन लेख संग्रह'में ( लेख ३८१ ) विजयसेनसूरिका प्रतिष्ठालेख सं० १२८८ का है । उससे सूचित होता है कि शान्तिसूरि महेन्द्रके साक्षात् शिष्य नहीं किन्तु उनकी परंपरामें हुए थे—

**"सं० १२८८ वर्षे ...........श्रीनागेन्द्रगच्छे भट्टारकश्रीमहेन्द्रसूरिसन्ताने शिष्यश्री-शान्तिसूरिशिष्यश्रीआनंदसूरिश्रीअमरसूरिपदे भट्टारकश्रीहरिभद्रसूरिपट्टालंकरणप्रभुश्री-विजयसेनसूरिप्रतिष्ठित ........."**

**९ मडाहडीयगच्छके शान्तिसूरि**—मडाहडीय गच्छके यशोदेव सूरिकी मूर्तिकी प्रतिष्ठा सं. १३८७ में इन्होंने की थी । इसीसे अनुमान होता है कि वे उक्त गच्छके होंगे । देखो 'प्राचीन जैन लेख संग्रह,' लेख ५०८ । मडाहडीय गच्छके वर्धमानने अपने गच्छको कहीं कहीं बृहद्गच्छ भी कहा है । इससे पता चलता है कि मडाहडीय गच्छ बृहद्गच्छकी शाखा होगी ( प्राचीन जैन लेख सं० लेख, ५५०,२९२ ) ।

पूर्वोक्त बृहद् गच्छीय शान्तिसूरिसे प्रस्तुत शान्तिसूरि भिन्न हैं क्योंकि वे सं० ११६१ में विद्यमान थे और प्रस्तुत शान्तिसूरि सं० १३८७ में ।

**१० तपागच्छके शान्त्याचार्य**—वादी देवसूरिने अपने शिष्योंमेंसे २४ मुनियोंको आचार्यपद पर प्रतिष्ठित किया । उनमेंसे एक शान्त्याचार्य भी थे । अतएव उनका समय विक्रम १२ वी शताब्दीके उत्तरार्ध से १३ वी का पूर्वार्ध सिद्ध होता है—जैनगूर्जर कविओ भाग २ पृ० ७५७ ।

**११ पल्लीवालगच्छके शान्त्याचार्य**—पल्लीवाल गच्छकी एक पट्टावली श्री नाहटाजीने श्रीआत्मानन्द शताब्दी स्मारकमें ( पृ० १८४ ) प्रकाशित करवाई है । सं० १६१ में एक शान्त्याचार्य हुए । उनके बाद १ यशोदेव, २ नन्न, ३ उद्योतन, ४ महेश्वर, ५ अभयदेव ६ आमदेव ये छः आचार्य हुए । इनके बाद फिर लगातार उक्त नामके सात-सात आचार्योंका क्रम सं० १६८७ तक चला है । और क्रमशः निम्नोक्त संवतोंमें शान्त्याचार्य स्वर्गत हुए हैं—

सं० १६१, ४९५, ७६८, १०३१, १२२४, १४४८, १६६१ अतएव इस गच्छमें कुल सात शान्त्याचार्य हुए।

श्री नाहटाजीने १४४८ में स्वर्गत होने वाले शान्त्याचार्यके नाम कुछ प्रतिष्ठा लेख चढाये हैं (पृ० १९२) किन्तु संवत् मिलाकर देखनेसे पता चलता है कि वे लेख सं० १४५६, १४५८, १४६२ के हैं अतएव वे १४४८ में स्वर्गत होने वाले शान्त्याचार्यके हो नहीं सकते। इसलिये उक्त संवत्के लेखोंमें सूचित शान्त्याचार्य सं० १४४८ में स्वर्गत होने वाले शान्त्याचार्यसे भिन्न होने चाहिए। या शान्त्याचार्यके स्वर्गमनसंवतमें कुछ भ्रम मानना चाहिए।

इनके अलावा जीवविचार,[1] चैत्यवन्दनसूत्रमहाभाष्य,[2] बृहत् शान्तिस्तोत्र[3] इत्यादि ग्रन्थोंके रचयिता भी शान्तिसूरि हैं, इनका कुछ भी विशेष परिचय ग्रन्थान्तमें दिया नहीं गया। अतएव कहना कठिन है कि उक्त शान्त्याचार्योंसे ये भिन्न थे या उनमेंसे किसी एक से अभिन्न थे।

इन सब शान्त्याचार्योंमेंसे प्रस्तुत ग्रन्थ वार्तिक और उसकी वृत्तिके रचयिता कौन थे इसका निर्णय करना अब प्रस्तुत है।

**१ वार्तिक और वृत्तिके कर्ता शान्त्याचार्य –**

इन सभी आचार्योंमेंसे प्रस्तुत वार्तिक और वृत्तिके कर्ता शान्त्याचार्य नं० २ ही संभव है। यद्यपि वार्तिक वृत्तिके अन्तमें उसके कर्ताने अपने गुरुका नाम वर्धमान बताया है किन्तु पूर्णतल्ल गच्छका उल्लेख नहीं किया है। किन्तु उल्लिखित चन्द्रकुलमें ही पूर्णतल्लगच्छ हुआ है[4] यह बात निर्विवाद होनेसे निःसंदेह कहा जा सकता है कि नं० २ शान्त्याचार्यसे ही वार्तिक और वृत्तिके कर्ता शान्त्याचार्यका अभेद है अन्यसे नहीं। क्यों कि उपरिनिर्दिष्ट आचार्योंमेंसे –

नं० १ हो नहीं सकते क्योंकि नं० १ के गुरुका नाम विजयसिंह था।

नं. ३ हो नहीं सकते क्योंकि उनके गुरुका नाम नेमिचन्द्र है।

नं. ४ के साथ अभेद सिद्ध करनेके लिये कोई प्रमाण नहीं क्योंकि नं. ४ के शान्त्याचार्यके गुरुके नामका पता नहीं।

नं. ५ के गुरुका नाम भद्रेश्वर है।

नं. ६ सुमतिके शिष्य थे।

नं. ७ इनके गुरुका नाम कल्याणविजय है।

नं. ८ गुरुका नाम महेन्द्र है। या 'सन्ताने' शब्दका अर्थ 'परंपरामें' ऐसा करें तो गुरुका नाम अज्ञात है।

यद्यपि इनका परिचय आ० उदयप्रभने एक प्रबल दार्शनिकरूपसे दिया है। किन्तु गुरुका

---

१ इसके कई संस्करण निकले हैं। २ आत्मानन्दसभाद्वारा प्रकाशित। ३ संघनो भंडार, पाटन, नं० १०२३,३०.१९८४,२०१७। ४ आचार्य हेमचन्द्र भी चन्द्रकुलके पूर्णतल्ल गच्छमें हुए हैं –

नाम निश्चित न होनेसे या महेन्द्र होने की संभावना होनेसे प्रस्तुत शान्त्याचार्यके साथ इनका अभेद हो नहीं सकता ।

नागेन्द्र गच्छमें भी दो वर्धमान हुए हैं । दूसरेका अस्तित्व १२९९ में था । इनके शिष्य वार्तिककार हो नहीं सकते क्योंकि वार्तिक की कारिकाएँ इसके पूर्ववर्ती ग्रन्थकारोंमें उद्धृत हैं । प्रथम वर्धमानके पट्टधर रामसूरि थे, शान्त्याचार्यका उल्लेख पट्टधररूपसे नहीं किया गया है– देखो जैनसाहित्यनो सं० इतिहास पृ० ३४३ । इसलिये वार्तिककारका गच्छ नागेन्द्र हो नहीं सकता ।

नं. ९ इनका समय १३८७ है । और वार्तिककारका समय बहुत पहले है ।

नं. १० गुरुका नाम वादीदेव है ।

नं. ११ गुरुका नाम वर्धमान नहीं.

अतएव जितने शान्त्याचार्य हमें ज्ञात हैं उनमेंसे यदि किसीके साथ वार्तिक और वृत्तिके रचयिता शान्त्याचार्यका अभेद होनेकी संभावना करनी हो तो वह नं. २ के साथ ही हो सकती है । नं. २ के शान्त्याचार्यके गुरुका नाम वर्धमान है, और वार्तिककारके गुरुका नाम भी वर्धमान है । दूसरे गच्छोंके शान्त्याचार्योंके साथ वार्तिककारका अभेद सिद्ध हो नहीं सकता तब उनका गच्छ भी पूर्णतल्ल मानना उचित है । अतएव यही मानना ठीक है कि वार्तिककार शान्त्याचार्य पूर्णतल्लगच्छके वर्धमानके शिष्य थे ।

पं० लालचन्द्रजीने भी इन्ही शान्त्याचार्यको वार्तिकवृत्तिके कर्तारूपसे माना है । उन्होंने अपनी मान्यताके लिये कोई युक्ति नहीं दी । किन्तु उनका कथन उक्त समर्थनके कारण युक्ति-संगत है । जेसल० अप्रसि० पृ० ५९ । श्री मो. द. देसाईने भी पं० लालचन्द्रके मतानुसार अपना मत स्थिर किया है–जैन० सा० पृ० २३० ।

**२ शान्त्याचार्यका समय निर्णय–**

पं० लालचन्द्रजीने शान्त्याचार्यका समय ११ और १२ वी शताब्दीके मध्य माना है । उनकी यह मान्यता भी ठीक जंचती है ।

उत्पादादिसिद्धिमें उसके कर्ताने वार्तिक और उसकी वृत्तिका काफी उपयोग किया है । वार्तिककी का० २३,२५,२९,३०,३१,३४ और ३५ उत्पादादिसिद्धिकी टीकामें उद्धृत हैं[1] । वार्तिकवृत्तिकी विषयोपसंहारके लिये निबद्ध एक कारिका भी उत्पादादिसिद्धिटीकामें उद्धृत है[2] । सर्वज्ञवादमें मीमांसकका समूचा पूर्वपक्ष शब्दशः वार्तिकवृत्तिमें से लेकर उत्पादादिसिद्धिमें दिया गया है[3] । उत्पा० की अपोह चर्चा भी वार्तिक वृत्तिसे प्रभावित है–उत्पादा० पृ० ६७ और प्रस्तुत ग्रन्थ पृ० ९६ । सटीक उत्पादादिसिद्धिके कर्ता चन्द्रसेनाचार्य आचार्य हेमचन्द्रके गुरु भाई प्रद्युम्न सूरिके शिष्य थे । उनका समय उन्होंने स्वयं अपनी उत्पादादिसिद्धिकी टीकाके अन्तमें दिया है उससे पता चलता है कि उन्होंने उक्त ग्रन्थको १२०७ वि० में समाप्त किया

---

१ देखो वार्तिककी तुलनाका परिशिष्ट । २ देखो, प्रस्तुत ग्रन्थके 'टिप्पणानि' पृ० १०३ । ३ वही पृ० २०९ ।

था[1] । अत एव वार्तिक और वार्तिक वृत्तिकी रचना वि० १२०७ के पहले हो चुकी थी ऐसा सिद्ध है ।

स्याद्वादरत्नाकर ( पृ० १२३२[2] ) में भी वार्तिककी कारिका नं० ५३ उद्धृत है । स्याद्वाद-रत्नाकरके कर्ता वादी देव सूरिने ११७४ में आचार्यपद प्राप्त किया था और उनका स्वर्गवास वि० १२२६ में हुआ । अत एव सं० ११७४ से १२२६ के बीचमें स्याद्वादरत्नाकरकी रचना हुई है । अत एव कहा जा सकता है कि वार्तिककी रचना सं० ११७४ से पहले हुई ।

न्यायावतारकी सिद्धर्षिकृत टीकाका टिप्पण आ० देवभद्रकी रचना है । आचार्य देवभद्रने मलधारी हेमचन्द्रसे अध्ययन करते करते उसकी रचना की थी । आचार्य मलधारी हेमचन्द्रकी अंतिम रचना विशेषावश्यक बृहद्वृत्ति सं० ११७५ में पूर्ण हुई थी । अतएव उनसे पढनेवाले देवभद्रने इसी समयके आसपास टिप्पणकी रचना की होगी । अतएव टिप्पणीमें उद्धृत[3] वार्तिककी रचना सं० ११७५ के पहले माननेमें कोई आपत्ति नहीं ।

इस प्रकार शान्त्याचार्यकी उत्तरावधि वि० ११७५ मानना संगत है ।

शान्त्याचार्यने वार्तिकवृत्तिमें सन्मतिटीकाका कई स्थानोंमें उपयोग किया है । १०९६ वि० में स्वर्गस्थ होनेवाले वादी वेताल शान्त्याचार्यने ( नं. १ ) अभयदेवको प्रमाणशास्त्रके गुरुरूपसे उल्लिखित किया है[4] । अभयदेवके शिष्य धनेश्वर और जिनेश्वर मुंजराजकी सभाके प्रतिष्ठित पंडित थे । मुंजराजकी मृत्यु वि० सं० १०५० से १०५४ के बीच हुई । अतएव मुंजराजकी सभामें मान पानेवाले धनेश्वर और जिनेश्वरके गुरु अभयदेवका समय विक्रम ९५० से १०५० के बीच मानना उचित है[5] । यही पूर्वावधि वार्तिककार शान्त्याचार्यकी है । अतएव वार्तिककार शान्त्याचार्यको हम वि० १०५०–११७५ के बीचमें होनेवाले विद्वान् मानें तो योग्य ही होगा ।

शान्त्याचार्यने अनन्तवीर्य और अनन्तकीर्तिका नामोल्लेख किया है । अनन्तकीर्ति यदि वही हो जिन्होंने सर्वज्ञसिद्धिकी रचना की है, तो उनका समय श्रीप्रेमीजीने[6] वि० सं० ८४० से १०८२ के बीच अनुमित किया है ।

अनन्तवीर्य नामके दो विद्वान् हुए हैं—एक रविभद्र शिष्य अनन्तवीर्य और दूसरे प्रमेय-रत्नमालाकार अनन्तवीर्य[7] । प्रथम अनन्तवीर्य आचार्य प्रभाचन्द्रसे पहले हुए हैं । आचार्य प्रभाचन्द्र वि० १०३७ से ११२२ के विद्वान् हैं[8] । और दूसरे अनन्तवीर्य प्रभाचन्द्रके बाद हुए हैं । प्रस्तुतमें प्रथम अनन्तवीर्य शान्त्याचार्यको विवक्षित है ऐसा पं० महेन्द्रकुमारजीका मन्तव्य योग्य है । अत एव अनन्तवीर्य और अनन्तकीर्तिके समयके साथ भी शान्त्याचार्यके समयकी पूर्वनिर्दिष्ट मर्यादाका विरोध नहीं आता ।

---

१ जैनसा० सं० इ. पृ० २७५ । २ वस्तुतः यह पृष्ठ १०३२ होना चाहिए । गलत छपा है । ३ न्याया० टि० पृ० १२ में वार्तिककी चतुर्थ कारिका उद्धृत है । ४ उत्तरा० टीकाकी प्रशस्ति । ५ सन्मतितर्क प्रकरण भा. ६ प्रस्तावना पृ० ८५ । ६ जैन साहित्य और इतिहास पृ० ४५२ । ७ न्यायकु० भा. २ प्रस्तावना पृ० २९,३५ । ८ वही पृ० ५८ ।

# शुद्धिपत्रक ।

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ३ | २ | च | स |
| ७ | ३ | त्रिघे | त्रिघे ( धै ) |
| ९ | १३ | व्यतिरेका° | व्यतिरेको° |
| ४६ | २१ | सिद्धता | 'सिद्धसाध्यता' ऐसा पाठान्तर है वही मूल में लेना ठीक है । |
| ४६ | २६ | दृष्टेः । कस्यचित्तु | 'दृष्टेः कस्यचिज्जाति' पाठान्तरनिर्दिष्ट पाठ मूलमें लेना ठीक है । |
| ७२ | १३ | निरस्तत्वत् | निरस्तत्वात् |
| ११५ | १९ | मनःसंवित्ति° | मनः संवि० |
| १३१ | ११ | न्याया० टि० | न्याया० टी० |
| १३६ | २२,२४ | प्रमाणलक्ष्म | प्रमालक्ष्म |
| १५१ | ३० | प्रमाण० | प्रमाणवा० |
| १६९ | ३ | ८ | (८) |
| १८४ से १८७ में | | कर्ण० ३ | कर्ण० १ |
| १८५ | १४ | °वचनादय अन° | वचनादयोऽन° |
| १८५ | १९ | व्यक्तिव्यक्ति° | व्यक्ति° |
| १८५ | ३४ | 'इमां | 'य इमां |
| १८७ | १ | स्व० ३.२८४ | स्व० १.२८७ |
| १८९ | ४ | प्रभा | प्रमा |
| २१४ | २ | वस्तुनः | वस्तुतः |
| २१५ | ६ | कल्पनाभू° | कल्पनामू° |
| २४२ | ४ | बोगि | योगि |
| २५६ | २८ | ग्रामाक° | ग्राभाक° |
| २५७ | २३ | मान | भान |
| २८६ | उपांत्यमें बढ़ा दो– | | |

"दस य नपुंसएसु वीसं इत्थियासु य ।
पुरिसेसु अट्ठसयं समयेणेगेण सिज्झई ॥"

उत्तराध्ययन ३६.५२



श्रीसिद्धसेनदिवाकरविरचितं

# न्यायावतारसूत्रम् ।

प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।
प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥ १

प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृतः ।
प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् ॥ २

प्रसिद्धानां प्रमाणानां लक्षणोक्तौ प्रयोजनम् ।
तद्व्यामोहनिवृत्तिः स्याद् व्यामूढमनसामिह ॥ ३

अपरोक्षतयार्थस्य ग्राहकं ज्ञानमीदृशम् ।
प्रत्यक्षमितरज्ज्ञेयं परोक्षं ग्रहणेक्षया ॥ ४

साध्याविनाभुनो लिङ्गात् साध्यनिश्चायकं स्मृतम् ।
अनुमानं तदभ्रान्तं प्रमाणत्वात् समक्षवत् ॥ ५

न प्रत्यक्षमपि भ्रान्तं प्रमाणत्वविनिश्चयात् ।
भ्रान्तं प्रमाणमित्येतद् विरुद्धं वचनं यतः ॥ ६

सकलप्रतिभासस्य भ्रान्तत्वासिद्धितः स्फुटम् ।
प्रमाणं स्वान्यनिश्चायि द्वयसिद्धौ प्रसिद्ध्यति ॥ ७

दृष्टेष्टाव्याहताद् वाक्यात् परमार्थाभिधायिनः ।
तत्त्वग्राहितयोत्पन्नं मानं शाब्दं प्रकीर्तितम् ॥ ८

आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकम् ।
तत्त्वोपदेशकृत् सार्वं शास्त्रं कापथघट्टनम् ॥ ९

स्वनिश्चयवदन्येषां निश्चयोत्पादनं बुधैः ।
परार्थं मानमाख्यातं वाक्यं तदुपचारतः ॥ १०

प्रत्यक्षेणानुमानेन प्रसिद्धार्थप्रकाशनात् ।
परस्य तदुपायत्वात् परार्थत्वं द्वयोरपि ॥ ११

प्रत्यक्षप्रतिपन्नार्थप्रतिपादि च यद्वचः ।
प्रत्यक्षं प्रतिभासस्य निमित्तत्वात् तदुच्यते ॥ १२

साध्याविनाभुवो हेतोर्वचो यत् प्रतिपादकम् ।
परार्थमनुमानं तत् पक्षादिवचनात्मकम् ॥ १३

साध्याभ्युपगमः पक्षः प्रत्यक्षाद्यनिराकृतः ।
तत्प्रयोगोऽत्र कर्तव्यो हेतोर्गोचरदीपकः ॥ १४

अन्यथा वाद्यभिप्रेतहेतुगोचरमोहिनः ।
प्रत्याय्यस्य भवेत् हेतुर्विरुद्धारेकितो यथा ॥ १५

धानुष्कगुणसंप्रेक्षिजनस्य परिविध्यतः ।
धानुष्कस्य विना लक्ष्यनिर्देशेन गुणेतरौ ॥ १६

हेतोस्तथोपपत्त्या वा स्यात् प्रयोगोऽन्यथापि वा ।
द्विविधोऽन्यतरेणापि साध्यसिद्धिर्भवेदिति ॥ १७

साध्य-साधनयोर्व्याप्तिर्यत्र निश्चीयतेतराम् ।
साधर्म्येण च दृष्टान्तः संबन्धस्मरणान्मतः ॥ १८

साध्ये निवर्तमाने तु साधनस्याप्यसंभवः ।
ख्याप्यते यत्र दृष्टान्ते वैधर्म्येणेति स स्मृतः ॥ १९

अन्तर्व्याप्त्यैव साध्यस्य सिद्धेर्बहिरुदाहृतिः ।
व्यर्था स्यात् तदसद्भावेऽप्येवं न्यायविदो विदुः ॥ २०

प्रतिपाद्यस्य यः सिद्धः पक्षाभासोऽक्षलिङ्गतः ।
लोक-स्ववचनाभ्यां च बाधितोऽनेकधा मतः ॥ २१

अन्यथानुपपन्नत्वं हेतोर्लक्षणमीरितम् ।
तदप्रतीतिसंदेहविपर्यासैस्तदाभता ॥ २२

असिद्धस्त्वप्रतीतो यो योऽन्यथैवोपपद्यते ।
विरुद्धो योऽन्यथाप्यत्र युक्तोऽनैकान्तिकः स तु ॥ २३

साधर्म्येणात्र दृष्टान्तदोषा न्यायविदीरिताः ।
अपलक्षणहेतूत्थाः साध्यादिविकलादयः ॥ २४

वैधर्म्येणात्र दृष्टान्तदोषा न्यायविदीरिताः ।
साध्य-साधनयुग्मानामनिवृत्तेश्च संशयात् ॥ २५

वाद्युक्ते साधने प्रोक्तदोषाणामुद्भावनम् ।
दूषणं निरवद्ये तु दूषणाभासनामकम् ॥ २६

सकलावरणमुक्तात्म केवलं यत् प्रकाशते ।
प्रत्यक्षं सकलार्थात्मसततप्रतिभासनम् ॥ २७

प्रमाणस्य फलं साक्षादज्ञानविनिवर्तनम् ।
केवलस्य सुखोपेक्षे शेषस्यादानहानधीः ॥ २८

अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम् ।
एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः ॥ २९

नयानामेकनिष्ठानां प्रवृत्तेः श्रुतवर्त्मनि ।
संपूर्णार्थविनिश्चायि स्याद्वादश्रुतमुच्यते ॥ ३०

प्रमाता स्वान्यनिर्भासी कर्ता भोक्ता विवृत्तिमान् ।
स्वसंवेदनसंसिद्धो जीवः क्षित्याद्यनात्मकः ॥ ३१

प्रमाणादिव्यवस्थेयमनादिनिधनात्मिका ।
सर्वसंव्यवहर्तॄणां प्रसिद्धापि प्रकीर्तिता ॥ ३२



श्रीशान्त्याचार्यविरचितं

# न्यायावतारसूत्रवार्तिकम् ।

## १. सामान्यलक्षणपरिच्छेदः ।

ॐ[1]

नमः सर्वज्ञाय ।

हिताहितार्थसंप्राप्ति-त्यागयोर्यन्निबन्धनम्[2] ।
तत् प्रमाणं प्रवक्ष्यामि सिद्धसेनार्कसूत्रितम् ॥ १

'प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।
प्रत्यक्षं च परोक्षं च द्विधा[3] मेयविनिश्चयात् ॥' २

॥ इति शास्त्रार्थसंग्रहः ॥

सन्निकर्षादिकं नैव प्रमाणं तदसंभवात् ।
अवभासो व्यवसायो न[4] तु ग्रहणमात्रकम् ॥ ३

दीपवन्नोपपद्येत बाह्य[5]वस्तुप्रकाशकम् ।
अस्वसंवेदने ज्ञाने जगदान्ध्यं प्रसज्यते ॥ ४

प्र[6]त्यक्षं च परोक्षं च ग्राहकं नोपपत्तिमत् ।
बाधनात् संशयाद्यासे सूक्तं सामान्यलक्षणम् ॥ ५

वेदेश्वरादयो नैव प्रमाणं बाधसंभवात् ।
प्रमाणं बाधवैकल्यादर्हंस्तत्त्वार्थवेदनः[7] ॥ ६ ॥

---

१. ॐ नमः सर्वज्ञाय क० । नमो वीतरागाय अ० । २. हिताहितार्थयोः प्राप्ति° अ० । ३. द्विधैव च विनिश्चितम् मु० । ४. व्यवसायस्तत्तु ग्रह° मु० । ५. बाध्य° मु० । ६. इदं पद्यं मुद्रितपुस्तके उद्धृतं नास्ति सं० । ७. °र्थदर्शिनः मु० ।

[1]वचसोऽपौरुषेयत्वं नाऽविशेषात् पटादिवत् ।
स्वरूपेण विशेषेण न सिद्धं भूधरादिषु ॥ ७

विरुद्धं चेष्ट[2]घातेन न [3]कार्यं कर्तृसाधनम् ।
[4]प्रकृतेरन्तरज्ञानं पुंसो[5] नित्यमथाऽन्यथा ॥ ८

नित्यत्वे सर्वदा मोक्षोऽनित्यत्वे न तदुद्भवः ।
कालवैपुल्ययोग्य[6]त्वकुशलाभ्याससंभवे[7] ॥ ९

[8]आवृतिप्रक्षयाज्ज्ञानं सार्वज्ञ्यमुपजायते ।
सद्हेतुकमस्तीह सदैव क्ष्मादितत्त्ववत् ॥ १०

आहारासक्ति[9]चैतन्यं जन्मादौ मध्यवत्तथा ।
अन्त्यसामग्र्य[10]वद्धेतुः संपूर्णः कार्यकृत्सदा ॥ ११

[11]ज्योतिः साक्षात्कृतिः कश्चित् संपूर्णस्तत्त्ववेदने ।

॥ सामान्यलक्षणपरिच्छेदः ॥

## २. प्रत्यक्षपरिच्छेदः ।

[12]ज्ञात्रपेक्षं प्रमेयस्य द्वैविध्यं न तु वास्तवम् ॥ १२

दूरासन्नादिभेदेन प्रतिभा[13]सं भिनत्ति यत् ।
तत् प्रत्यक्षं परोक्षं तु[14] ततोऽन्यद् वस्तु कीर्तितम् ॥ १३

तन्निमित्तं द्विधा मानं न त्रिधा नैकधा ततः ।
सादृश्यं चेत् प्रमेयं स्यात् वैलक्षण्यं न किं तथा ॥ १४

अर्थापत्तेर्न मानत्वं नियमेन विना कृतम् ।
प्रमाणपञ्चकाभावेऽभावोऽभावेन गम्यते ॥ १५

---

१. इदं पद्यं मुद्रितपुस्तके उद्धृतं नास्ति सं० । २. वेष्ट° मु० । ३. कार्ये मु० । ४. 'प्रकृत्यन्तर-विज्ञानम्' इति वृत्तिसंमतः पाठः सं० । प्रकृतेरवरं ज्ञानं मु० । ५. पुंसोऽनित्यत्वमन्यथा मु० । ६. °योगे तु कुश° मु० । °योग्यत्वं कुश° अ० । ७. °संभवैः मु० । °संभवेः अ० । ८. इदं पद्यं नास्त्युद्धृतं मुद्रितपुस्तके सं० । ९. आहारशक्ति° क० । आहाराशक्ति° ब० । १०. °सामग्रिव° मु० । ११. इदं पूर्वार्धं नास्ति उद्धृतं मुद्रितपुस्तके सं० । १२. ज्ञानापेक्षं मु० । ज्ञात्रपेक्ष्यं ब० । १३. प्रतिभां हि भिन° अ० । १४. त्र अ० ।

न[1], नास्तीति यतो ज्ञानं नाध्यक्षा[2]द्भिन्नगोचरम् ।
अभावोऽपि[3] च नैवास्ति प्रमेयो वस्तुनः[4] पृथक् ॥ १६

प्रत्यक्षं विशदं[5] ज्ञानं त्रिधेन्द्रियम[6]निन्द्रियम् ।
योगजं चेति वैशद्यमिदन्त्वेनावभासनम् ॥ १७

जीवांशात् कर्म[7]निर्मुक्तादिन्द्रियाण्यधितिष्ठतः ।
[9]जातमिन्द्रियजं ज्ञानं विनेन्द्रियमनिन्द्रियम् ॥ १८

स्मृत्यूहादिकमित्येके प्रातिभं च तथाऽपरे ।
स्वप्नविज्ञानमित्यन्ये स्वसंवेदनमेव नः ॥ १९

मनःसंज्ञस्य जीवस्य ज्ञानावृत्ति[8]शमक्षयौ ।
यतश्चित्रौ ततो ज्ञानयौगपद्यं न दुष्यति ॥ २०

जिनस्यांशेषु सर्वेषु कर्मणः प्रक्षयेऽक्रमम् ।
ज्ञानदर्शनमन्येषां न तथेत्यागमावधः ॥ २१

तत्रेन्द्रियजमध्यक्षमेकांशव्यवसायकम् ।
वेदनं च परोक्षं च योगजं तु तदन्यथा ॥ २२

द्रव्यपर्यायसामान्यविशेषास्तस्य गोचराः ।
अविस्पष्टास्तथैव स्युरनध्यक्षस्य गोचराः ॥ २३

न जडस्यावभासोऽस्ति भेदाभेदविकल्पनात् ।
न भिन्नविषयं ज्ञानं शून्यं वा यदि वा ततः ॥ २४

ज्ञानशून्यवतो[10] नास्ति निरासेऽर्थस्य साधनम् ।
संवित्सिद्धप्रतिक्षेपे कथं स्यात् तद्व्यवस्थितिः ॥ २५

पर्यय[11]स्यन्ति पर्याया द्रव्यं द्रवति सर्वदा ।
सदृशः परिणामो यः तत् सामान्यं द्विधा स्थितम् ॥ २६

विपरीतो विशेषश्च[12] तान्युगपद् व्यवस्यति ।
तेन तत्कल्पनाज्ञानं न तु शब्दार्थयोजनात् ॥ २७

निरंशपरमाणूनामभासे स्थौल्यवेदने ।
प्रत्यक्षं कल्पनायुक्तं प्रत्यक्षेणैव सिध्यति ॥ २८

---

१. नानास्ती° मु० । २. °ध्यक्षाभिन्न° ब० । ३. अभावेऽपि मु० । ४. वस्तुतः अ० । ५. विशद-ज्ञानं अ० क० मु० । ६. मनैन्द्रि° मु० । ७. ज्ञातमि° ब० । ज्ञानमि° मु० । ८ °वृत्तिश° मु० । ९. इदं कारिकार्धं ज्ञानं ब० । मुद्रितपुस्तके उद्धृतं नास्ति सं० । १०. °ज्ञानवतोर्नास्ति अ० मु० । ११. पर्यवस° अ० मु० । १२. विशेषस्तु मु० ।

नासंयुक्तैर्न संयुक्तैर्निरंशैः क्रियते महत् ।
अयोगे प्रतिभासोऽपि संयोगेऽप्यणुमात्रकम् ॥ २९

भिन्नदेशस्वरूपाणामणूनाम[1]ग्रहे सति ।
तत्स्थौल्यं यदि कल्पेत नावभासेत किंचन ॥ ३०

नैतदस्ति यतो नास्ति स्थौल्यमेकान्ततस्ततः ।
भिन्नमस्ति समानं तु रूपमंशेन केनचित् ॥ ३१

अथास्तु युगपद्भासो द्रव्य-पर्याययोः स्फुटम् ।
तथापि कल्पना[2] नैषा शब्दोल्लेखविवर्जिता ॥ ३२

चकास्ति योजितं यत्र सोपाधिकमनेकधा ।
वस्तु तत् कल्पनाज्ञानं निरंशाप्रतिभासने ॥ ३३

भेदज्ञानात् प्रतीयन्ते यथा भेदाः परिस्फुटम् ।
तथैवाभेदविज्ञानादभेदस्य व्यवस्थितिः ॥ ३४

घटमौलिसुवर्णेषु बुद्धिर्भेदावभासिनी ।
संविन्निष्ठा हि भावानां स्थितिः काऽत्र विरुद्धता ॥ ३५

प्रतीतेस्तु फलं नान्यत् प्रमाणं न ततः परम् ।
अताद्रूप्येऽपि योग्यत्वान्नियतार्थस्य वेद[3]कम् ॥ ३६

॥ प्र[4]त्यक्षपरिच्छेदः ॥

## ३. अनुमानपरिच्छेदः ।

पूर्वमेव परोक्षस्य विषयः प्रतिपादितः ।
प्रमाणफलसद्भावो ज्ञेयः प्रत्यक्षवद्बुधैः ॥ ३७

परोक्षं द्विविधं प्राहुर्लिङ्ग-शब्दसमुद्भवम् ।
लैङ्गिकात् प्रत्यभिज्ञादि भिन्नमन्ये प्रचक्षते ॥ ३८

---

१. ॰णूनां संग्रहे मु॰ । २. कल्पमानैषा ब॰ । ३. वेदनम् ब॰ । ४. अ॰ प्रतौ नास्ति ।

परोपदेशजं श्रौतं मतिं शेषं जगुर्जिनाः ।
परोक्षं प्रत्यभिज्ञादि त्रिधा श्रौतं न युक्तिमत् ॥ ३९

अन्यथेहादिकं सर्वं श्रौतमेवं[1] प्रसज्यते ।
यच्चोक्तं नागमापेक्षं मानं तज्जाड्यजृम्भितम् ॥ ४०

लिङ्गाल्लिङ्गिनि यज् ज्ञानमनुमानं तदेकधा ।
प्रत्येति हि यथा वादी प्रतिवाद्यपि तत् तथा ॥ ४१

उपचारेण चेत् तत् स्यादनवस्था प्रसज्यते ।
अन्यस्यासाधनादाह लक्षणे हेतु-साध्ययोः ॥ ४२

'अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ।
नान्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥' ४३

कार्यकारणसद्भावस्तादात्म्यं चेत् प्रतीयते ।
प्रत्यक्षपूर्वकात् तर्कात् कथं नानुपपन्नता ॥ ४४

व्यतिरेको[2]ऽनुपपत्तिश्चेदन्वयनिबन्धनम्[3] ।
कथं[4] सत्त्वं विना तेन क्षणिकत्वप्रसाधकम्[5] ॥ ४५

विनाप्यन्वयमात्मादौ प्राणादिः[6] साधनं यदा ।
तदा स्यान्नान्वयापेक्षा हेतोः साध्यस्य साधने ॥ ४६

संबन्धिभ्यां विभिन्नश्चेत् संबन्धः स्यान्न लोष्टवत् ।
अनवस्था प्रसज्येत तदन्यपरिकल्पने ॥ ४७

कृत्तिकोदयपूरादेः कालादिपरिकल्पनात् ।
यदि स्यात् पक्षधर्मत्वं चाक्षुषत्वं न किं ध्वनौ ॥ ४८

समानपरिणामस्य द्वयस्य नियमग्रहे ।
नाशक्तिर्न च वैफल्यं साधनस्य प्रसज्यते ॥ ४९

इष्टं साधयितुं शक्यं वादिना साध्यमन्यथा ।
साध्याभासम[7]शक्यत्वात् साधनागोचरत्वतः ॥ ५०

यथा सर्वगमध्यक्षं बहिरन्तरनात्मकम् ।
नित्यमेकान्ततः सत्त्वात् धर्मः प्रेत्या[8]सुखप्रदः ॥ ५१

रूपाद्यसिद्धितोऽसिद्धो विरुद्धोऽनुपपत्तिमान् ।
साध्याभावं विना हेतुः व्यभिचारी विपक्षगः ॥ ५२

---

१. °मेव प्र० मु० । २. व्यतिरेकोऽनु° ब० अ० । ३. बन्धना अ० क० । ४. कथं संबंधिना तेन ब० क० । ५. °साधनम् ब० । ६. प्राणादि सा° मु० । ७. °समसाध्यत्वात् मु० । ८. प्रेत्यदुःखप्रदः मु० ।

[1]असिद्धः सिद्धसेनस्य विरुद्धो मल्लवादिनः ।
द्वेधा समन्तभद्रस्य हेतुरेकान्तसाधने[2] ॥ ५३

॥ अनुमानपरिच्छेदः ॥

## ४. आगमपरिच्छेदः ।

ताप-च्छेद-कषैः शुद्धं वचनं त्वागमं विदुः ।
तापो ह्याप्तप्रणीतत्वमाप्तो रागादिसंक्षयात् ॥ ५४

कषः पूर्वापराघातश्छेदो मानसमन्वयः । ५५

'विधिनियमभङ्गवृत्तिव्यतिरिक्तत्वादनर्थकवचोवत् ।
जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम् ॥' ५६

॥ आगमपरिच्छेदः ॥

[3]सूत्रं सूत्रकृता कृतं मुकुलितं सद्भूरिबीजैर्घनम्,
तद्वाचैः[4] किल वार्तिकं मृदु मया प्रोक्तं शिशूनां कृते ।
भानोर्यत्किरणैर्विकासि कमलं नेन्दोः करैस्तत् तथा,
यद्वेन्दूदयतो विकासि जलजं [5]भानोर्न तस्मिन् गतिः ॥ ५७

[ समाप्तमिदं न्यायावतारसूत्रवार्तिकम् । ]



१. असिद्धिः अ० । २. इदं पद्यं मुद्रिते उद्धृतं नास्ति सं० । ३. इदं पद्यं मुद्रितपुस्तके वृत्तेः प्रथमपद्यरूपेण वर्तते सं० । ४. तद्वाचे किल ब० । तद्बोध किल क० । ५. भानोर्गभस्तेर्न तत् मु० ।

श्रीशान्त्याचार्यविरचिता

# न्यायावतारसूत्रवार्तिकवृत्तिः ।



## १. सामान्यलक्षणपरिच्छेदः ।

**हिताहितार्थसंप्राप्ति-त्यागयोर्यन्निबन्धनम् ।**
**तत् प्रमाणं प्रवक्ष्यामि सिद्धसेनार्कसूत्रितम् ॥ १ ॥**

ॐ

नमः स्वतःप्रमाणाय वचःप्रामाण्यहेतवे ।
जिनाय पञ्चरूपेण [1]प्रत्यक्षात् पक्षदेशिने ॥

अन्यार्थव[2]र्त्तेति न वाच्यमेतत् सामान्यमन्येन ततोऽन्यथा तु ।
[3]व्युत्पादितं तत्र व[4]दन्तु सन्तो निर्मत्सरा [5]एव भवन्तु यद्वा ॥

§ १. हिताहितेत्यादिना अभिधेयप्रयोजनमभिधीयते । तदभिधानात् संबन्धाभिधेय-प्रयोजनान्तराण्यपि अभिहितानि । तथाहि – प्रमाणम् अभिधेयम् । प्रयोजनं व्युत्पत्तिः व्युत्पादकत्वं च शि[6]ष्याचार्ययोः, परं तु निःश्रेयसमिति । संबन्धस्तु उपायोपेयलक्षण इति ।

अभिधेयप्रयोजनाभिधानम् ।

§ २. तच्च श्रो[7]तृप्रवृत्त्यर्थमिति कश्चित् । तदुक्तम् –

प्रयोजनाभिधानस्य किं प्रयोजनमिति चर्चा ।

"अनिर्दिष्टफलं सर्वं न प्रेक्षापूर्वकारिभिः ।
शास्त्रमाद्रियते तेन वाच्यमग्रे प्रयोजनम् ॥"

§ ३. तदेतदन्ये न क्षमन्ते । यतो यथा ते प्रेक्षापूर्वकारितया फलमभिलषन्तः प्रवर्तन्ते, तथा प्रेक्षापूर्वकारितयैव प्रमाणात् प्रवर्तन्ते । अप्रमाणात् प्रवर्तमानानां प्रेक्षा[8]वत्तैव न स्यात् । न च शब्दानां बहिरर्थे प्रत्यक्षवत् प्रामाण्यम् । नापि प्रदीपवत् असंबद्धानामपि प्रकाश-

१. °पेण नमः प्रत्यक्षदेशिने मु० । २. °र्थवर्त्तीति ब० । ३. उत्पादितं ब० अ० क० । ४. भवन्तु मु० । ५. °सरा यच्च भवेदबुद्ध्वा मु० । ६. शिष्टाचार्य° मु० । ७. श्रोतृजनप्र° क० मु० । ८. प्रेक्षावत्त्वं न मु० ।

कत्वम् । किन्तु संबन्धबलात् । न च तेषां बहिरर्थैः संबन्धोऽस्ति । विवक्षायां संबन्धेऽपि-न ये यथा यमर्थं विवक्षन्ति ते तथैव तमर्थं प्रतिपादयन्तीति, विसंवादना[1]भिप्रायाणामन्यथाभिधाय अन्यथा प्रवृत्तिदर्शनात् इति[2] कथं प्रेक्षावतां प्रवृत्त्यर्थमादिवाक्यमिति ? ।

§ ४. तत्रा[3]क्षेपपरिहारः । 'निष्फलमिदं शास्त्रं काकदन्तपरीक्षावत् । अश[4]क्यानुष्ठानं वा ज्वरहरतक्षकचूडारत्नालङ्कारोपदेशवत् । अनभिमतं वा मातृविवाहोपदेशवत् । अतो वा शास्त्रात् लघुतर उपायः प्रमाणव्युत्पत्तेः । अनुपाय एव वा इदम्'–इत्यनर्थसंशयनिवृत्त्यर्थम्, अर्थसंशयोत्पादनार्थं प्रेक्षावताम[5]ादिवाक्यमिति । ते हि [6]कृषीवलादय इव अर्थसंशयात् प्रवर्तन्त इति ।

§ ५. एतदन्ये दूषयन्ति । युक्ता [6]कृषीवलादीनाम् अवधृतबीजाबीजस्वभावानाम् उपायनिश्चये सति उपेये [7]संदेहेऽपि प्रवृत्तिरिति । अत्र तु उपायनिश्चयाभावात् कथं प्रवृत्तिरिति ? । साधकबाधकप्रमाणाभावाच्चार्थसंशयस्या[8]निवारितत्वात् । तथा, प्रमाणव्युत्पादकानां च शास्त्रान्तराणां दर्शनात्–'किं अस्य प्रमाणव्युत्पत्तिः प्रयोजनम्, उतान्यद्' इति प्राक्प्रवर्तमानः संशयः केन विनिवा[9]र्येत । तस्मात्–'प्रेक्षावतां प्रवृत्तिः प्रयोजनवत्तया व्याप्तेति निःप्रयोजनमिदं शास्त्रं नारब्धव्यम्' इति व्यापकानुपलब्ध्या प्रत्यवतिष्ठमानस्य परस्यासिद्धतोद्भावनम् अनेन क्रियत इति । न चैतद् वाच्यम्–अप्रमाणकेनानेन कथमेतदपि क्रियत इति । यतः अप्रमाणकेनैव वचसा परेण व्यापकानुपलब्धिरुपन्यस्ता । सा च वचनमात्रेणैवासिद्धोद्भाव्यत इति ।

§ ६. एतदप्यपरे दूषयन्ति । यतो यथाऽसिद्धसाधनमादाय वादी प्रत्यवतिष्ठमानो निगृह्यते तथाऽसद्दूषणवादी प्रतिवाद्यपीति । अथ अग्रे तस्यार्थस्य शास्त्रेण समर्थनात् न दोष इति । यद्येवं तर्हि आदिवाक्येन शास्त्रार्थः प्रतिज्ञायत इति युक्तम् ।

§ ७. एतदप्ययुक्तम् । यतः शास्त्रार्थोऽनेन किं प्रमाणभूतेन प्रतिज्ञायते, किंवाऽप्रमाणभूतेनेति ? । तत्र यदि प्रतिज्ञैव प्रमाणभूता सा[10]ध्यार्थं प्रतिपादयति, किमङ्ग हेतूपन्यासेन ? । अथ अप्रमाणभूता, तर्हि तदेव दूषणमिति । तस्मात् वचनस्य प्रत्यक्षादिवत् प्रमाणभूतत्वात् ततः प्रेक्षावतां फलार्थिनां युक्ता प्रवृत्तिरिति युक्तम् । अथ कस्यचिद्वाक्यस्य–'नद्यास्तीरे शर्कराशकटं पर्यस्तम्'–इत्यादि[11]कस्य मिथ्यारूपस्योपलब्धेः कथं प्रेक्षावतां ततः प्रवृत्तिरित्यभिधीयते; तर्हि मरुमरीचिकाजलोल्लेखिनो ज्ञानस्य मिथ्यात्वोपलब्धेः कथं प्रेक्षावतां प्रत्यक्षा[12]देरपि प्रवृत्तिरिति ? । अथ मिथ्येतरयोः संवादासंवादलक्षणो विशेषोऽस्तीत्युच्यते; अत्रापि आप्तप्रणी[13]तत्वानाप्तप्रणीतत्वलक्षणोऽस्तीति वक्ष्या[14]मः । नच शब्दानां संबन्धबलादर्थप्रतिपादकत्वम्, किन्तु विवक्षावशात् । सा च पुरुषसत्य[15]त्वासत्यत्वेन सत्येतरा भवन्ती शब्दानां सत्य[16]त्वासत्यत्वं ख्यापयतीति पुरुषप्रामाण्यमेव दर्पणसंक्रा[17]न्तं प्रतिबिम्बमिव शब्देष्वभिधीयत

१. विसंवादेनाभि° मु० । २. इति तत्राक्षेपपरिहारः अ० । ३. तत्र निष्फलमिदं ब० क० मु० । ४. असाध्यानु° मु० । ५. °तामादौ वाच्य° मु० । ६. कृषिवला° अ० ब० । ७. उपेयसंदे° क० मु० । ८. °स्य निवा° मु० क० । ९. विनिवार्यते अ० । १०. साध्यमर्थम् मु० क० । ११. इत्यादिवाक्यस्य अ० । १२. प्रत्यक्षादपि मु० । १३. °प्रणीतत्वाऽप्रणीतत्वलक्ष° क० मु० । १४. वक्षामः क० । १५. °सत्यासत्यत्वेन ब० । °सत्यासत्येन क० मु० । १६. सत्यतासत्यत्वं मु० क० । १७. संक्रान्तप्र° क० ।

इति । अथेष्टोऽयमर्थः शंक्येत ज्ञातुम् अतिशयो [1] यदीत्यभिधीयते । एतत् पश्चात् प्रतिपादयिष्यामः ।

§ ८. हितोऽपि कालान्तरेण ज्वरितादेरिव दध्यादिकं यद्यप्यहितो भवति, तथापि इष्टत्वाद्धितः । अहितोऽप्येवम् । उपेक्षणीयोऽपि प्रमाणाविषयत्वात्, यदि वा अनुपादेयत्वात् सोऽप्यहित एव । तयोर्हिताहितयोः प्राप्ति-त्यागौ यतः प्रमाणनिबन्धनौ अतः तत् प्रकर्षेण—संख्या-लक्षण-गोचर-फलविप्रतिपत्तिनिराकरणरूपेण, स्वतः परतः प्रामाण्यलक्षणेन वा, प्रत्यक्ष-परोक्षरूपेण वा वक्ष्यामः ।

प्रथमकारिकार्थः

§ ९. नन्वतीत-वर्तमानयोरुपयुक्तफलत्वेन प्रवृत्त्यविषयत्वात्, भाविनस्त्वर्थक्रियाकारिणः [3] प्रमाणागोचरत्वात्, भाविनि प्रमाणाभावादिति । तत् कथं हिताहितयोः प्राप्ति-त्यागौ प्रमाणनिबन्धनाविति ? । नैष दोषः, अतीत [4]-वर्तमान-भविष्यतां कथञ्चिदेकत्वस्य प्रतिपादयिष्यमाणत्वादिति ।

§ १०. यदि वा हितो मोक्षः, अहितः संसारः, तयोः प्राप्ति-त्यागौ सर्वज्ञनिबन्धनौ, अतस्तमेव भगवन्तं प्रमाणभूतं प्रतिपादयिष्याम इति ।

§ ११. तत् किं स्वातन्त्र्येण ? । न इत्याह—सिद्धसेनार्कसूत्रितम्—इति । सिद्धसेन एव जगज्जन्तुमनोमोहसंततितामसीतमःसमूहापोहकारित्वात् अर्क इव अर्कः, तेन सूत्रितम् । तत्सूत्राणामतिगम्भीरार्थत्वात् किञ्चिल्लेशतो यथाबोधं व्याख्यास्यामः [ १ ] ।

§ १. तदेवाह—प्रमाणम्—इत्यादि ।

**प्रमाणं स्वपराभासि ज्ञानं बाधविवर्जितम् ।**
**प्रत्यक्षं च परोक्षं च द्विधा मेयविनिश्चयात् ॥ २ ॥**

—इति शास्त्रार्थसंग्रहः ॥

§ २. अथेदं सूत्रं—किं सकलमेव शास्त्रार्थं प्रतिपादयति, किं वा एकदेशमिति ? । न तावत् सकलम्, फलप्रमाणाभासताद्यप्रतिपत्तेः । नाप्येकदेशम्, सकलप्रमाणलक्षणप्रतिपादनात्—इत्याशङ्क्याह—शास्त्रार्थसंग्रह इति । तथाहि—प्रमाणं सामान्यविशेषरूपतयाऽनेन संगृह्यत इति । स एव च [5] शास्त्रार्थ इति । संग्रहस्तु विस्तरविरोधीत्यन्वयवेना [6]प्रतीतावपि न दोषः । यल्लक्षणं च यद् वस्तु येषां प्रतिपाद्यते तल्लक्षणविकलं तद् वस्तु तदाभासतया ते स्वयमेव प्रतिपद्यन्त इति किं प्रमाणाभासप्रतिपादनेनेति ? । निश्चयात्मकप्रमाणप्रतिपादनात् तद्रूपस्य फलस्य प्रतीतेः किं तदुपन्यासेन ? ।

शास्त्रार्थसंग्रह इति पदस्य तात्पर्यार्थः

§ ३. तत्र सूत्रपूर्वार्धेन प्रमाणसामान्यम्, उत्तरार्धेन तद्विशेषोऽभिहित इति समुदायार्थः । अवयवार्थं तु सकलमेव शास्त्रमभिधास्यतीति ।

§ ४. तत्र विधिवाक्ये लक्ष्यानुवादेन लक्षणं विधीयते । तदुत्तरकालं तु तत्र तत्र लक्ष-

---

१. शब्दे तज्ज्ञा° मु० । २. यदित्य° क० मु० । ३. °रिणः प्रमाणाभावादिति अ० । ४. अतीतानागतवर्तमानानां मु० । ५. एव शास्त्रा° मु० । ६. साकल्येन अ-टि० ।

णानुवादेन लक्ष्यमिति । तत्र प्रमाणम् इति लक्ष्यनिर्देशः । शेषं लक्षणमिति । नचैतद्वाच्यम्—तादात्म्यात् लक्षणासिद्धौ लक्ष्यस्याप्यसिद्धिः, तत्सिद्धौ वा तस्यापीति । यस्मात् यदेतत् प्रमाणशब्दवाच्यं वस्तु सर्वेषां प्रसिद्धं, तदनुवादेन विप्रतिपत्त्याऽसिद्धं लक्षणं विधीयत इति । [ २ ]

§ १. तत्र ज्ञानं प्रमाणम्, न सन्निकर्षादि । तदाह—सन्निकर्षादिकम्—इत्यादि

**सन्निकर्षादिकं नैव प्रमाणं तदसंभवात् ।**
**अवभासो व्यवसायो न तु ग्रहणमात्रकम् ॥ ३ ॥**

§ २. तदसंभवादिति । तस्यैव सन्निकर्षस्यैवासंभवात् । यदि वा तस्य प्रमाणत्वस्यासंभवात् । तथाहि—न सन्निहितवस्तुद्वयव्यतिरिक्तः कश्चिद् दण्डायमानः संयोगः प्रत्यक्षेणोपलभ्यते । 'द्वयोरङ्गुल्योरयं संयोगः' इति प्रतीतेः कथं नोपलभ्यत इति चेत्; 'तासामङ्गुलीनाम् अयं मुष्टिः' इति किं न प्रतीतिः ? । तत्रापि संयोगविशेषो निमित्तमिति चेत्; न, 'संयोगविशेषः' इति स्यात्, न 'मुष्टिः' इति । न हि नीले 'पीतम्' इति प्रत्ययो भवति । अथ संकेतवशात् तथाप्रतीतिः । तर्हि पुरुषेच्छानिर्मितसंकेतवशात् प्रवर्तमाना एवंविधाः शब्दविकल्पा न किञ्चिद्वस्तुभूतं निमित्तमवलम्बन्त इति नैतद्वशाद् वस्तुव्यवस्था विदुषामुपपन्नेति । अन्यथा 'इदं नगरम्' इत्यादिष्वपि निमित्तमभिधानीयम् । तत्र न तावत् नगरं द्रव्यम्, गृहैरसंयुक्तैर्विजातीयैश्च तस्यानारम्भात् । कतिपयगृहाणामस्ति संयोग इति चेत्; तर्हि किं संयोगेष्वपि संयोगः ? । यतो गृहाण्यपि न द्रव्याणि, विजातीयैः काष्ठेष्टकादिभिस्तदनारम्भात् । सत्ता नगरमिति चेत्; किं नाटव्यां तत्प्रत्ययमुत्पादयति ? । गृहैर्विशेषितेति चेत्; न, कूटस्थनित्याया विशेषणाऽयोगात् । अकिञ्चित्करस्याविशेषणत्वात् । किञ्चित्करत्वे नित्यताहानेः । षण्णगरीत्यत्र च समूहार्थो वाच्यः । सत्ताया एकरूपत्वेन समूहार्थत्वानुपपत्तेः । सत्तां च निषेत्स्यामः । गृहाणां संयोगरूपाणां संयोगाभावात्, गुणैर्द्रव्यानारम्भाच्चेति न कश्चित् समूहार्थः । तन्नैवंविधाः प्रत्यया वस्तु व्यवस्थापयन्तीति न संयोगः प्रत्यक्षगम्यः ।

सन्निहितवस्तुद्वयव्यतिरिक्तस्य सन्निकर्षस्य निषेधः ।

§ ३. अथानुमानात् तत्प्रतीतिः । तथा हि—क्षिति-बीज-सलिलादयः सर्वे विरलदेशस्थाः अन्यनिमित्तापेक्षाः, सामर्थ्ये सति कार्यानुत्पादकत्वात् । यद्यत् सामर्थ्ये सति कार्यानुत्पादकम्, तत्तद् अन्यापेक्षं दृष्टम् । यथा त एव बीजादयोऽन्यतरविकला । नोत्पादयन्ति च समर्था अपि विरलदेशस्थाः सर्वे [१०]बीजादयोऽङ्कुरमिति । तस्मादन्यनिमित्तापेक्षाः । यत् तन्निमित्तं स संयोग इति ।

§ ४. ननु बीजादयो दूरदेशस्था अपि सहकारिणं किं न संयोगमुपपा(मुत्पा)दयन्ति ? । तस्याभावादिति चेत् । स किं न भवति ? । कारणाभावात् । किं तस्य कारणम् ? । त एव । किं

---

१. सर्वेषु मु० । २. °र्षस्याऽसंभ° ब० मु० क० । ३. तयोर° मु० ब० क० । ४. तत्रापि न संयो° क० । ५. °स्तुकृतनिमि° मु० । ६. तत्तु संयो° मु० । ७. काष्ठेष्टिका° अ० ब० । ८. तदारम्भात् मु० क० । ९. °हार्थः तेनैवंविधाः क० मु० । १०. सर्वे अङ्कुर° मु० ।

न दूरस्थाः ?। संयोगाभावात्। तत् किं संयोगेऽपि संयोगः ?। तत्राप्यपर इत्यनवस्था। अथ योग्यदेशस्थाः संयोगमन्तरेणापि संयोगमुत्पादयन्ति। कार्येण किमेषामपराद्धं यत्तन्नोत्पादयन्ति ?।

§५. अपि च, किमेषां दूरस्थानां[1] कार्यानुत्पादकत्वं संयोगापेक्षया व्याप्तम्, प्रत्यक्षेण प्रतीयते, किं वाऽनुमानेन ?। न तावत् प्रत्यक्षेण, तेन तस्याप्रतीते[2]रित्युक्तम्। नाप्यनुमानेन, अनवस्थाप्रसंगात्। अथ निमित्तमात्रा[3]पेक्षया व्याप्तं प्रतीयते। तर्हि योग्यदेशादिविशिष्टं[4] जननसामर्थ्यमात्मपर्यायमपेक्षमाणास्ते कार्यं न कुर्वन्तीति, न पुनः संयोगमिति। तन्नास्ति कश्चित् सन्निकर्ष इति।

§६. भवतु वा, तथापि तस्य प्रमाणत्वं न संभवति। तथा हि–किमसौ स्वयमेव प्रमाणम्, किं[5] वा प्रमाणजननादिति। स्वयम[6]पि किं ज्ञातोऽर्थं ज्ञापयति, अज्ञातो वा ?। ज्ञातोऽपि किं प्रत्यक्षेण, किं वाऽनुमानेन ?। प्रत्यक्षेणापि किं सामान्यरूपतया, किं वा विशेषरूपतया ?। यदि सामान्यरूपतया; न प्रतिकर्मव्यवस्थां कुर्यात्। विशेषरूपतयाऽपि तज्ज्ञानं कर्मणि ज्ञाते स्यात्। नहि नीलाज्ञाने 'नीलस्यायं सन्निकर्षः' इति ज्ञानं भवति। नीलज्ञानं किं तत एव सन्निकर्षात्, अथान्यतः ?। यदि तत एव तदा इतरेतराश्रयत्वम्, नीले ज्ञाते तज्ज्ञानम्, तज्ज्ञाना[7]च्च नीलज्ञानमिति। अथान्यतः सन्निकर्षात्। तदा तदेव चोद्यम्, तदेवोत्तरमिति, अनवस्था च। अथान्यतः प्रमाणान्नीलज्ञानम्। तर्हि किमन्तर्गडुना तेन ?। तदर्थं हि स परि[8]कल्प्यत इति। किञ्च। स्वसंवेदनप्रत्यक्षं नाभ्युपगम्यते। तत्परिज्ञानं पुनरन्येन्द्रियसन्निकर्षेण। तस्याप्यन्येनेत्यनवस्था। न च सन्निकर्षे सन्निकर्षो, निर्गुणा गुणा इत्यभ्युपगमात्।

सन्निकर्षप्रामाण्यनिषेधः।

§७. अथ संयुक्तसमवायात् तस्य ग्रहणम्। तथाहि–संयोगात् द्रव्यग्रहणम्। संयुक्तसमवायात् गुणग्रहणम्। संयुक्तसमवेतसमवायात् गुणत्वग्रहणम्। समवाया[10]त् शब्दग्रहणम्। समवेतसमवायात् शब्दत्वग्रहणम्[11]। विशेषणविशेष्यभावात् अभावग्रहणमिति षोढा सन्निकर्ष इति।

§८. तदसत्। यतश्चक्षुर्नीलसन्निकर्षः किं स एव यः संयुक्तसमवायाद् गृह्यते, किं वा सन्निकर्षान्तरमिति ?। यदि स एव। तन्न। यतो न स्वयमेव स्वं ज्ञापयति, स्वसंवेदनप्रसङ्गात्। सन्निकर्षान्तर[12]कल्पनेऽनवस्था। तन्न प्रत्यक्षप्रतीतः सन्निकर्षः। अनुमानं तु तस्मिन् प्रागेव निरासी[13]ति न पुनरुच्यते। तन्न ज्ञातो ज्ञापयति।

§९. अज्ञातस्यार्थज्ञापकत्वे शशविषाणस्यापि प्रसंगः। असमवायात् न शशविषाणमिति चेत्; किं न रूपादि ?। अज्ञापकत्वान्नेति चेत्; न, तत्र समवाय एव सन्निकर्षस्यापि ज्ञाप-

१. दूरदेशस्थानां मु०। २. प्रतीतिरि° क० मु०। ३. निमित्तमात्रेण व्या° ब०। ४. °शिष्टं सामार्थ्यमात्रपर्या° मु०। ५. किं प्रमा° अ०। ६. स्वयमेव किं मु०। ७. °ज्ञानान्नील° अ० ब०। ८. परिकल्पत् अ०। ९. किं वा स्व° मु० क०। १०. °याच्च शब्द° मु०। ११. °हणमिति। विशे° ब० मु० क०। १२. °न्तरपरिकल्प° क० मु०। १३. निरासीदिति क० मु०।

कत्वम् । तच्च रूपादेरप्यस्तीति । वस्तुस्वभावैरुत्तरं वाच्यमिति चेत्; तदेतत् पादप्रसारणमिति । तन्नाज्ञातस्यापि ज्ञापकत्वम् ।

§ १०. अथ प्रमाणजननात् सन्निकर्षादिः प्रमाणम् । नन्वौपचारिकमिदं स्यात् । किञ्च, इदं लक्षणमतिव्यापकम्, अव्यापकं च स्यात्[1] । तथाहि—आत्मनोऽपि प्रमाणजनकत्वात् प्रमाणत्वं स्यात् । ईश्वरस्य च इन्द्रियादिसन्निकर्षाभावात् प्रामाण्यं न स्यात् । अथ ईश्वरस्यापि ज्ञेयार्थैः सहास्ति सन्निकर्षः । कथमविद्यमानैरतीतानागतैरिति ? । मा भूदिति चेत्; कथमतीतानागतज्ञः ? । अथ नित्यं तस्य प्रमाणम्[2] । तर्हि न सन्निकर्षस्तत्रेत्यव्यापकम् ।

§ ११. अथोत्सर्गोऽपवादेन प्रमातृत्वेन बाध्यत इति नातिव्याप्तिः । किं न प्रमेयत्वेन सन्निकर्षादौ ? । अपि च कारणत्वाविशेषेऽपि 'इदं प्रमाणम्' 'अयं प्रमाता' इति विशेषो वक्तव्यः । अथ यत्र प्रमाणं समवेतं स प्रमाता, तदितरत् प्रमाणमिति । नैतदस्ति । यतः समवायस्य व्यापित्व-नित्यत्वोपगमात् सर्वप्रमाणैः सर्वे प्रमातारः प्रसज्येरन् । समवायिविशेषाद् विशेषोपगमे नित्यत्वक्षतिः ।

§ १२. न च कञ्चित्समवायं प्रत्यक्षात् प्रतीमः । अनुमानतस्तत्प्रतीतिरिति चेत्—तथाहि—

समवायपदार्थस्य निषेधः । इहेतिप्रत्ययः संबन्धनिबन्धनः, अबाधितेह[3]प्रत्ययत्वात् । यो योऽबाधितेहप्रत्ययः स स संबन्धनिबन्धनः, यथा 'इह कुण्डे दधि' इति प्रत्ययः । तथा[4] च 'इह तन्तुषु पटः' इति प्रत्ययः । तस्मात् संबन्धनिबन्धन इति । 'इह ग्रामे वृक्षाः' इति भ्रान्तप्रत्ययनिवृत्त्यर्थमबाधितग्रहणम् । तथा सामान्येन संबन्धनिबन्धनत्वे साध्ये नाऽन्वय[5]दोषः । सामर्थ्याच्च विशेषसिद्धिरिति । उक्तमत्र—एवंविधानां कल्पना[6]ज्ञानानां वस्तुव्यवस्थापकत्वाभावादिति । न चासंबद्ध[7]लिङ्गादुदयतामनुमानानां प्रामाण्यमुपपत्तिमत् । अन्यथा, 'स श्यामः, तत्पुत्र[8]त्वात्, परिदृश्यमान[9]तत्पुत्रवद्' इत्यादीनां प्रामाण्यं स्यात् । बाधितत्वान्नेति चेत्; अत्र किं न बाधा ? । काऽसाविति चेत्; इयमेव तावद् यद[10]नियमतो लिङ्गादुत्पत्तिरिति ।

§ १३. तथा, अयुतसिद्धानामाधाराधेयभूतानां स व्यावर्ण्यत इति । तत्र अयुतसिद्धिं-( द्धिः ) किं देशैकत्वेन, किम् एककालत्वेन, अथ स्वरूपैकत्वेनेति ? । तत्र न तावद्देशैकत्वेन । न हि य एव तन्तूनां देशः, स एव पटस्यापि । तथाहि—तन्तवः स्वारम्भकेष्वंशुषु स्थिताः, पटस्तु तेष्विति कथं देशैकत्वम् ? । आकाशैकत्वे सर्वेषामेकदेशत्वं स्यात् । न च तदेकदेश[11]त्वेन एकदेशत्वम्, निर्देशत्वात् नभसः । कल्पितास्तस्य त इति चेत्; तत् किं कल्पनातो वस्तुव्यवस्था ? । तन्न प्रथमः पक्षः । नापि कालैकत्वेन । नहि य एव तन्तूनां कालः, स एव पटस्यापि, कार्यकारणभावाभावप्रसङ्गात् । कारणेन हि कार्यस्य समानकालत्वमन्यतः सिद्धस्य स्यात् । ततश्च किं सिद्धोपस्थायिना कारणेन ? । तन्न कालैकत्वेनाप्ययुतसिद्धिः । स्वरू[12]पैकत्वे किं कुत्र समवैतु ? । तन्नायुतसिद्धिः ।

---

१. च तथाहि – अ० ब० । २. प्रामाण्यम् क० मु० । ३. °धितेहेतिप्रत्ययत्वात् क० मु० । ४. यथा मु० । ५. नानन्वयदोषः अ० । ६. °धानां कुकल्प° मु० । ७. चासंबन्धलि° अ० ब० क० । ८. त्त्पुत्र° मु० क० । ९. °मानपुत्र° ब० क० । °मानत्वात्पुत्र° मु० । १०. यद्विनिय° मु० । ११. तदेकदेशदेशत्वेन मु० । १२. स्वरूपेणैकत्वे क० ।

§१४. आधाराधेयभावोऽप्यात्म-ज्ञानयोर्नोपपद्यते। यथा चाधाराधेयभावो नास्ति तथा नास्तिकनिराकृतावभिधास्यते[1]। यथा चाप्रच्युतानुत्पन्नस्थिरैकरूपतया नित्यः समवायोऽन्यो वा न संभवति तथा यथावसरं प्रतिपादयिष्यते। तन्न कश्चित्समवायः। तदभावात् नात्मनो विशेषः। तस्मात् प्रमाणजननात् सोऽपि प्रमाणं स्यात्, न वाऽन्यदपीति। तन्न सन्निकर्षः।

§१५. आदिग्रहणात् सामग्र्येकदेशश्चक्षुरादिर्न[2] प्रमाणम्[3], किन्तु ज्ञानमिति।

प्रामाण्य-विचारः

§१६. अथ किमिदं ज्ञानस्य प्रामाण्यम्?। किम् अर्थग्रहणम्, उताऽगृहीतार्थप्रापणम्[4], आहोश्विद् गृहीतार्थप्रापणमिति?। तत्रार्थग्रहणम्, अगृहीतार्थप्रापणं च मिथ्याज्ञानेऽप्यस्तीति तस्यापि प्रामाण्यं स्यात्। गृहीतार्थप्रापणं तु क्षणिकपर्यायवादिनो न संभवति। तथाहि—यः पर्यायो गृहीतः नासौ प्राप्यते। यस्तु प्राप्यते न स गृहीत इति। अथ वस्तुमात्रं गृहीतं प्राप्यते। तदपि 'सर्वमेकं कथञ्चित्' इति वादिनो मिथ्याज्ञानेऽप्यस्तीति। तस्यापि प्रामाण्यं स्यादित्याशङ्क्याह—'अवभासो व्यवसायो न तु ग्रहणमात्रकम्' इति। तेन यद्यपि मरुमरीचिकानिकुरुम्बचुम्बिज्ञानम्[5][6] 'इदम्' इत्यंशेन मरीचिकास्वरूपमुल्लिखदुत्पद्यते, तथापि विपर्ययाक्रान्तत्वात् न प्रमाणमिति।

§१७. अथ कोऽयं व्यवसायः?। किमर्थग्रहणम्, उताग्रहणमिति?। यदि ग्रहणम्; तदा तदेव दूषणम्। अग्रहणे कथं प्रामाण्यमिति?। अत्रोच्यते। सदसद्व्यवहारजननसामर्थ्यं व्यवसायः। तथाहि—सदितिज्ञानाभिधानप्रवृत्तिलक्षणः सद्व्यवहारः। नास्तीत्यादिलक्षणश्च असद्व्यवहारः। तयोर्जननसामर्थ्यं व्यवसायं ब्रुवते। तेन मिथ्याज्ञाने तन्नास्तीति न तस्य प्रामाण्यमिति। [३]

स्वसंवेदन-वादः।

§१. भवतु ज्ञानं प्रमाणम्। तत् पुनः केन वेद्यते? किं स्वयमेव, किं वा ज्ञानान्तरेणेति?। यदि ज्ञानान्तरेण; तदाऽभ्युपेतहानिः। अथ स्वयम्। तदपि नास्ति। यतः—

"यद्यर्थवेदनं ज्ञानमात्मनोऽपि प्रकल्प्यते।
सुशिक्षितो बटुः स्कन्धं स्वमारोहतु दासवत्॥"

तथाहि—वेद्यतेऽनेनेति वेदनम्, वेद्यते तदिति वेद्यमिति विरुद्धयोः करणकर्मणोः कथमेकत्र सद्भाव इति?। कथमात्मानमात्मना आत्मा[7] वेत्तीति व्यपदेशः?। तस्मात् कल्पिताः क्रियाकारकव्यपदेशाः प्रवर्तमाना न वस्तु[8] विरुन्धन्ति[9]। अपि च—प्रमाणसिद्धे वस्तुनि को विरोधः?। एतदेवाह—

**दीपवन्नोपपद्येत बाह्यवस्तुप्रकाशकम्।**
**अनात्मवेदने ज्ञाने जगदान्ध्यं प्रसज्यते॥ ४॥**
**प्रत्यक्षं च परोक्षं च ग्राहकं नोपपत्तिमत्।**

---

१. नास्तिकमतनिरा° मु०। २. सामग्र्यैकदे° अ० क० मु०। ३. °रादि प्रमा° ब०। नेतिशेषः—ब-टि०। ४. उतार्थप्रापण° ब० क०। ५. °चिकासु उदककुम्बि मु०। ६. °चुम्बिविज्ञानं ब०। ७. °त्मना असौ वेत्ती° मु० क०। ८. वस्तुं वि° मु० क०। ९. वस्तु विरुन्धति अ०। वस्तु निरु° ब०।

§ २. प्रदीपवदिति सजातीयानपेक्षत्वेन दृष्टान्तः । तथाहि — ज्ञानम् आत्मप्रकाशकम्, अर्थप्रकाशकत्वान्यथानुपपत्तेः प्रदीपवत् । एनमेव हेतुं विपर्यये बाधकप्रमाणेन समर्थयितुमाह — नोपपद्येत इत्यादि । आत्मानं वेदयतीति आत्मवेदनम्, न तथा । तस्मिन् सति न[1] किञ्चित् केनचित् विज्ञायेत इत्यन्धमूकं जगत् स्यात् । [ ४ ]

§ ३. इतश्चानात्मवेदनं ज्ञानं नाभ्युपगम्यते, प्रमाणेनाप्रतीतेः । तथाहि — यत् सदुपलम्भकप्रमाणगोचरे[2]चारि न भवति, तत् सकलमेव न सद्व्यवहृतिपथमवतरति । यथा शशविषाणम् । नावतरति च सदुपलम्भकप्रमाणगोचरताम् आत्मव्यापारादिलक्षणं विज्ञानमिति । तथाहि — तद्ग्राहकं प्रत्यक्षं वा स्यात्, परोक्षं वा ? ।

§ ४. प्रत्यक्षमपि किम् इन्द्रियार्थसंप्रयोगजम्, आहोस्विद् आत्म-मनःसन्निकर्षसमुत्थम्, उत[3]श्वित् स्वसंवेदनं यदर्थोऽयमारम्भ इति ? । तत्र ज्ञानेनेन्द्रियस्य सन्निकर्षाभावात्, अनभ्युपगमाच्च न प्रथमः पक्षः । नापि द्वितीयः, मनःसद्भावे प्रमाणाऽभावात् । न चाप्रमाणकं वस्तु विपश्चितः समाश्रयन्ते । न च युगपज्ज्ञानानुत्पत्तिः तत्प्रमाणम्, तस्या अन्यथाप्यु[4]पपत्तेः । तथाहि — यस्मिन्नात्मा आभिमुख्यं प्रतिपद्यते तस्मिन् विज्ञानमुदेति, अन्यत्र नेति किं मनःपरिकल्पनया ? ।

§ ५. अथेदमाभिमुख्यं किम् आत्मनो व्यतिरिक्तम्, आहोस्विद् अव्यतिरिक्तमिति ? । तत्र यदि व्यतिरिक्तम्; तदा संज्ञामात्रं भिद्यते नार्थ इति । अथाव्यतिरिक्तम्; तदाऽऽत्मनः स्वरूपाप्रच्युतेः सर्वदा तदस्तीति सर्वदा सर्वविषयं[5] विज्ञानं स्यात् । नन्वात्मनो मनसा संयोगकर्तृत्वं किं भिन्न[6]म्, अभिन्नं वेति ? । यदि भिन्नम्; नात्मनः कर्तृत्वम् । अथाभिन्नम्; तदा तदपि तत्स्वरूपवत् सर्वदाऽस्तीति सर्वदा संयोगः स्यात् । ततश्च सर्वदा ज्ञानोत्पत्तिरपि स्यादिति ।

§ ६. अथ शक्तेः कर्तृत्वम्, सा च सहकारिकारणवशात् कदाचिद्भवन्ती न दोषपोषं[7]मावहति । यद्येवं तर्हि कर्मणः सामर्थ्यादाभिमुख्यमात्मनः समुत्पद्यमानं[8] क्रमवतीं ज्ञानोत्पत्तिं विधास्यतीति किं मनःपरिकल्पनया ? । विधास्यते चायमर्थो "जीवांशात् कर्मनिर्मुक्तात्" [ का० १८ ] इत्यत्रान्तरे । तन्नात्म-मनोजनितमपि प्रत्यक्षं ग्राहकमिति ।

§ ७. अपि च — तत् तस्य कारणं, कार्यम्, अनुभयं वा सत् ग्राहकं स्यात् ? । न तावत् कारणम्; तदानीं ग्राह्यस्याभावात् । नाप्यनुभयम्; असंबन्धात् । अथैकसामग्रीतस्तदुभयं ग्राह्यग्राहकरूपं समुत्पद्यत इति । तन्न, युगपज्ज्ञानोत्पत्त्यनभ्युपगमात् । किञ्च ज्ञानाविशेषेऽप्येकं ग्राह्यम्, अपरं ग्राहकमिति किंकृतोऽयं विशेषः ? । अथ कार्यम्; तदा तदपि ज्ञातम्, अज्ञातं वा ? । [ अथाज्ञातम्; तन्न, ] अज्ञातस्य ज्ञापकत्वाऽयोगात् । तदुक्तम् —

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति" ।

अथ ज्ञातम्; तदपि यदि प्रत्यक्षान्तरेण, तदा किं ग्राह्येण किं वा ज्ञानान्तरेण ? । यदि

---

१. न केनचित् किञ्चित् ब० क० मु० । २. °चरतावतारि मु० । ३. उतस्वित् मु० क० । ४. °प्युत्पत्तेः अ० । ५. °विषयज्ञानं ब० । ६. भिन्नमथाभिन्नमिति ब० । ७. दोषमावहति क० मु० । ८. °मानं संभवन्तीं ज्ञानो° मु० ।

ग्राह्येण; तदा तस्य[1] ग्राहकत्वात् कार्यत्वम् । ततश्चाग्रे पातो द्वितीयस्य[2] । तस्याप्येवमिति काचपच्यं ज्ञानयोः स्यात् । तन्न ग्राह्येण । ज्ञानान्तरेणापि ग्रहणे तस्याप्यन्येनेत्यनवस्था । तन्न प्रत्यक्षं तद्ग्राहकम् ।

§ ८. नापि परोक्षम्; यतः तदपि किम् अर्थापत्तिः, उतानुमानमिति ? । तत्र न तावत् प्रथमः पक्षः, अर्थापत्तेरप्रमाणत्वात् । तथाहि—अर्थप्राकट्यादसावुत्पद्यते इत्यभ्युपगमः । तच्च तत्र किं नियतम्, अनियतम् वा ? । यद्यनियतम्; कथं नियमेन गमयेत् ? । अथ नियतम्; तदा नियमग्रहः किं तस्मिन्नेव धर्मिणि, किं वा धर्म्यन्तर इति ? । यदि तस्मिन्नेव; तदा येनैव प्रमाणेन नियमग्रहः, तेनैव साध्यस्यैव साधितत्वात् किमर्थापत्त्या ? । अथ धर्म्यन्तरे; तदा अन्यत्र गृहीतप्रतिबन्धम् अन्यत्र गमयद[3]नुमानतां नातिक्रामति ।

§ ९. अपि च—अर्थापत्तिरपि किमर्थापत्त्या ज्ञायते, किं वा स्वसंवेदनेनेति ? । यदि स्वसंवेदनेन; तदा प्रथमे कः प्रद्वेषः ? । अथार्थापत्त्या; तदा किं तेनैव प्राकट्येनोत्थाप्यते, किं वाऽन्येन ? । यदि तेनैव; तदा किं युगपत्, किं वा क्रमेण ? । प्रथमपक्षे अभ्युपगमहानिः । अथ क्रमेण; त[4]दपि नास्ति, अननुभवात् । अथान्येन; तदा तदर्थापत्तावपि ज्ञानप्रश्नेऽपरिमितार्थापत्तिमाला प्रसज्येत । तन्नार्थापत्त्याऽपि ज्ञायत इति । निषेत्स्यते चार्थापत्तिस्तत्प्रस्ताव इति ।

§ १०. अनुमानमपि न तद्व्यवस्थापकम्, यतस्तदपि गृहीतसंबन्धमेव प्रवर्तते । संबन्धग्रहस्तु किमन्वयमुखेन, किं वा व्यतिरेकमुखेण ? । न तावदन्वयमुखेन, यतः 'तद्भाव एव भावः' इति स प्रतीयते । तद्भावभावित्वं च किं प्रत्यक्षेण प्रतीयते, किं वाऽनुमानेन ? । न तावद् अत्यन्तपरोक्षे विज्ञाने प्रत्यक्षेण । नाप्यनुमानेन, अनवस्थाप्रसङ्गात् । व्यतिरेकमुखेणापि नास्ति, यतो विपक्षे हेतोरभावः किमभावप्रमाणेन प्रतीयते, आहोश्विदनुपलम्भेन ? । अभावप्रमाणाभावाद् न प्रथमः पक्षः । अनुपलम्भोऽपि किं दृश्यानुपलम्भः, किं वा अदृश्यानुपलम्भः ? । अन्त्यस्य[5] सत्यपि वस्तुनि भावाद् न व्यतिरेकसाधकत्वम् । दृश्यानुपलम्भमपि स्वभाव-कारण-व्यापकाद्यनुपलम्भभेदेन व्यावर्णयन्ति । तत्र दृश्यानुपलम्भो नादृश्ये ज्ञाने संभवति । नापि कार्यकारणभावः । स हि प्रत्यक्षानुपलम्भसाधकः[6] कथं परोक्षे वस्तुनि स्यात् ? । व्याप्यव्यापकभावोऽपि प्रत्यक्षानुमानाभ्यां तस्य न प्रतीयते इत्युक्तम्[7], अतः कथं तत[8]स्तद[9]भाव इति । तन्न व्यतिरेकद्वारेणापि संबन्धनिश्चयः ।

§ ११. किञ्च, तल्लिङ्गम् अर्थः, चक्षुरादयो वा ? । अर्थोऽपि किं सामान्यरूपः, विशेषरूपो वा ? । सामान्यस्य ज्ञापकत्वे अतिप्रसङ्गः । विशेषोऽपि यदि प्राकट्यम्, आभिमुख्यम्; तदपि अर्थात् भिन्नम्, अभिन्नं वा ? । यदि भिन्नं स्वप्रकाशम्; तदा सिद्धं साध्यम्, कि[10]मनेन ? । अथाभिन्नम्; तदा स्वप्रकाशोऽर्थः प्र[11]सज्येत । एवं चक्षुरादिष्वपि वाच्यम् ।

---

१. तदस्य ब० । २. द्वितीयस्याप्ये° क० अ० ब० । ३. गमयेनानुमा° अ० । ४. एतदपि मु० क० । ५. अनुपलम्भमात्रस्य अ० ब० क० । ६. प्रत्यक्षानुपलम्भौ साधकौ यस्य इति विग्रहः कार्यः—सं० । ७. °क्तम् तत् कथं क० मु० । ८. अनुपलम्भात् अ-टि० । ९. विपक्षे हेतोरभावः अ-टि० । १०. किमन्येन क० मु० । ११. प्रसाध्येत अ० ब० ।

§१२. किञ्च—इदमर्थशून्यं[1] विकल्पविज्ञानं केन ज्ञायते ? । न च तस्यानुभवः । नापि तद् बाह्यम्, अध्यात्मं परिस्पन्दात् । योऽपि कारकसंबन्धान्यथानुपपत्त्या व्यापारः परिकल्प्यते; सोऽपि न युक्तः, यतो यदि तेन[2] तेषां मीलनं क्रियते तदा तेषां स[3] न स्यात्, पूर्वमेव सिद्धत्वात् । संबद्धानां यदि स स्यात्; तदा किं तेन ?, स्वयमेव संबन्धात् ।

§१३. अपि च—स किं कारकजन्यः, अजन्यो वा ? । अजन्योऽपि[4] भावरूपः, अभावरूपो वा ? । अभावरूपत्वे न फलजनकत्वं स्यात् । भावोऽपि किं नित्यः, अनित्यो वा ? । नित्यत्वे न कदाचिद् अर्थाधिगतिविरतिः स्यात् । 'अजन्यश्च अनित्यश्च' इति व्याहतम् । जन्योऽपि किमेकक्षणस्थायी, किं वा कालान्तरस्थायी ? । प्रथमपक्षे क्षणादूर्ध्वं प्रतीतिविरतिः स्यात् । प्रतिक्षणमपरापरोत्पत्तौ न कदाचिद्विरमेत । अथ कालान्तरस्थायी; तदा "क्षणिका हि सा" [शाबर० पृ० ३२] इत्यभ्युपेतहानिः[5] ।

§१४. अपि च—असौ क्रियारूपः, अक्रियारूपो वा ? । साऽपि[6] किं परिस्पन्दरूपा[7], अपरिस्पन्दरूपा[8] वा ? । परिस्पन्दात्मिका नास्पन्दस्यात्मनः स्यात् । यदर्थः प्रयासः स एव[9] त्यक्तः स्यात् । अपरिस्पन्दः किं परिस्पन्दाभावः, किं वा वस्त्वन्तरमिति ? । अभावस्य जनकत्वविरोधादित्युक्तम् । वस्त्वन्तरमपि किं चिद्रूपः, किं वा जडः ? । चिद्रूपोऽपि किं धर्मी, किं वा धर्मः ? । यदि धर्मी; न प्रमाणं स्यात्, आत्मवत् । अथ धर्मो यदि आत्मनोऽभिन्नः; न प्रमाणम् । भिन्नोऽपि असंबन्धात् न तस्य । 'तत्कार्यत्वात् तस्य' इति चेत्, तत्कर्तृत्वं यदि व्यापारान्तरेण; तदा अनवस्था । निर्व्यापारस्य[10] कार्यकर्तृत्वे; किं तेन ? । जडोऽपि यदि धर्मी; लोष्टवत् न किञ्चित् । अथ धर्मः; तदाऽऽत्मनः कथं जडो धर्मः ? ।

§१५. अपि च—व्यापारेण फलं यदि व्यापारवता जन्यते; तदा अनवस्था । अव्यापार[11]पक्षे प्रथमेनापि तेन किम् ? । अथ व्यापारस्य[12] तद्रूपत्वाद् न तदन्तरमिति चेत्, किमिदं तद्रूपत्वम्—किं[13] पराश्रितत्वम्, किं वा परजन्यत्वम् ? । संयोग-समवायनिराकरणेन आश्रितत्वानुपपत्तेः । जन्यत्वमपि अविचलितानुत्पन्नस्थिरैकरूपेणात्मना क्रमाऽक्रमाभ्यां नोपपद्यत इति न व्यापारः कश्चित् । तन्न परोक्षं ज्ञानं प्रमाणमिति ।

§१६. किञ्च—

अनात्मविदि विज्ञाने तादात्म्यात् सुखदुःखयोः ।
वेदनं नोपपद्येत न स्यातां प्रीतितापने ॥ १ ॥
एकार्थसमवायस्य पूर्वमेव निराकृतेः ।
नैषामज्ञानरूपत्वं एकहेतुसमुद्भवात् ॥ २ ॥

§१७. उक्तं च—

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तत्सुखादि किम[14]ज्ञानं विज्ञानाभिन्नहेतुजम् ॥" [प्रमाणवा० २.२५१.]

---

१. °शून्यविक° ब० । २. यदि तेषां मु० क० । ३. तेषां संबन्धः स्यात् मु० । ४. अजन्यो भाव° क० मु० । ५. °भ्युपगतहानिः ब० । ६. सोऽपि मु० । ७. °रूपोऽप° मु० । ८. रूपो वा मु० । ९. एवं प्रत्युक्तः मु० । १०. °रस्याकार्य° क० मु० । ११. अव्यापारवता जन्यते पक्षे प्रथ° ब० । १२. °रस्यातद्रूप° क० । १३. °त्वम् परा° अ० । १४. °दिकमज्ञा° क० मु० ।

"अविशेषेपि बाह्यस्य विशेषात् प्रीतितापयोः।
भावनाया विशेषेण नार्थरूपाः सुखादयः॥
प्रज्ञादिवद्विशिष्यन्ते भावनाबलभावतः।
नार्थेन जनिताकारो बुद्धौ भोगस्तदात्मनः॥
नियतविषयत्वेन ज्ञानाकारो निवर्तितः।
अर्थान्वयातिरेकेण व्याप्तो[1] नीलादिभासवत्॥
भिन्नाभः सितदुःखादिरभिन्ने[2] बुद्धिवेदने।
अभिन्नाभे विभिन्ने चेद्भेदाभेदौ किमाश्रयौ॥
नानात्वैकत्वलोपः[3] स्यादेवं सति जगत्त्रये।
तस्मादन्तर्भवा एते चेतनाश्चेति साधितम्॥"

तत[4]ः स्थितमेतत् स्वसंवेदनं विज्ञा[5]नमिति॥ [५[1]]

प्रामाण्यनिश्चयोपायचर्चा।

§१. अथ प्रमाणात् प्रवर्तमानाः किं निश्चितप्रामाण्यात् प्रवर्तन्ते, किं वाऽनिश्चितप्रामाण्यादिति?। य[6]दि अनिश्चितप्रामाण्यात् किं प्रमाणपरीक्षया?। अथ निश्चितप्रामाण्यात्; तन्निश्चयः किं संवादज्ञानात्, किं वा कारणगुणज्ञानादिति?। प्रथमपक्षे संवादज्ञानं [7]किं सहकारिकारणं सत् तन्निश्चयमुत्पादयति, किं वा ग्राह[8]कं सदिति?। यदि सहकारिकारणम्; तन्नोपपद्यते, भिन्नकालत्वात्। ग्राहकमपि किं प्रत्यक्षं सत्, किं वा लिङ्गभूतमिति?। न तावत् प्रत्यक्षं सत्, प्रवर्तकस्य सुदूरं नष्टत्वात्। अपि च—इन्द्रियजं प्रत्यक्षं ज्ञानान्[9]तरस्वरूपमपि न प्रतिपद्यते। कुत एव तत्प्रामाण्यमिति?। लिङ्गभूतमपि नास्ति, यतो लिङ्गं गृहीतसंबन्धं ज्ञापयति। संबन्धग्रहो[10] न ताभ्याम्, परस्परस्याग्रहणात्। नापि ज्ञानान्तरेण तत्स्वरूपाग्रहणादेव।

§२. अथानादित्वात् संसारस्य संवादकज्ञाननिबन्धनं प्रवर्तकस्य प्रामाण्यमनेकशो विनिश्चित्य संदेहभाजि प्रवर्तकज्ञाने संवादकज्ञानात् निश्चय इति। ननु अत्र च[11]क्रकं दूषणम्। तथाहि—निश्चितप्रामाण्यात् प्रवृत्तिः। प्रवृत्तौ संवादज्ञानम्। ततः प्रामाण्यनिश्चय इति।

§३. किञ्च—अनादौ संसारे निरात्मवादिनः(ना) केन संबन्धो गृह्यते?। अथ अस्त्यनन्तवासनाऽऽलयभूतम् आलयविज्ञानं रागादिबाह्याहङ्कारास्पदभूतम्, तेनेति। ननु निरन्वयक्षणिकविनाशे भेदाविशेषात् विभिन्नसंतानवासनासंक्रान्तिरपि कस्मान्न भवति?। अथ

"यस्मिन्नेव हि संताने आहिता कर्मवासना।
फलं तत्रैव संधत्ते कर्पासे रक्तता यथा॥"

इत्यभिधीयते। न, संतानिव्यतिरिक्तस्य संतानस्याभावात्। अथ अस्ति कार्यकारणप्र[12]वाहरूपः संतानः। न, कार्यकारणभावस्य निरन्वयक्षणिकपक्षे निषेत्स्यमानत्वादिति।

§४. किञ्च—[13]संवादज्ञानमपि यदि संवादज्ञानापेक्षया प्रमाणम्। त[14]दा तदपि तदन्यापेक्षयेत्यनवस्था। अथ स्वतः; तदा पूर्वमपि तथैवास्तु, किं संवादज्ञानेन?।

---

१. व्याप्ता मु० क०। २. °रभिन्नो° अ० ब०। ३. °कत्वयोर्यः स्या° मु०। ४. तत् मु०। ५. °दनं ज्ञान° मु० क०। ६. यदि निश्चित° अ०। ७. °ज्ञानं सह° मु०। ८. ग्रहणं मु० क०। ९. ज्ञानान्तरे स्व° मु०। १०. °ग्रहोऽपि न मु० क०। ११. चक्रकदू° ब०। १२. कार्यकारणरूपः अ०। १३. किञ्च संवादज्ञानापेक्षया अ०। १४. णम् तदपि अ०।

§५. अथ प्रेक्षापूर्वकारिणः[1] प्रयोजनमुद्दिश्य प्रवर्तमाना अर्थक्रियायां सिद्धायां निष्पन्नप्रयोजना न तत्प्रामाण्यपरीक्षायां मनः प्रणिदधति । अन्यथा[2] अन्यस्यापि यत् प्रामाण्यकारि तत् स्वतः कथं न प्रमाणमिति । नैतदस्ति । यतो यथा ते प्रेक्षावत्तया प्रवर्तकं विचारयन्ति, तथाऽर्थक्रियाज्ञानमपि । तथाहि–इदमर्थक्रियाज्ञानं किं स्वप्रदशायामिवासत्यम्, उत सत्यमिति ? । अथ[3] तस्य बाधितत्वेनैव असत्यत्वम् । तथाहि–प्रबोधानन्तरमेव शरीर-वस्त्रादेरतिम्यदवस्थामुपलभमाना[4]: 'धिग् मिथ्येदं जलार्थक्रियाज्ञानम्' इति निश्चिन्वन्ति । जाग्रदवस्थायां तु सर्वदैवाबाधितमर्थक्रियाज्ञानमनुभवन्तो न साशङ्का इति न प्रमाणान्तर-मपेक्षन्त इति नानवस्था । तर्हि अबाधितत्वेनैव प्रामाण्यनिश्चय[5]: ।

§६. किञ्च–तत् संवादकज्ञानं किम् एकसंतानम्, भिन्नसन्तानं वा ? । तदपि किम् एककालम्, भिन्नकालं वा ? । तदपि किं समानजातीयम्, उत भिन्नजातीयम् ? । समानजातीयमपि किम् एकविषयम्, आहोश्विद् भिन्नविषयम् ।

§७. तत्र एकसन्तानवर्ति समानकालं समानजातीयं समानविषयम्[6], भिन्नविषयं वा विज्ञानद्वयं युगपन्नोपपद्यते । भिन्नकालं तु तत् तैमिरिकचन्द्रद्वय[7]दर्शनेन व्यभिचारि । तैमिरिकस्य पुनः पुनस्तज्ज्ञानमुत्पद्यत एव । किञ्च–एकविषयत्वे यथा प्राक्तनं[8] विज्ञानमप्रमाणं तथा तदुत्तरकालभाव्यपि तस्मिन्नेव विषये प्रवर्तमानम् अप्रमाणं स्यात् । प्राक्तनस्य प्रामाण्ये तदभिन्नविषयत्वाद् अधिकं किञ्चिद् अपरिच्छिन्दद् गृहीतगाहित्वेन अप्रमाणं[9] स्यात् । न चाप्रमाणेन प्रामाण्य[10]निश्चयो युक्तः । भिन्नकालस्य तु[11] भिन्नविषयस्य रूपादिज्ञानस्य संवादकत्वे मरीचिकाजलज्ञानस्यापि तदुत्तरकालभावि मरीचिकारूपग्राहि दर्शनं संवादकं स्यात् । भिन्न-जातीयं त्वेकसंतानवर्ति समानकालं भिन्नकालं वा यदि संवादकं; तदा मिथ्यादर्शनस्यापि विभिन्नवस्तुस्पर्शादिज्ञानं संवादि स्यात् । एकविषयत्वे सतीति चेत्; कथं रूपस्पर्शादिज्ञाना-नामेकविषयत्वम् ? । न चैकं[12] द्रव्यमभ्युपगम्यत इति । भिन्नसंतानं तु समानजातीयं भिन्न-विषयम्, एककालम्, भिन्नकालं वा यदि संवादकं स्यात्; तदा मिथ्याज्ञानस्याऽपि तथा भवेत् । एकविषयत्वं तु तत्स्वरूपापरिज्ञाने तत्कर्मताऽप्रतिपत्तौ तयोर्नोपपद्यते । अथ तुल्या-भिधानप्रवृत्तिदर्शनात् तयोरेकविषयत्वं प्रतीयते । ननु तैमिरिकद्वय[13]द्विचन्द्रदर्शनेऽप्येतदस्तीति तयोरपि परस्परस्य संवादकत्वेन प्रामाण्यं स्यात् । अथ तत्र बाधकोपलब्ध्येनै[14]तदेवमित्युच्यते । तर्हि तदेव प्रामाण्यनिबन्धनम्, न संवादकज्ञानमिति ।

§८. अथ कारणगुणज्ञानम् । तत् किं प्रत्यक्षम्, उत अनुमानमिति ? । न तावत् प्रत्यक्षम्, इन्द्रियाणां परोक्षत्वात् । न हि धर्मिणः[15] परोक्षत्वे तद्धर्माणां प्रत्यक्षत्वं दृष्टम् । कथं बुद्ध्यादीनामिति चेत्; न, तेषामपि परोक्षत्वात् । येषां तु तत्प्रत्यक्षत्वं तेषामात्मनोऽपि । अन्येषां बुद्ध्यतिरेकिणोऽभाव एव । अपरेषां कथञ्चिदभेदाद् तद्ग्रहण एव तेषां ग्रहणमिति

१. प्रेक्षाकारिणः ब० मु० क० । २. अन्यथान्यस्यापि मु० क० । ३. अथैतस्य ब० । ४. °माना: भिन्नमेवेदं मु० । ५. नैव निश्चयः अ० मु० । ६. °विषयं वा भिन्न° मु० क० । ७. °द्वयदर्शि-दर्शनेन ब० । °द्वयदर्शितदर्शनेन मु० क० । ८. प्राक्तनवि° अ० मु० क० । ९. अप्रामाण्यं स्यात् अ० ब० । १०. प्रामाण्येऽनि° मु० । ११. °स्य भिन्न° मु० क० । १२. चैकद्रव्य° अ० । १३. °द्वये द्विचन्द्र° अ० । १४. बाधकोपपत्तेनैत° मु० । १५. धर्मिपरो° अ० ब० क० ।

न व्यभिचारः । अथ अनुमानम् । तदपि प्रतिबन्धबलाद् उदयमासादयति । प्रतिबन्धग्रहश्च न तावत् प्रत्यक्षेण–

"द्विष्ठसंबन्धसंवित्तिः नैकरूपप्रवेदनात् ।"

इति । अनुमानेन प्रतिबन्धग्रहणे अनवस्था, इतरेतराश्रयत्वं वा स्यात् । लिङ्गमपि नानुपलब्धिः, तस्याः अभावसाधनत्वात् । स्वभावहेतुरपि दृश्ये व्यवहारमात्रसाधनफलः । कार्यमपि यदि प्रामाण्यनिश्चयः तदेतरेतराश्रयत्वम् ।

§९. न च नैर्मल्यादयो गुणाः दोषाभावव्यतिरेकिणः केचित् । भावेऽपि च[1] तद्ग्राहिज्ञानं तदन्यकारणगुणज्ञानापेक्षम् । तदपि तदन्यापेक्षमिति अनवस्था स्यात् । तन्न कारणगुणज्ञानापेक्षोऽपि प्रामाण्यनिश्चय इत्याशङ्क्याह–**बाधनेत्यादि**–

**बाधनात् संशयाद्यासे सूक्तं सामान्यलक्षणम् ॥ ५ ॥**

§१०. **बाधनं** बाधितत्वम्, तस्मात् । **संशय**श्च । आदिग्रहणात् विपर्ययश्च । तस्य असनं क्षेपणम् आसः । तस्मिन् सति प्रामाण्यं निश्चीयत इति ।

§११. ननु किं बाध्यम्, किं वा बाधकम्, कश्च तदभाव इति ? । बाध्यम् मिथ्यात्वमिति चेत्; किमिदं मिथ्यात्वम् ? । वैपरीत्यमिति चेत्; कस्य वैपरीत्यम् ?, किं ख्यातेः; ख्यायमानस्य वा ? । तदपि तयोः किम् अभावः, किं वाऽन्यरूपादिनाऽवभासनम् ? । अभावोऽपि किम् अवभासकाले, कालान्तरे वा ? । न तावद्[2] अवभासकाले, तदानीमेव अवभासमानत्वात् । कालान्तरे चेत्; क्षणिकत्वात् सर्वख्यातीनां वैपरीत्यप्रसङ्गः । अर्थक्रियाऽभावाद् अभाव इति चेत्; कथमन्यस्याभावे अन्यस्याभावोऽतिप्रसंगात् ? । तदानीं च सर्वस्यार्थक्रियाविरहोऽस्तीति तथाभावः स्यात् । कालान्तरे तदभावो नासत्तां ख्यापयति, अतिप्रसंगात् ।

बाध्यविषयकपूर्वपक्षे ख्यातिविचारः ।

§१२. रूपा[3]दिवैपरीत्यं च केन प्रतीयते ? किं पूर्वज्ञानेन, किं वा तेनैव, आहोश्विद् उत्तरकालभाविनेति ? । पूर्वज्ञानेन किं बाध्यकालादिस्थेन, स्वकालादिस्थेन वा ? । न तावत् पूर्व[4]पक्षः, तदानीं तस्याविद्यमानत्वात् । नापि द्वितीयः, तत्काले मिथ्याज्ञानस्याभावात्, प्रमाणाभावेन विषयैक्य[5]स्याभावाद् न तथाप्रतीतिरिति । अथ तेनैवात्मनो[6]ऽन्यदेशता प्रतीयते । तत् किं सा तस्मिन् काले अस्ति, किं वा नास्ति ? । यद्यस्ति; कथं वैपरीत्यम् ? । अथ नास्ति; कथं विपरीतख्यातिः ? । तथा सत्यसत्ख्यातिः स्यात् । उत्तरकालभावि च चिरविनष्टस्य कथं तथात्वं प्रतिपद्यते ? । किञ्च–बाधकम् 'असत्' इति प्रत्येति न वैपरीत्यमिति । तन्न विपरीतख्यातिः ।

§१३. अथ स्मृतेः प्रमोषः तथाहि–नागृहीतरजतस्य शुक्ति[7]काशकलावलोकनेऽपि 'इदं रजतम्' इति प्रतिभासो भवति । किन्तु गृहीतरजतस्य तदनुभवाहितसंस्कारस्य चाकचिक्यसाम्यापहृतचेतसः शु[8]क्तिकाखण्डदर्शनप्रबोधितस्मृतिबीजस्य तत्र 'अनेन सदृशं रजतम्'

---

१. °पि वा तद्ग्रा° ब० क० मु० । २. तावत् तदानीमेव ब० अ० क० । ३. रूपवैप° मु० । ४. पूर्वः पक्षः मु० क० । ५. विषयैक्याभा° ब० क० । ६. °नोऽन्यादेश° ब० अ० । ७. शुक्तिकावलो° मु० । ८. शुक्तिखण्ड° क० मु० ।

इति स्मरणं नोदपादि, किन्तु 'इदमेव रजतम्' इति दर्शन-स्मरणयोस्तद्विषययोश्चैकत्वप्रतिपत्तिः तत्प्रमोषः।

§ १४. ननु किं दर्शनविषयस्य स्मृतिविषये आरोपः, किं वा स्मृतेः दर्शनविषय इति ?। तत्र प्रथमपक्षे यत्र यद् आरोप्यते तत्र तत्प्रतिभासो भवति। यथा मरीचिकासु जलमारोप्यमाणं मरीचिकादेशे चकास्ति। ततः स्मर्यमाणदेशे शुक्तिप्रतिभासः स्यात्, नेदंतया रजतस्येति। द्वितीयेऽपि पक्षे स्मर्यमाणस्य अस्पष्टत्वात् परोक्षत्वाद् 'इदम्' इति दर्शनं कथं स्पष्टतयाऽपरोक्षतया प्रतिभासेत ?।

§ १५. किञ्च—तयोरैक्यं केन प्रतीयते ?। किं ताभ्यामेव, अथान्येन ?। तत्र अस्वसंवेदनाभ्यां दर्शनस्मरणाभ्याम् आत्मापि न प्रतीयते, कुत एव अन्येन सहैक्यमिति ?। स्वसंवेदनाभ्यामपि स्वात्मनिमग्नाभ्यां न द्वयस्यैक्यप्रतीतिः। अपि च—यदि द्वयं वेद्यते, कथमैक्यम् ?; अथ न वेद्यते; कथमैक्यम् ?। अथ पूर्वं द्वयं प्रतीत्य तदेवैकत्वेन प्रत्येति। न, संवेदनस्य क्षणिकत्वेन एतावन्तं कालमनवस्थानात्। तत्तादात्म्येन च स्वसंवेदनमपि विभिन्नमिति कथं पूर्वापरयोरैक्यं प्रतिपद्येत ?। भ्रान्तत्वात् तथाप्रत्येति इति चेत्; न, आत्मख्यातित्वप्रसङ्गात्। तत्र च वक्ष्यामः। अथ अन्यत्। तच्च पूर्वदर्शनाहितसंस्कारस्य उत्तरदर्शनप्रबोधितस्मृतिबीजस्य विकल्पकं विज्ञानं तयोरसन्तमभेदं ख्यापयति। तर्हि असत्ख्यातिः स्यात्, न स्मृतिप्रमोष इति। तन्न स्मृतिप्रमोषोऽपि मिथ्यात्वम्।

§ १६. अलौकिकत्वमिति चेत्; किमिदं अलौकिकत्वम् ?। किम् अन्यरूपत्वम्, अथ अन्यक्रियाकारित्वम्, किं वा अन्यकारणजन्यत्वम्, आहोश्विदजन्यत्वमिति ?। तत्र न तावद् अन्यरूपत्वम्। यदेव हि सत्यस्य रूपं प्रतिभाति, तदेवासत्याभिमतस्यापि। न चान्यक्रियाकारित्वम्, अदर्शनात्। अन्यजन्यत्वे; सर्वत्र नियमो न स्यात्। लौकिकेष्वेव स इति चेत्, इतरेतराश्रयत्वम्। सत्यनियमेऽलौकिकत्वम्, सति अलौकिकत्वेऽनियम इति। अजन्यत्वे; नित्यं सत्त्वमसत्त्वं वा भवेत्। ततश्च सत्यज्ञानविषयोऽपि स्यात्। तन्नालौकिकत्वमिति।

§ १७. आत्मख्यातिरिति चेत्; तत्किं परं ब्रह्म, आहोश्विद् विज्ञानमिति ?। तत्र यदि तद् अद्वयं; तदा द्वयदर्शननिबन्धना कथं तत्र भ्रान्तिः ?। अन्तरुपप्लवादिति चेत्; तत्रापि यदि स्वरूपप्रतिभासः कथं भ्रान्तिः ?। अथ अन्यरूपप्रतिभासः; कथमात्मख्यातिः ?। अथ आत्मरूपस्यैव भ्रान्त्या अन्यरूपत्वेन अवभासनम्। ननु इतरेतराश्रयत्वम्। तथाहि—अन्यस्वरूपमवभासन्ती भ्रान्तिः, भ्रान्त्याऽन्यरूपावभासनमिति।

§ १८. अथ अविद्यया भ्रान्तं वेदनं जन्यते। कथं नित्यत्वं ब्रह्मणः ?। न च तद्व्यतिरेकेण तदस्ति, ग्राह्यग्राहकाकारयोरनात्मरूपत्वात्। आत्मरूपत्वे वा तयोरपि सत्यत्वम्, आत्मनो वाऽसत्यत्वमिति। अथ संवेदनमात्रं सत्यमात्मनो रूपम्। तथाप्रतिभासस्त्वविद्यावशादिति।

---

१. °शेऽवभासते मु०। २. स्वरूप[म्] अ-टि०। ३. अन्येन स्वात्मैक्यम् मु०। ४. स्वात्मनि निमग्ना° अ० ब०। ५. च संवेदन ब० क० मु०। ६. °त्येति चेत् क० मु०। ७. अन्यस्य अ-टि०। ८. °रित्वमिति, किं अ० मु०। ९. °त्यत्वमिति सत्य° अ०। १०. तत्र मु०। ११. अतद्रूपभ्रमादिति मु०। १२. अन्यरूपमव° मु० ब०। १३. °मवभासयन्ती क०। °मवभासयतीति भ्रा° मु०।

ननु सा अविद्या किम्[1] आत्मरूपम्, अथान्यदेव किञ्चित् ? । यद्यात्मरूपम्; कथमविद्या ? । अथान्यत्; कथमद्वैतम् ? ।

§ १९. अथ भेदे प्रमाणाभावात् तथाप्रतिभासो भ्रान्तिरिति । तथाहि—भेदो वस्तुतः किं भिन्नः, किं वा अभिन्नः ? । यद्यभिन्नः; न भेदः । अथ भिन्नः । स किं प्रत्यक्षेण प्रतीयते, अथानुमानेन ? । प्रत्यक्षेणापि[2] किं तद्वस्तुग्राहिणा, उतान्येन ? । यदि तद्वस्तुग्राहिणा; तदा किं तस्मिन्नेव काले, कालान्तरे वा ? । न तावत् तस्मिन्नेव काले, द्वयोः प्रतिभासाभावात् । कालान्तरे प्रत्यक्षस्यैव नष्टत्वात् न तेन भेदग्रहः । अन्यस्य तु तदानीमनुभवात् । अनुमानमपि न प्रत्यक्षाभावे भेदग्राहि । किञ्च—भेदस्यापि वस्तुनोऽन्यो भेदः । तत्राप्यन्य इत्यनन्तभेदावभासः स्यात् । न चासावस्ति ।

§ २०. इत्यादिपरविकल्पितं गजविकल्पायते । यतो भेद एव प्रत्यक्षे प्रतिभासते । तथाहि—ग्राहकाकारमहंकारास्पदभूतम्, नीलादिकं च ग्राह्याकारं मुक्त्वा नान्यत्[3] संवेदनमात्रं प्रतिभाति । केवलमद्वैतवादी तदाशया उत्स्वप्नायत इति । अपि च—अयमभेदः किं वस्तुनो भिन्नः, किं वाऽभिन्नः ? । यद्यभिन्नः तदा नाऽभेदः । अथ भिन्नः; स किं प्रत्यक्षेण प्रतीयते, किं वाऽनुमानेन ? । प्रत्यक्षेणापि किं वस्तुग्राहिणा, उतान्येन ? । वस्तुग्राहिणापि किं युगपत्, क्रमेण वा ? । न तावद् युगपत्, द्वयप्रतीतेरयोगात् । प्रतीतौ[4] वा लुंठितोऽभेदः[5] । नापि क्रमेण, क्षणिकत्वात् । न चान्यत् प्रतिभाति । प्रत्यक्षाभावादनुमानमपि नास्ति । अथ वस्तुनो ग्रहणे तदभिन्नस्य[6] अभेदस्यापि ग्रहणमिति । भेदस्यापि तथाग्रहणं किं न भवति ? ।

§ २१. किञ्च—अभेदो नाम[7] अद्वि(नाम द्वि)तीयापेक्षः । तदग्रहे कथं ग्रहणमस्य ? । नहि यथा नीलग्राहि ज्ञानम् 'यदेवं न भवति तदतोऽन्यद्' इति व्यवस्थापयति, तथा[8] 'पीताद्यनेनाऽभिन्नम्' इति शक्नोति[9] । नहि पीताद्यप्रतिभासने तेन सहैकत्वप्रतिभासो युक्तः । भेदोऽपि कथम् भिद्यमानाप्रतिभास इति चेत्; तत् किं नीलस्यापि नास्ति[10] प्रतिभासः ? । अस्तीति चेत्; यद्येवं तत् किं पीतादि तत्र[11] भासते ? । नेति चेत्; तत्कथं न भेदप्रति[12]भासः ? । न चैवं द्वितीयाप्रतिभासने तेन सहैक्यमिति प्रतिभासो[13] युक्तिमानिति । प्रतिपादयिष्यते चाध्यक्षग्राह्यत्वं भेदस्य अभावप्रमाणनिराकृताविति । तन्नात्मख्यातिरपि[14] ।

§ २२. बाधकमपि किम् अनुपलब्धिः, आहोश्विद् ज्ञानमिति ? । अनुपलब्धिरपि किं तस्मिन्नेव काले कालान्तरे वा ? । तत्र तस्मिन्नेव काले मिथ्याज्ञानेऽपि ज्ञानज्ञेययोरनुपलब्धिर्नास्तीति तदपि अबाध्यं स्यात् । उत्तरकालं तु सत्यविज्ञानेऽपि संदिग्धोऽनुपलब्धिः[15] । प्रवृत्तौ तन्निश्चये चक्रकमितरेतराश्रयत्वं चाऽभाणि[16] ।

बाधकविषयकः पूर्वपक्षः ।

§ २३. अथ ज्ञानम् । तत्किम् समानजातीयम्, उत भिन्नजातीयम् ? । समानजातीय-

---

१. अविद्या आत्म° मु० क० । २. प्रत्यक्षेण किं क० मु० । ३. नान्यसंवे° अ० ब० । ४. प्रतीतौ च क० । ५. लटितोऽमेदः अ० ब० क० । ६ तदभिन्नस्य तस्यापि ग्र° ब० । ७. नाम द्वितीयः पक्षः मु० क० । ८. तदा क० मु० । ९. इति प्राप्नोति मु० । १०. °स्यापि प्रति° क० मु० । ११. तत्र न भासते मु० । १२. मेदः प्रति° क० । १३. °मिति युक्ति° मु० । १४. °ख्यातिरिति क० मु० । १५. संदिग्धप्रवृत्तौ ब० । संदिग्धाप्रवृत्तौ मु० क० । १६. °त्वं वाऽभाणि मु० क० ।

मपि किमेकसंतानम्, अथ[1] भिन्नसंतानम्?। तदपि किं एकविषयं भिन्नविषयं वा?। तदपि किं एककालं, भिन्नकालं वा?। तत्र समानजातीयमेककालं एकसंतानं एकविषयम्, भिन्नविषयं वा युगपद् ज्ञानद्वयं नोत्पद्यते। कथं तयोर्बाध्यबाधकभावः?। भिन्नकालं तु तज्ज्ञानं एकविषयं संवादकमेव स्यात्, न बाधकम्। भिन्नविषयं तु तज्ज्ञानं यदि बाधकं स्यात् तदा सर्वं सर्वेण बाध्येत। भिन्नसंतानं तु समानजातीयमेककालम्, भिन्नकालं वा[2] यद्येकविषयं, संवादि स्यात्, न बाधकम्। भिन्नविषयस्य तस्य[3] बाधकत्वे अतिप्रसङ्ग उक्तः। विजातीयं तु एकसंतानवर्ति एकविषयं समानकालं[4] भिन्नकालं वा यदि स्यात् संवादवत् स्यात्, न बाधकम्। उक्तज्ञानस्य विभिन्नविषयस्यापि सतो बाधकत्वे सर्वं तेन बाध्यं स्यात्। भिन्नसंतानमपि विजातीयं समानकालम्, भिन्नकालं वा यद्येकविषयम्; तदा अस्तु संवादकम्। अथ भिन्नविषयम्; तदाऽकिञ्चित्करमिति। तन्न बाधकमपि किञ्चित्।

§२४. बाधकाऽभावोऽपि किं तुच्छरूपः किं वा[5] वस्त्वन्तरज्ञानम्?। तुच्छरूपस्य कथं प्रतीतिः?। अथ ज्ञानवत्स्वतः इति। तन्न,

"सर्पिषो यदि सौरभ्यम्, गोमयस्य किमागतम्।"

अथ स्वसंविदितं ज्ञानं तत्राभवत् तन्निश्चाययति[6]। 'तत् तत्र नास्ति तेन च निश्चयः' इति व्याहतम्। अननुभवात् तन्निश्चय इति चेत्; स्वापाद्यवस्थास्वपि स्यात्। अथ वस्त्वन्तरज्ञानम्; तन्मिथ्याज्ञानेऽप्यस्तीति तत्रापि तन्निश्चयः स्यादिति। तत् कथमबाधितत्वेनापि प्रामाण्यनिश्चय इति।

§२५. अत्रोच्यते। यत् तावद् बाध्यबाधकनिराकरणमकारि तत् किम् अद्वैतमाश्रित्य, अथ बहिरर्थे स्थिते सतीति?। तत्राद्वैतस्य शून्यस्य चाग्रे निराकरिष्यमाणत्वात् तदास्ताम्। बहिरर्थमाश्रितवतः प्रमाणविप्लवः प्रकृतं तिरोदधातीत्यवश्यं प्रमाणेतरव्यवस्थाऽभ्युपगन्तव्या।

उत्तरपक्षः।

§२६. तत्र प्रमाणं किम् अविसंवादित्वेन, किं वाऽबाधितत्वेन, किं वा

"प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृतः।
प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम्॥" [ न्याया० का० २ ]

इति विचारः प्रवर्तते। तत्र केषां प्रसिद्धानि प्रमाणानि? किं शास्त्रविदाम्, उतश्चित् तदितरेषामिति?। तत्रेतरे जनाः प्रमाणस्य नामापि न जानन्ति[7] किं तेषां प्रसिद्धम्?। शास्त्रविदामपि संख्यादिविप्रतिपत्तिदर्शनात् न प्रसिद्धानि। अतस्तेषां तन्निराकरणाय प्रमाणप्रणयनमुपपत्तिमदिति।

§२७. तत्राविसंवादित्वं द्वितीयप्रमाणापेक्ष[8]मिति सकलं प्रागुक्तं दूषणजालमापतति। अपि च–शाकटिका अपि शास्त्रज्ञैस्तुल्याक्षूणविधानाः। तथा, कतिपयपदपरिमिता प्रवृत्तिश्चानिश्चयादपि भवन्ती कां क्षतिं करिष्यतीति न दृष्टार्थं तल्लक्ष्म[9]णप्रणयनम्, किन्तु दृष्टे व्यामोहः अदृष्टमपि प्रसर्पेदिति शास्त्रम्। तत्राविसंवादित्वलक्षणमदृष्टाव्यापीति नोपपत्तिमत्।

१. °नम् उत भि° मु०। २. °कालं यद्ये° मु०। ३. °यस्य बाध° मु० क०। ४. समानकालं वा यदि अ० क० मु०। ५. किं वस्त्व° ब०। ६. °श्चापयति मु०। ७. जानते ब०। ८. °णापेक्ष्यमि° ब०। ९. दृष्टार्थं लक्षण° क० मु०।

§ २८. अबाधितत्वं पुनः सकलोपाधिविशुद्धमिहोपपद्यमानमदृष्टमपि[1] व्याप्नोतीति युक्तम्। तथाहि[2]—यथा नात्रात्यासन्नातिदूराशुभ्रमणादिको विषयदोषः, नापि चलनादिरूपः आधारदोषः, न तिमिराद्युपप्लवोऽक्ष्णाम्, नापि मनसो मिद्धाद्युपहतत्वमिति कारणगुणपर्यालोचनादबाधितत्वं निश्चीयते; तथा 'नाऽयं शास्ता रागद्वेषोपहतः, नाप्यज्ञः' इति आप्तगुणपर्यालोचनात् श्रुतज्ञानस्याप्यबाधितत्वं निश्चित्यासंवादेऽपि प्रेक्षावन्तः प्रवर्तन्त इति युक्तम्।

अबाधितत्वं प्रमाणलक्षणम्।

§ २९. कारणगुणनिश्चयश्च क्वचिदबाधितत्वेन। न चेतरेतराश्रयत्वम् व्यक्तिभेदात्, अनादित्वाच्च संसारस्य। यदप्यभ्यधायि—'इन्द्रियाणामतीन्द्रियत्वात् तद्गुणानां[3] कथं प्रत्यक्षादिना ग्रहणम्' इति तदेतद् दोषेष्वपि[4] समानम्। तेऽपि हि न प्रत्यक्षादिना प्रतीयन्ते। अथ मिथ्यात्वात् तन्निश्चयः। सम्यक्त्वाद् गुणानां किं न भवति ?।

§ ३०. अथ यथा[5] घटस्योदकाहरणलक्षणा शक्तिः मृत्पिण्डात् न भवति तच्छक्तिविकलत्वात् तस्य; तथा अर्थतथात्वप्रकाशनशक्तिः प्रामाण्यरूपा कारणेषु असती, भवन्ती उत्पत्तौ स्वत इत्युच्यते। किमयथार्थप्रकाशनशक्तिः कारणेषु अस्ति न[6] वा ?। न इति चेत्, कथमप्रामाण्यं परतः।

§ ३१. अपि च—सा शक्तिः शक्तिमतो भिन्ना, किं वाऽभिन्ना, अथ भिन्नाभिन्ना, अथोभयनिषेधः ?। यद्यभिन्ना अप्रामाण्यशक्तिरपि शक्तिमत्स्वरूपवत् न दोषेभ्यः स्यात्। अथ भिन्ना तर्हि प्रामाण्यजननशक्तिरपि कारणेभ्यो भिन्ना। न चात्र व्यवस्थितविभाषा। अथ सा नास्ति कारणेषु; अशक्ताद्युत्पद्यमानं प्रामाण्यं सर्वस्मादुत्पद्येत[7]। अहेतुकं वा स्यात्। ततश्च सर्वत्र स्यात्। न वा क्वचिदिति।

शक्तिविचारः

§ ३२. किञ्च—सा शक्तिमति संबद्धा[8] किं वाऽसंबद्धा ?। यद्यसंबद्धा, न तस्य सा। अथ संबद्धा; तदा कार्यकारणभावान्नापरो व्यतिरिक्तस्य संबन्धः। तत्र यदि शक्तिमता शक्तिर्जन्यते इति पक्षः; तदा किं तेन शक्तेन जन्यते, किंवाऽशक्तेन ?। यद्यशक्तेन तदाऽन्येनापि जन्येत। अथ शक्तेन तदा[9] तत्रापि यदि सा शक्तिरभिन्ना तदा पूर्वापि तथैवास्तु। किं भेदकल्पनया[10] ?। अथ भिन्ना तदा तदेव वाच्यम्, तदेवोत्तरमित्यनवस्था। संबन्धान्तरं च निषेत्स्यमानमास्त इत्यास्ताम्। व्यतिरेकाव्यतिरेके च प्रामाण्यं स्वतः परतश्च स्यात्। उभयनिषेधस्तु[11] वस्तुनो नोपपद्यत[12] इति। न हि तदेव तदानीमेव विधीयते च[13] निषिध्यते चेति युक्तम्। तन्नोत्पत्तौ स्वतः प्रामाण्यम्। स्वकार्यपरिच्छेदे तु प्रवर्तमानमप्रामाण्यमपि[14] न किञ्चित् परमपेक्षत इति स्वतः स्यात्। अस्वसंवेदनवादिनस्तु ज्ञानस्वरूपमपि न स्वतः सिद्धं कुत एव तद्गतं प्रामाण्यमिति ?।

§ ३३. यच्चोक्तम्—'किं बाध्यम्, किं बाधकम्, कश्च तद्भावः' इति तत्रासत्प्रकाशनसामर्थ्यं मिथ्यात्वं बाध्यम्। तथाहि—ज्ञानस्य सदर्थप्रकाशनशक्तिरिव असदर्थप्रकाशनशक्ति-

---

१. °दृष्टं व्या° क० मु०। २. तथाहि नात्रा° अ०। ३. °त्वात् गुणानां मु०। ४. दोषेऽपि अ०। ५. अथ घट° मु० क०। ६. अस्ति नेति चेत् अ० ब० क०। ७. °दुत्पद्यते अ०। ८. संबद्धाऽसंबद्धा वा। यद्य° मु०। ९. तदापि यदि मु० क०। १०. भेदे ब० अ०। ११. °धस्तु नोपप° ब०। १२. नोपपद्येत क०। १३. °यते निषि° क० मु०। १४. °मप्रमाणमपि अ० क० मु०।

रप्यस्ति । किन्नासन्तं सर्वमेव प्रकाशयतीति चेत् । न, नियतविषया हि भ्रान्तयो भवन्ति । असदपि क्वचित् किञ्चित् प्रकाशयतीति । तच्च क्वचित् बाह्यात्[2] सादृश्यात् भ्रमहेतोः, क्वचित् विचित्रानुभवाहितवासनाप्रबोधविपर्यासादिति ।

§ ३४. तथा, बाधकमपि समानजातीयं विजातीयं[3] वा विज्ञानं समानकालं भिन्नकालं वा एकसन्तानवर्ति भिन्नसन्तानवर्ति[4] वा, एकविषयं सन्मन्यन्ते[5] । ननु यदेव बाध्य[6]विज्ञाने वस्तु प्रतिभातं तदेव यद्यक्षतं[7] बाधकेऽपि प्रतिभाति तत् कथं तद्बाधकम्, संवादकमेव स्यादित्युक्तम् । नाक्षतं[8] प्रतिभाति किन्तु यदेव हि मिथ्याज्ञानेन असदाकारारोपेण वस्तु प्रतिपन्नं तदेव बाधकेन तदाकारनिरासेन अन्यथा प्रतीयत इति ।

§ ३५. अथैकं वस्तु उभयविज्ञानगोचरचारि अन्यथाप्रतिभासे सति नास्तीत्युच्यते क्षणिकत्वाद्[9] वा । तन्न[10], यतो विज्ञानप्रतिभासभेदवद् अभेदप्रतिभासोऽप्यात्मनोऽस्ति । तथाहि– 'तदेवेदं वस्तु मम मरीचिकारूपेणेदानीं चकास्ति, यत् पूर्वं जलरूपेण प्रतिभातमासीत्' इति । एतच्च क्षणिकत्वनिराकरणप्रस्तावे प्रतिपादयिष्यामः ।

§ ३६. तथा, तुच्छरूपमभावमनभ्युपगच्छतां सदसदात्मकवस्तुवादिनां न तत्पक्षक्षेपः क्षतिमावहतीति । ततो वस्तुग्राहिप्रमाणं विपर्यस्त[11]प्रमाणान्तरशून्यमात्मानं वेदयमानं स्वग्राह्यमारोपिताऽसदाकारविविक्तं च प्रतिपद्यमानं ज्ञानं[12] ज्ञेयाभावव्यवहारं प्रवर्तयतीति कथं न बाधकाभावनिश्चय इति ? । तस्मात् स्थितम् 'अबाधितं प्रमाणम्' इति । ततः साधूक्तम्– **बाधविवर्जितमिति ।**

§ ३७. **सूक्तमिति** प्रमाणोपपन्नम् । लक्ष्यते व्याप्यते प्रामाण्यं तादात्म्यादनेन इति लक्षणमिति । [ ५ ]

§ १. अत एव तद्भावे[13] भावस्तदभावे चाभाव[14] इति दर्शयितुमाह–**वेदेश्वराद्य**–इति

**वेदेश्वराद्यो नैव प्रमाणं बाधसंभवात् ।**
**प्रमाणं बाधवैकल्यादर्हंस्तत्त्वार्थवेदनः ॥ ६ ॥**

§ २. **वेदा[15]श्च ईश्वरश्च आदि**ग्रहणात् प्रधानान्तरज्ञानपरिग्रहः । ते **न प्रमाणम्**, व्यापकाभावात् । तदभावश्च विरोधिसन्निधेः । तदेवाह–**बाधसंभवादिति** । बाधनम् बाधः । तस्य संभवात् । बाधाबाधयोः परस्परविरोधात् । निमित्तेन निमित्तिनं दर्शयति–**प्रमाणम्** इत्यादि । शक्रादिभ्यः पूजामर्हति इति, यद्वा रागादीन् अरीन् हन्तीति **अर्हन्** । **तत्त्वम्** जीवादयः सप्तपदार्थाः । तान् वेदयतीति "नन्द्यादिभ्यो युः"। तत्त्ववेदनेन हि हेतोः सिद्धिं दर्शयति । यत एव तत्त्ववेदनोऽत एव तज्ज्ञेयेऽतथा[16]रोपनिरास इति । एतच्च सर्वज्ञसिद्धौ दर्शयिष्यते । [६]

*वेदेश्वरादीनां प्रामाण्यस्य निषेधः।*

---

१. °न्ति । यदपि मु० । २. बाह्यसाद° क० ब० मु० । ३. समानजातीयं वा समानकालं मु० । समानजातीयं विजातीयं वा समान° क० । ४. एकसन्तानवर्ति वा एक° मु० । ५. °मन्यन्ते क० मु० । ६. बाध्ये वि° क० मु० । ७. यद्यविकलं बाध° ब० । ८. न तथैव प्रति° ब० । ९. क्षणिकाद्वा मु० । १०. तत्र मु० । ११. प्रमाणं प्रमाणान्तर° मु० । १२. ज्ञानज्ञेया° अ० ब० । १३. अत एव तद्भावः तद्भावे तदभावे वाऽभावः इति मु० । १४. °भावेऽभाव इति अ० ब० । १५. वेदश्च ब० क० । १६. °ज्ञेयेऽतत्त्वारो° मु० क० ।

§१. चोदनायास्तावत् अपौरुषेयत्वनिबन्धनं प्रामाण्यं समूलमुन्मूलयितुमाह—वचस इत्यादि ।

**वचसोऽपौरुषेयत्वं नाऽविशेषात् पटादिवत् ।**

§२. अनेन हि प्रयोगार्थो दर्शितः । प्रयोगस्तु—यद्येनासंभवद्विशेषस्वरूपम्, तत् तेन सकलमेव समानहेतुकम् । यथाऽसंभवद्विशेषः पटः पटान्तरेण । असंभवद्विशेषाणि चापौरुषेयत्वेनाभिमतानि वाक्यानि पौरुषेयैर्वाक्यैरिति । न तावदयमसिद्धो हेतुः, यतः स विशेषो दृश्यो वा स्यात्, अदृश्यो वा ? । दर्शनाभावात् न दृश्यः । दुर्भणत्वादिर्दृश्यत इति चेत्; न, जैनेन्द्रैर्षितेत्यादिष्वपि पौरुषेयेषु तस्य भावात् । विषापनयनादिको विशेष इति चेत्; न, तस्य शाबरेष्वपि मन्त्रेषु भावात् ।

वचसोऽपौरुषेयत्वनिषेधः ।

§३. न च सत्यतपःप्रभाववतां संकेतमात्रमपास्य मन्त्रत्वमुपलभ्यते । ते हि कांचन देवतां समाराध्य 'य इमामस्मद्ग्रथितां वर्णपदक्रमरचनामध्येष्यते तस्मै त्वयेदं फलं दातव्यम्' इति संकेतयन्ति । अन्यथा नित्यान्मन्त्रात् सर्वदा फलदानप्रवृत्तिः स्यात् । यतो हि भावशक्तेः फलोत्पत्तिः, साऽविकलेति न फलवैकल्यं कदाचिदपि स्यात् । न हि कारणसाकल्ये कार्यवैकल्यं युक्तिमत् तस्याऽकारणत्वप्रसंगात् । अथ न केवलान्नित्यमन्त्रादिष्टफलसिद्धिः । किं तर्हि ?, विधानादिसहकारिकारणसव्यपेक्षादिति ।

§४. ननु यदि मन्त्राः विधानादन्यतो वा कंचित् स्वभावातिशयमासादयेयुः तदापेक्षन्ता सहकारिकारणम् । न चासादयन्ति । तथाहि—स सहकारिणा विधीयमानो विशेषस्तेभ्यो व्यतिरिक्तो वाऽव्यतिरिक्तो वा स्यात् ? । व्यतिरेके ते स्वरूपेण निरतिशया एव विधानादिसहकारिसन्निधानेऽपि पूर्वकालवत् न फलं दद्युः । अव्यतिरेके तेषामनित्यताप्रसक्तेः । तथा च पौरुषेयत्वमेव स्यात् ।

§५. किञ्च—यदि भावशक्त्यैर्वाऽसंस्कार्या मन्त्राः फलं प्रयच्छन्ति तदा यजमानस्येवान्यस्याऽपि सिद्धिविधायिनो भवेयुः । नहि अन्यं प्रति अविचलितरूपो भावोऽतद्भावो भवति, तेन तस्य कस्यचित् स्वभावस्यानपाकरणात् अन्येन वा कस्यचित्स्वभावस्यानुत्कर्षणात् । तन्नापौरुषेया मन्त्राः ।

§६. अवैदिकानां च जैनादिमन्त्रकल्पानां पुरुषप्रणीतानां दर्शनात् तत्राप्यपौरुषेयत्वकल्पनायां नापौरुषेयत्वमवितथं स्यात् । तथाहि—जैनेतरयोर्मन्त्रकल्पयोर्हिंसामैथुनमिथ्यादर्शनादयोऽनभ्युदयहेतवोऽन्यथा च वर्ण्यन्ते । तत् कथमेकत्र विरुद्धाभिधायिद्वयं सत्यं स्यात् ? । जैनानाममन्त्रत्वे तदन्यत्रापि कोशपानं करणीयं स्यात् । विषकर्मादिकृतोऽपि हि जैना येद्यमन्त्रास्तदन्यत्रापि मन्त्रत्वं न स्यात् ।

---

१. °रुषेयनिब° अ० ब० । २. जैनेन्द्रृषिते° ब० । जैनेन्द्रघृषिते मु० । जैनेन्नघृषिते क० । ३. विषापनय° मु० क० । ४. °मात्र तयाऽस्य मन्त्र° मु० । ५. °न्नित्यादिष्ट° अ० । ६. कंचित् स्व° मु० । ७. °रिक्तोऽव्यति° अ० । ८. °क्त्यैव संस्का° मु० । ९. °यत्नमवि° अ० ब० । १०. तथा जैने° अ० ब० । ११. जैना अमन्त्र° क० मु० ।

§ ७. मुद्राम[1]ण्डलध्यानैरप्यनक्षरैः कर्माणि विषा[2]द्यपनयनादीनि क्रियन्ते । [3]न च तान्यपौरुषेयाणि नित्यानि वा युज्यन्ते । तेषां पुरुषक्रियासंभवे अक्षररचना[4]यां कः प्रतिघातः पुरुषाणां येन मन्त्रत्वं विशेषो भवेत्? । अथ यदि सत्यतपःप्रभाववत्पुरुषप्रभवौ मन्त्रकल्पौ कथं परस्परविरोधिनौ? । न वै सर्वत्र तौ सत्यतपःप्रभाववत्पुरुषप्रभवौ किन्तु क्षुद्रदेवताप्रतिज्ञालक्षणोऽपि हिंसाद्यनुष्ठानसाध्यफलः कश्चिदिति न पौरुषेयत्वे विरोधः ।

§ ८. अथ वेदेतरयोस्तत्त्वलक्षणोऽस्त्येव विशेषः । सत्यम्, अस्ति, न केवलं तयोरे[5]व । किं तर्हि?, डिण्डिकपुराणेतरयोरपि । न स [6]प्रक्रियाभेददीपनो नाम भेदः पुरुष[7]प्रकृतिं बाधतेऽन्यत्रापि प्रसंगात् । यदि च ता[8]दृशीं रचनां पुरुषाः कर्तुं न शक्नुयुः, कृतां [9]वाऽकृतसंकेतो विवेचयेत्–'इयं पुरुषकृता, नेयम्' इति तदा व्यक्तमपौरुषेयो वेदः स्यात् । तन्न दृश्यो विशेषः ।

§ ९. नापि द्वितीयः, अनुपलभ्यमान[10]स्य विशेषस्याविशेषकत्वात् । नागृहीतं विशेषणं विशेष्यं विशेषयति । अथ यथा विषं नागरस्वरूपादनुपलभ्यमानशक्तिकमपि [11]विविच्यते तथा लौकिक-वैदिकयोः स्वरूपभेदानुपलक्षणेऽपि[12] महान् विशेषः । ननु [13]तत्र विषस्वरूपात् न काचिद् अपरा शक्तिरस्ति या भेदिका स्यात् । भवतु वा तत्र व्यतिरिक्ताऽव्यतिरिक्ता वा शक्तिः, सा कार्यदर्शनाद् व्यवस्थाप्यते । अत्र [14]तु न किञ्चित् कार्यमस्ति यद्दर्शनाद् भेदव्यवस्था स्यात् । अथात्रापि [15]प्रमेये प्रमाणभूतप्रतीति[16]कार्यजननाद् भेदव्यवस्था[17] । [18]न, सति प्रामाण्यलक्षणे [19]विशेषेऽपौरुषेयत्वम् सत्यपौरुषेयत्वे विशेष इतीतरेतराश्रयत्वम् ।

§ १०. किञ्च–किल गिरां मिथ्यात्वहेतूनां दोषाणां पुरुषाश्रयत्वात् तदभावे तन्निबन्धनस्याप्रामाण्यस्य निवृत्तेः प्रामाण्यं वेदे भविष्यतीति पर[20]स्याशयः । [21]तदित्थं गिरां सत्यत्वहेतूनां गुणानां पुरुषाश्रयत्वात् तदभावे तन्निबन्धनस्य प्रामाण्यस्य निवृत्तौ [22]आनर्थक्यमेव वेदस्य स्यात्, विपर्ययो वा । तथाहि–ज्योत्स्नादयो अपौरुषेया अपि रात्रौ पीते वस्त्रादौ रक्तज्ञानहेतुतां प्रतिपद्यमाना मिथ्याज्ञानहेतवो दृश्यन्ते । तन्नाऽपौरुषेयत्वात् प्रामाण्यम् ।

§ ११. किञ्च–अपौरुषेयत्वं प्रत्यक्षेण वा व्यवस्थाप्येत अनुमानेन वा? । न तावत् प्रत्यक्षेण तस्याक्षानुसारितया प्रवृत्तेः । अक्षं च वर्त्तमानकालभाविनि वस्तुनि प्रत्यासीदति । अतस्तदनुसारिणी धीस्तावत्कालस्यैव अर्थस्य व्यवस्थापिका न [23]अनादिकालस्य । तावत्काल[24]स्यापौरुषेयत्वव्यवस्थापने कादम्बर्यादेरपि अपौरुषेयता दुर्निवारा स्यात् । अनादिकाल[25]लोलिङ्गितस्य वेदस्यापौरुषेयत्वमध्यक्षग्राह्यम् अभ्युपगच्छतो मीमांसक[26]स्यासर्वज्ञाभ्युपगमो विरुद्ध [27]एवं स्यात् । तन्नाध्यक्षग्राह्याऽपौरुषेयता ।

१. मुद्रामङ्गल° मु० । २. विषापनय° मु० क० । ३. नैव तानि मु० । ४. °रचनायाः मु० । ५. °रेव न किं मु० क० । ६. न स क्रिया° मु० । ७. पुरुषकृतिं मु० क० । ८. तादृशी रचनाः क० । ९. कृतां वा कृत° अ० ब० । १०. °मानस्य विशेषक° क० मु० । ११. विशिष्यते मु० क० । १२. °क्षणे महान् मु० क० । १३. ननु विष° मु० क० । १४. अत्र किञ्चित् क० मु० । १५. अथात्रापि प्रामाण्यल° मु० । १६. प्रमाणभूतप्रतीतिजननात् क० । १७. °व्यवस्थापनम् अ० मु० । व्यवस्थापना ब० । १८. ननु सति क० । १९. °लक्षणावशे° ब० । २०. पराशयः ब० । २१. तर्हि गिरां मु० । २२. अनर्थत्वमेव मु० । २३. न अतीतानादिकाल° मु० क० । २४. तावत्कालस्यापौरुषेयता मु० क० । २५. °कललिङ्गित° मु० क० । २६. °कस्य सर्वज्ञा° मु० । २७. विरुद्धवचः स्याद् मु० ।

§ १२. नाप्यनुमानग्राह्या । यतोऽनुमानं लिङ्गबलेनोदयमासादयति । न चापौरुषेयत्वप्रतिबद्धं किंचनापि लिङ्गमस्ति यद्बलेनानुमानमुदयमासादयेत् । कर्तुरस्मरणं लिङ्गमिति चेत् । ननु तदस्मरणं वादिनो लिङ्गत्वेनोपादीयते[1], सर्वस्य वा? । न तावद् वादिनः, तस्य सकर्तृकेऽपि सद्भावेनानैकान्तिकत्वात् । नापि सर्वस्य, तस्यासिद्धत्वात् । तथाहि—स्मरन्त्येव बौद्धाः वेदस्य कर्तृनष्टकादीन्, काणादाश्च हिरण्यगर्भम् । तन्न तदस्मरणं हेतुः ।

§ १३. अथ छिन्नमूलं वेदे[2] कर्तुः स्मरणम् । तथाहि—अनुभवो मूलं स्मरणस्य । न च वेदे[3] कर्तुरनुभवः । ननु केन कर्तुरननुभवः[4] किं प्रत्यक्षेण, उतानुमानेन? । तत्र यदि प्रत्यक्षेण कर्तुरननुभवाद् वेदे छिन्नमूलं स्मरणम्, तदा आगमान्तरेऽपि प्रत्यक्षेण वादि-प्रतिवादिभ्यां कर्तुरननुभावात् छिन्नमूलं स्मरणं स्यात् इति तदप्यपौरुषेयं प्रसज्यते । अथानुमानेन, तदाऽनुमानस्य वेदकर्तृसाधकस्य प्रतिपादितत्वात् कथं छिन्नमूलं स्मरणम्[5]? । अथानुमानमनेनानुमानेन[6] बाध्यते; तदेतरेतराश्रयत्वम् । तथाहि—तद्बाधायामस्य प्रामाण्यम्, अस्य च प्रामाण्ये तद्बाधेति ।

§ १४. अथ आगमान्तरे प्रयोजनाभावात् कर्तुरुपलम्भे यत्नं वादी न कृतवान् तेनानुपलम्भः । तन्न, कृतयत्नेनापि केषांचित् वटे वटे वैश्रवणादीनां कर्तुरनुपलम्भात् । अथ वैदिकेषु कर्मसु प्रचुरव्ययेषु बद्धा(द्धा)यासेषु च प्रवर्तमानः यत्नेन कर्तुरुपलम्भं कृतवान्, न चोपलब्धवान्, ततो ज्ञायते नास्ति कर्ता । तन्न[7], अनुपलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेषु यत्नवतोऽप्यनुपलम्भो नासत्तां[8] साधयति इति नास्मर्यमाणकर्तृकत्व[9][10]मनुमानम् ।

§ १५. नाप्यर्थापत्तिरभावप्रमाणं वा तयोर्निराकरिष्यमाणत्वात् । नापि यद्वेदाध्ययनं तदध्ययनपूर्वकं वेदाध्ययनत्वात्, इदानींतनाध्ययनवत् इत्यव्यभिचारि साधनम् । अन्यथा 'यः पथिकाग्निः स ज्वालापूर्वको नारणीनिर्मथनपूर्वकः पथिकाग्नित्वात् इदानींतनपथिकाग्निवत्' इत्यादेरपि साधनता स्यात् । एवमन्यदपि यदपौरुषेयतासाधनं तदविद्यमानप्रतिबन्धं सर्वमनैकान्तिकमेव । तन्नानुमानावसेयाप्यपौरुषेयतेति ।

§ १६. किञ्च—अयमपौरुषेयः[11] किं संबन्धः, किं वा वाक्यादीति? । तत्र नित्यं[12] संबन्धं व्यवस्थापयितुं संबन्धापौरुषेयवाद्याह—

शब्दार्थसंबन्धो नित्य इति पूर्वपक्षः ।

> "समयः प्रतिमर्त्यं वा प्रत्युच्चारणमेव वा ।
> क्रियते जगदादौ वा सकृदेकेन केनचित् ॥" [श्लोक० संबंधा० १३.]

अयं हि पुरुषेण संबन्धः क्रियमाणः प्रतिमर्त्यं किमेकः क्रियते, किं वाऽनेक इति? । एकत्वे कृतको न स्यात्, पूर्वमेव सिद्धत्वात् । अनेकत्वे[13]ऽपि किं सर्वे वाचकाः, किं वा तेषां मध्ये एकः कश्चिदिति? । यद्येकः, तदा तदभावे शेषसंबन्धसद्भावेऽपि प्रतीतिर्न स्यात् ।

---

१. °दीयेत क० मु० । २. वेदकर्तुः अ० ब० मु० । वेदे कर्तुः अस्मर° मु० । ३. वेदकर्तुः अ० ब० । ४. कर्तुरनुभवः क० मु० । ५. °मूलमस° मु० । ६. °रणं स्यादिति । अथ मु० । ७. °मनेन बाध्यते क० मु० । ८. तत्र मु० । ९. °लम्भोऽसत्तां ब० । °लम्भो नासत्तां शोधयतीति मु० । १०. कर्तृत्वम° क० मु० । ११. किञ्चायमपौरुषेयवाद्याह मु० क० । १२. नित्यसं° ब० । १३. अनेकेऽपि मु० क० ।

सर्वेऽपि वाचकाः किं समुदिताः, अथान्यथा ? । तत्र सर्वसंबन्धानां समुदायाभावात् न किंचित् केनचित् प्रतीयेत[1] । अथ किमनेन ? । यस्य यः संबन्धः स तेन प्रतिपत्स्यत इति ।

§ १७. अस्तु नामैवम्, यदा पुनर्बहुभिः पुंभिरेकस्य समानार्था बहवः संबन्धाः क्रियन्ते, तदा किं प्रावृत्तिकन्यायेन, किं विकल्पेन, किं वा समुच्चयेन प्रतिपादयेयुः ? । तत्र प्रावृत्तिकक्रमो यदा पशूनां पङ्क्त्या स्थितानामालम्भनार्थं[2] शलाकया चक्षुरञ्जनं क्रियते, तदा यस्य प्रथमं नयनाञ्जनं कृतं तस्यैव वध इति । तेन न्यायेन यः प्रथमः संबन्धः कृतस्तेनैवार्थप्रतिपत्तिरिति । तर्हि शेषाणामानर्थक्यमिति । अथ विकल्पेन । तदुक्तम्[3]—

"एकार्थानां विकल्पश्चेत् ।" [ श्लोक० संबन्धा० १७ ]

इति तदपि नास्ति । यतः तत्र नाम विकल्पो भवति यत्रैकमुपादाय अपरोपादाने यत्नः स्यात् । इह तु प्रथमेनैव प्रतिपन्नत्वात् किमन्येन[4] ?, व्यवहारस्याप्रतीतेः । समुच्चयोऽपि नैवास्ति । तदुक्तम्—

"समुच्चयोऽपि नैवैषाम् ।" [ श्लोक० संबन्धा० १७ ]

इति तदेवमाद्यस्यापि पौरुषेयसंबन्धस्य पाश्चात्यसंबन्धवत् नार्थप्रतिपादकत्वमिति[5] ।

§ १८. किञ्च—पुरुषः किं प्रतिपन्नार्थं पूर्वसंबन्धं करोति, किं वाऽप्रतिपन्नार्थमिति ? । पूर्वस्य कृतत्वात् किं तस्य करणेन ? । अपूर्वस्य करणे नार्थप्रतीतिः स्यात् । श्रोतुस्तदैव भविष्यतीति चेत्, कथं वक्ताऽप्रतिपन्नार्थं करोति । तस्मान्न पौरुषेयः संबन्धः । किन्तु अर्थप्रतिपत्त्यन्यथानुपपत्त्या शब्दस्य वाचिका शक्तिः, अर्थस्य तद्वाच्यशक्तिः । अयमेवासौ संबन्ध इति नित्यत्वेऽपि यस्यैव प्रतीतस्तस्यैव प्रतीतिं जनयति नान्यस्येति ।

§ १९. तदेतदविदितपरमार्थस्य परस्य[6] प्रलपितम् । तथाहि[7]—न संबन्धः पुरुषेण कश्चित् क्रियते किन्तु संकेतमात्रादक्षिनिकोचवत् शब्दादर्थप्रतीतिरिति । तन्न कश्चित् नित्यः संबन्धः[8] ।

§ २०. शब्दस्य नित्यत्वात् तस्यापि नित्यत्वमिति चेत्, न च सर्वदोपलब्धिः । तदुक्तम्—

शब्दनित्यत्वस्थापनम्

नित्यत्वव्यापित्वेऽपि शब्दस्याकाशस्येव प्रयत्नानन्तरमुपलब्धिरुपपद्यते । तथाहि—कूपादौ पूर्वमनुपलब्धस्य प्रयत्नादाकाशस्योपलब्धिर्दृष्टा, न च तस्यानित्यत्वम्, नापि व्यापित्वेऽपि सर्वत्रोपलम्भः । तथा, 'शब्दं कुरु' इति व्यपदेशाः 'आकाशं कुरु' इत्यादि व्यपदेशवत् नानित्यत्वं साधयन्ति । तथा, स्तिमितवायुस्थगितस्य शब्दस्य कौष्ठेन[9] वायुना तदपसारणे न कार्त्स्न्येनोपलब्धिः स्वरूपमात्रस्यैवोपलब्धेः । नियतदेशा हि वायवीया ध्वनयः प्रतिवर्णं भिन्ना यथा शब्दकर्तुः, तेन न सर्वत्र सर्वेषामुपलब्धिरिति । अत एव यस्यां दिशि न वायोर्गतिर्न तत्र शब्दः श्रूयत इति । तथा, एकस्यैव मुखस्य व्यञ्जकस्यादर्शखड्गादिभेदात्[10], यथा भेदाः तथा ध्वनिधर्मा अल्पमहत्त्वादयः सान्निध्यात् शब्दे उपलभ्यन्ते । तेन न प्रत्ययभेदभेदित्वादनित्यत्वमिति[11] । यथा हि घटः स्वल्पेन महता वा शब्देन प्रतिपाद्यमानो न भिद्यते, तथा शब्दोऽपि महता ध्वनिनाऽल्पेन वा व्यज्यमानोऽर्थप्रतिपादनलक्षणार्थक्रियाकारी न भिद्यत इति ।

१. प्रतीयते ब० क० मु० । २. मालभना° अ० । ३. तदयुक्तम् क० । ४. किमनेन अ० ब० । ५. नार्थे प्रतिपा° क० मु० । ६. °र्थस्य प्रलपि° क० मु० । ७. तथापि मु० । ८. न नित्यः संबन्धः क० मु० । ९. कोष्ठ्येन मु० क० । १०. °खड्गादिभिर्भेदात् मु० । ११. प्रत्ययभेदित्वा° मु० । प्रत्ययाभेदित्वा° क० ।

§२१. अथ वायवीयानां ध्वनीनां श्रोत्राऽग्राह्यत्वात्[1] कथं तद्धर्माणामल्पमहत्त्वादीनां श्रोत्रेणोपलम्भ इति?। न, शब्दस्यैकत्वेनोपलब्धेर्न[2] तद्धर्माः कल्प्यन्ते[3]। तथा हि-स एव गकारो महानल्पो वा। न तु सोऽन्योऽयमन्य इति प्रतीतिः। तस्माद् ध्वनिर्धर्माः[4] सान्निध्यात् तथा भासन्त इति।

§२२. अथ भिन्नदेशस्थितैः पुरुषैर्भेदेनोपलब्धेर्नैकः शब्द इति। तदप्यादित्येनानैकान्तिकम्। तथा हि-"विभिन्नदेशस्थिताः पुरुषा एकमप्यादित्यं केचित् पश्चिमायां दिशि उपलभन्ते, अपरे पूर्वस्यामिति।"

§२३. तदप्यसंगतम्। तथा हि-व्यञ्जकेन किमावरणविनाशः क्रियते, अथ शब्दसंस्कारः, किं वा श्रोत्रसंस्कारः, उभयसंस्कारो वा?। तत्र आवरणं यदि नित्यं न तस्य विनाशः। अथानित्यं तदा यदि नाशितं तदा न मृतः[5] पुनर्जीवतीति[6] सर्वदा शब्द उपलभ्येत। अथ क्षणिकं[7] संतानेनोत्पद्यते[8] तदा सर्वदा सान्तरमुपलभ्येत प्रयत्नविगमेऽपि[9]। शब्दस्य मीमांसकैर्व्यापिनो निरवयवस्योपगमात् तत्संस्कारे सर्वत्र सर्वैरुपलम्भः स्यात्। श्रोत्रं संस्कृतं सर्वान् शब्दानुपलभेत। न हि चक्षुरुन्मीलितं किंचिदेवोपलभते योग्यदेशस्थं नान्यमिति दृष्टम्।

शब्दनित्यत्वस्य निषेधः।

§२४. अपि च-तत्किमाकाशम्[10], अथान्यदेव किंचित्। आकाशस्यैकत्वात् सर्वेषां सर्वत्र सर्वदोपलब्धिः[11] स्यात्। अथास्माकं मीमांसकानां प्रतिपुरुषं भिन्नं श्रोत्रं तेन नायं प्रसंगः। न, सर्वेपामात्मनां सर्वव्यापित्वादेकश्रोत्रसंस्कारे सर्वे आत्मान उपलभेरन्निति तत्प्राप्यकारित्वेऽपि। अथ संबंधेऽपि यस्यैवादृष्टेनोपभोगाय संस्कृतं श्रोत्रं स एवोपलभते नान्यस्तद्देशस्थोऽपि। यथा नगरस्थितोऽपि तदधिकाराद् भ्रंशितो न तद्भोगं लभत इति। नैतदस्ति। तददृष्टमपि सर्वसंबन्धि किं न भवति?। सर्वैरकरणादिति चेत्। सर्वे किं न कुर्वन्ति?। मनोभिसन्धेरभावादिति[12] चेत्। ननु सर्वव्यापित्वेऽविचलितरूपत्वे नैतद् युज्यते एकस्य मनोभिसन्धिर्नान्यस्येति। तस्मात् यत्किंचिदेतदिति। एतेनोभयसंस्कारोऽपि निरस्त इति।

§२५. नित्यपरमाण्वारब्धस्य घटस्येव नित्यवर्णारब्धस्य क्रमस्यानित्यत्वे वर्णनित्यत्वं[13] क्वोपयोगि?। अथ वर्णानां वाचकत्वं न क्रमस्य। न हि घटक्रमो वाचको दृष्टः। नैतदस्ति। अन्वयव्यतिरेकाभ्यां हि क्रमस्यैव वाचकत्वं न वर्णानाम्, अन्यथा व्यस्तक्रमाणामपि तदर्थप्रतिपत्तिः स्यात्। क्रमविशिष्टानां वाचकत्वमिति चेत्; न, समर्थविशेषणत्वात्। तस्य च पौरुषेयत्वात्।

§२६. यच्च क्रमस्य पटकुटीदृष्टान्तेन[14] नित्यत्वं व्यावर्णितं तत् सदा जलसंगाज्जाड्यजृम्भितम्[15]। तथा हि-तक्षा[16] पटकुटीं[17] नष्टां कुर्वंस्तामेव करोति न पुनरपूर्वामिति। तद्वद्वर्णक्रमोऽपि नापूर्वः क्रियत इति। यतो दृष्टान्तेऽपि न तस्या[18] नित्यत्वं तत् कथं[19] दृष्टान्तात्

१. °यानां श्रोत्रा° मु०। २. °लब्धिर्न° मु०। ३. कल्पन्ते क०। ४. धर्मः मु०। ५. तदा मृतः पुनर्न जीव° मु० क०। ६. मृतः जीवती° अ०। ७. क्षणिकस्तं° मु० क०। ८. °नोपपद्यते मु० क०। ९. विरामेऽपि मु०। १०. °काशमन्यद्वा यदेव किं ब०। ११. सर्वोपल° मु० क०। १२. मनोऽभिसंबन्धो नान्य° मु०। १३. वर्णानित्य° अ०। १४. पट्टकुटी° ब० क० मु०। १५. जाड्यक्षुभितम् मु०। १६. तत्तु पट्टकु° मु०। १७. पट्टकुटीं ब० क०। १८. तस्याऽनित्यत्वं अ० ब०। १९. कथं न दृष्टान्तात् अ० ब०।

क्रमस्य नित्यत्वम् ? । कल्पितं तु व्यवहारमात्रं न वस्तु साधयति । न च नित्यव्यापिनां वर्णानां क्रम उपपद्यत इति । एतच्चाग्रेऽभिधास्यते । तस्मात् संकेतमात्रमेव न कश्चित् संबन्ध इति ।

§ २७. किञ्च – किमसौ एकार्थनियतः[1] संकेतेनाभिव्यज्यते, अनेकार्थनियतो वा ? । यद्येकार्थनियतः[2] न संकेतवशादर्थान्तरे वेदस्य गतिः स्यात् । दृश्यते च व्याख्यातृविकल्पः । अथ 'मा भूद्[3]दृष्टविरोधः' इत्यनेकार्थनियतोऽभिव्यज्यते । तर्हि सकलार्थसाधारणस्य वेदस्य इष्टव्यक्तिमेव करोति व्याख्यातृरूपः समयकारः, कुत एतत् ? । तेन "अग्निहोत्रं जुहुयात् स्वर्गकामः" [ मैत्रा० ६.३६ ] इति श्रुतौ 'खादेच्छ्[4]वमांसम्' इत्येष नार्थ इत्यत्र का प्रमा । तन्न स्वाभाविकः शब्दार्थयोः संबन्धः, किन्तु संकेतमात्रमेव ।

§ २८. भवतु[5], असौ नित्यो वा स्यात्, अनित्यो वा ? । अनित्योऽपि[6] पुरुषेच्छावृत्तिः, अवृत्तिर्वा ? । पुरुषानधीनत्वे न पुरुषाणां यथाभिप्रायं देशादिपरावृत्त्या तेनार्थप्रतिपादनं स्यात् । न हीच्छायामनायत्तः क्वचिन्नियुज्यते पर्वतादिवत् । पुरुषेच्छा[7]वृत्तित्वे कथमपौरुषेयत्वं स्यात् । नित्योऽपि शब्दार्थयोराश्रितः स्यात्, अनाश्रितो वा ? । अनाश्रितत्वे आकाशकल्पस्य कः संबन्धार्थः[8] ? । आश्रितत्वे च आश्रयाणामनित्यत्वादाश्रितेऽप्यनित्यता स्यात् । अथ सामान्यस्यैवाश्रयत्वभावात् तस्य च नित्यत्वात्[9] संबन्धस्यापि[10] नित्यता ।

§ २९. तदसत् । सामान्यस्य परपरिकल्पितस्याभावात् । तथा हि – तद् व्यक्तिभ्यो
सामान्यविचारः । भिन्नं स्यादभिन्नं वा ? भिन्नाभिन्नं वा ? । न तावद्भिन्नाभिन्नं विरोधात् । अथ केनाप्यंशेन भिन्नं केनाप्यभिन्नम् । ननु निरंशस्य सामान्यस्य कथमेतत् ? । किञ्च – यमात्मानं पुरोधाय 'इदं सामान्यम्' 'अयं विशेषः' इति व्यवस्थाप्यते यदि तेनात्मना भेदः, तदा भेद एव; अथाभेदः, तदा अभेद एव । अथ तत्रापि भेदाभेदौ तर्हि अनवस्था । न चेदृशं वस्तु शतशाखमध्यक्षमीक्षामहे । तन्न तत्[11] ताभ्यो भिन्नाभिन्नम् । नाप्य[12]भिन्नम् । तासां नानात्वे तस्यापि नानात्वोपपत्तेः । [13]तदेकत्वे तासामेकताप्रसंगादिति नाभिन्नम् । नापि भिन्नम् । असामान्यरूपतापत्तेः दण्डादिवत् ।

§ ३०. अनेकसंबन्धात् सामान्यमिति चेत्; न, संख्या-कार्य-द्रव्यादेरपि सामान्यरूपताप्रसंगात् । अथानुस्यूताकारतया प्रतीयमानं[14] सामान्यं नेतरदिति चेत्; ननु किमात्मरूपानुस्यूतम्, पररूपानुस्यूतं वा ? । तत्र[15] न तावदात्मरूपानुस्यूतम्, आत्मन्यनुगमाभावात् । अथ पररूपानुस्यूतम्, पररूपानुस्यूतता किं तादात्म्यम्, तत्समवायो वा ? । तद्यदि तादात्म्यम्, पूर्ववत्[16] दोषप्रसङ्गः । अथ समवायः, तदयुक्तम्; तस्याभावात् । भवतु वा । स सर्वव्यापी[17]

---

१. नियमतः मु० क० । २. °यतः संके° मु० क० । ३. अथ मास्तु दृष्ट° मु० । ४. खादेत्स्व अ० ब० मु० । ५. भवति असौ मु० । ६. अनित्यः पुरु° क० मु० । ७. °षेच्छाप्रवृत्ति° क० । ८. संबन्ध्यर्थः मु० । ९. नित्यत्वात् कथमाश्रयानित्यत्वात् संब° ब० । नित्यत्वात् कथमाश्रयनित्यत्वात्संबं° क० मु० । १०. °स्यानित्यता ब० मु० क० । ११. तन्न ताभ्यो मु० । १२. 'नाप्यभिन्नम्' इति नास्ति क० मु० प्रत्योः । १३. सामान्यस्य अ-टि० । १४. °तया अनुभूयमानं मु० । १५. वा । न ताव° मु० क० । १६. तासां नानात्वे तस्यापि नानात्वोपपत्तेरित्यादिकः अ-टि० । १७. सर्वव्यापि मु० क० ।

गोत्वं यथा गोपिण्डेषु संबन्धयति तथा कर्कादिपिण्डैरपि संबन्धयेत् । अवान्तरसंबन्धकल्पनायामनवस्था ।

§ ३१. किञ्च—सामान्यं व्यक्तिषु वर्तमानमेकदेशेन वा वर्तेत, अनेकदेशेन वा ? । नैकदेशेन, निष्प्रदेशत्वात् सामान्यस्य । नापि सामस्त्येन, एकस्यामेव व्यक्तौ परिसमाप्तिप्रसंगात् ।

§ ३२. किञ्च—केयं वृत्तिः ? । आधेयता वा स्यात्, व्यक्तिर्वा[2] भवेत् ? । नाधेयता, निष्क्रियत्वात् सामान्यस्य । गुरुणो हि द्रव्यस्य पततः स्थितिकरणादाधारः स्यात् । न चैतत् स्थितेर्भिन्नाभिन्नकरणेन सामान्ये युज्यते । नापि व्यक्तिः, नित्यस्य व्यक्तेरयोगात् । तथा हि—व्यक्तिरावरणापगमे सति ज्ञानजनकत्वमुच्यते । न च नित्यस्य ज्ञानजनकत्वं विद्यते । यदेव हि ज्ञानजनकावस्थायां सामान्यस्य रूपं तदेवा[3]ऽव्यक्तावस्थायामपीति प्रा[4]गिव न जनयेत् । यद्वाऽव्यक्तावस्थायामप्येकरूपत्वाज्जनयेत् । अथ कारकान्तरमपेक्ष्य जनयति । ननु कारकान्तरेण किं तस्य जनकत्वं क्रियते, अथ ज्ञाप्यते ? । तद्यदि क्रियते, सुस्थितं नित्यत्वम् ! । अथ ज्ञाप्यते, सिद्धं तर्हि जनकत्वं कारकान्तराभावेऽपि । भवतु, को दोष इति चेत्; कार्योत्पत्तिप्रसङ्गः । अथ कारकत्वेऽपि कार्यं न जनयेत् । अहो राजाज्ञा गरीयसी देवानांप्रियस्य ! ।

§ ३३. इतोऽपि न विद्यते सामान्यम्, तदुपलम्भकप्रमाणाभावात् । नन्वस्ति प्रमाणम् 'अनयोः सादृश्यम्' 'एषां सारूप्यम्' 'तेन सदृशोऽयम्', 'असौ वा अनेन सदृशः' इत्यादि ज्ञानं अप्रतिपन्नसामान्यस्य नोपपद्यते । अस्तीदं विज्ञानं बा[5]धाविकलं जातिज्ञापकम् । तदेतदे[6]युक्तम् । यतः किं तेन निमित्तभूतेनैवं विज्ञानमुत्पाद्यते, कर्मतापन्नेन वा ? । तद्यदि निमित्तभूतेनोत्पाद्यते, तदा ता एव व्यक्तयः समानाकारपरिणतास्तन्निमित्तं सन्तु अलं परपरिकल्पितेन सामान्येन । अथ कर्मतापन्नेनोत्पाद्यते, तन्नैवावभाति । न ह्यशेषव्यक्तिसाधारणं सामान्यस्व[7]रूपमध्यक्षमीक्षामहे । तन्न किंचित्सामान्यं य[8]दाश्रितः संबन्धः स्यात् ।

§ ३४. किञ्च—आश्रयेण नित्यस्य सतः संबन्धस्योपका[9]रः क्रियते न वा ? । अकरणे साकल्येन सकलं जगदाश्रयेत । करणे वा स तस्माद् भिन्नः स्यात्, अभिन्नो वा ? । अभेदे नित्यताहानिप्रसंगात् । भेदे च न किंचित् संबन्धस्य कृतं स्यात् । तत्संबन्ध्युपकारकरणकल्पनायामनवस्था गगनतलावलम्बिनी धूमलतिकेव प्रसरन्ती दुर्निवारा स्यात् । तन्न कश्चित् नि[10]त्यः संबंधः । न च क्रमयौगपद्याभ्यामर्थक्रियाविरोधेन संबन्धः सामान्यमन्यद्वा वस्तु नित्यं समस्तेऽपि जगत्यस्ति ।

§ ३५. किञ्च—असौ संबन्धः प्रतीतो वाऽर्थं प्रकाशयेत्, अप्रतीतो वा ? । अप्रतीतस्य सन्निधिमात्रेणार्थप्रकाशने सर्वदा स[11]र्वप्रतिपत्तॄणां प्रकाशयेत् । प्रतीतश्चेत्, केन प्रतीतः ? । किं प्रत्यक्षेण, आहोश्विदनुमानेन ? । न तावत् प्रत्यक्षेण, शब्दार्थव्यतिरेकेण तस्यानुपलब्धेः । नाप्यनुमानेन, लिङ्गस्य प्रत्यक्षेण संबन्धस्याग्रहणात् । अनुमानेन तेनैव संबन्धग्रहणे इतरेतराश्रयत्वम् । तथा हि—यावन्न संबन्धग्रहणं तावन्नानु-

शब्दार्थसंबन्धविचारः ।

---

१. °षु समर्थयति मु० क० । २. व्यक्तिपूर्वा वा क० मु० । ३. तदेव व्य° क० मु० । ४. प्रागेव जनयेत् क० मु० । ५. बाधकवि° मु० क० । ६. तदेतद्युक्तम् मु० । ७. °न्यरूप° क० मु० । ८. यत्राश्रितः क० मु० । ९. °स्योपचारः क० मु० । १०. कश्चित् सं° अ० । ११. सर्वं प्रति° अ० ।

मानम्; यावन्नानुमानं तावन्न संबन्धग्रहणमिति । अपरेणानुमानेन संबन्धग्रहणेऽनवस्था । तन्न प्रमाणप्रतीतेः[1] संबन्धः ।

§ ३६. किञ्च – असौ परिकल्प्यमानः तादात्म्यलक्षणो वा[2] स्यात्, तदुत्पत्तिलक्षणः, संयोगलक्षणः, समवायलक्षणः, विषयविषयिलक्षणो वा स्यात् ? । तत्र न तावत् तादात्म्यलक्षणः संभवत्यप्रतीतेः । अन्यथा क्षुरिकामोदकादिशब्दोच्चारणे[3] मुखपाटनपूरणादिरुपलभ्येत । न चोपलभ्यते । तन्न प्रथमः । नापि द्वितीयः, यतः शब्देन वा अर्थो जन्यते, अर्थेन वा शब्दः ? । प्रथमपक्षे न कश्चिदपरिपूर्णेच्छः स्यात् । द्वितीयेऽपि अर्थेषु यथास्वं पुरुषबुद्धिनिरपेक्षाणां शब्दानां श्रवणं स्यात् । न चार्थमात्रात् पुरुषबुद्धिनिरपेक्षाः[4] शब्दा उत्पद्यन्ते । तथा हि – अर्थदर्शनम्, ततः तत्प्रतिपादनाभिप्रायः, ततो विवक्षा, ततः स्थानकरणाभिघातः, ततः शब्दनिष्पत्तिरिति नार्थजन्यता शब्दानाम् । न च नित्यत्वेनाभ्युपगतानां शब्दानामयं प्रकारः संभवति । तन्न तदुत्पत्तिलक्षणोऽपि[5] । नापि संयोगलक्षणः, यतो मुखे शब्दस्योपलब्धिः, भूमावर्थस्य । नापि समवायलक्षणः, अयुतसिद्धानामाधार्याधारभूतानामेव हि स[6] वर्ण्यते । न च शब्दार्थयोरयुतसिद्धिराधाराधेयभावो वा[7] घटते । तन्न समवायोऽपि । विषयविषयिभावोऽपि वाच्यवाचकभाव एव । स च सति संबन्धे नित्ये सांकेतिके वा[8] स्यात् न पुनरसति संबन्धे । अन्यथा सर्वार्थैर्वाच्य[9]वाचकभावः स्यात् । तन्न कश्चित् वास्तवः संबन्धो यस्यापौरुषेयता परिकल्प्येत ।

§ ३७. नापि वर्णा अपौरुषेयाः, तेषां लोक-वेदयोर्भेदानभ्युपगमात् । तदपौरुषेयत्वसाधने
वर्णापौरुषेयत्वनिषेधः न किंचिन्नाऽपौरुषेयं स्यात् । ततो मिथ्याशब्दानामप्यपौरुषेयत्वे निष्फलैवापौरुषेयता । भेदाभ्युपगमे वाऽभ्युपेतहानिः । प्रत्यभिज्ञाया अप्रामाण्यं च स्यात् । तथा हि – वेदगकारं श्रुत्वा पुंसः 'स एव गकारो यो मया लौकिकेषु वाक्येषूपलब्धः' इति प्रत्यभिज्ञानोत्पत्तेः । तदप्रामाण्ये सर्वत्र प्रत्यभिज्ञायामनाश्वास इति न वर्णानामपौरुषेयता भवतां श्रेयस्करीति ।

§ ३८. नापि वाक्यम् । यतस्तद् वर्णेभ्यो भिन्नं वा स्या[10]दभिन्नं वा ? । अभेदे वाक्यमेव
वाक्यविचारः । स्यात्, वर्णा एव वा स्युः । भेदेऽपि तददृश्यं वा स्यात्, दृश्यं[11] वा ? । अदृश्यत्वे न ततोऽर्थप्रतिपत्तिः स्यात् । न ह्यप्रतीताद् वाक्यादर्थप्रतीतिः साधीयसी । अप्रतीतादप्यर्थप्रतीतौ न प्रतीतेर्विरामः स्यात् । नापि दृश्यम्, अनुपलम्भात् । न हि देवदत्तादिवर्णव्यतिरिक्तं किञ्चिद्वाक्यमुपलभामहे ।

§ ३९. किञ्च – तद्वाक्यं वर्णद्वारेण वा प्रतीयेत, स्वातन्त्र्येण वा ? । न तावत् स्वातन्त्र्येण, न हि अ[12]वर्णश्राविणो वाक्यप्रतीतिरस्ति । वर्णैरपि प्रतीयमानं वाक्यं सावयवं स्यात्, अन-

१. °प्रतीतस° मु० क० । २. °णः, तदुत्प° मु० । ३. °रणात् मुख° क० । ४. °निरपेक्षात् श° अ० ब० क० । ५. °क्षणो नापि° क० मु० । ६. हि वर्ण्य° क० मु० । ७. °भावो घटते क० मु० । ८. सांकेतिके च स्यात् अ० । ९. सर्वार्थे वाच्य° मु० । १०. वाऽभिन्नं क० । ११. दृष्टं वा मु० । १२. न हि अनवर्ण° अ० ।

वयवं वा ? । तेऽप्यवयवाः प्रत्येकं सार्थकाः स्युः, निरर्थका वा ? । सार्थकत्वे एकावयवप्रतीतावपि सकलवाक्यार्थप्रतीतिः प्रसज्येत । निरर्थकत्वे सकलावयवप्रतीतावपि न वाक्यार्थप्रतीतिः स्यात्[1] । नापि निरवयवम् । तद्धि वर्णैः समस्तैर्वा प्रत्याय्यते व्यस्तैर्वा ? । न तावत् समस्तैः, उच्चरितप्रध्वंसिनां वर्णानां सामस्त्यासंभवात् । नापि व्यस्तैः, प्रथमवर्णश्रवणकाल एव सकलस्य वाक्यस्य प्रतीतेः शेषवर्णोच्चारणस्य वैयर्थ्यप्रसंगात् ।

§ ४०. अथ समस्तवर्णसंस्कारवत्या अन्त्यवर्णबुद्ध्या वाक्यावधारणमिष्यते । ननु[2] किं तत् स्मरणं उताध्यक्षम् ? । न तावत् स्मरणम्, विद्यमानान्त्यवर्णग्राहकत्वात् । नापि प्रत्यक्षम्, अविद्यमानपूर्ववर्णविषयत्वात् । अथ पूर्ववर्णस्मरणान्त्यवर्णग्रहणाभ्यामेकं विकल्पज्ञानं जन्यते तेन वाक्यावधारणम् । नन्वेवं[3] कल्पनाज्ञानविषयत्वे काल्पनिकत्वं वाक्येऽभ्युपगतं स्यात् । न वस्तुरूपता । अनेकवर्णानां चैकवाक्यप्रतिपादनेऽर्थे क एषां व्याघातः ?, येनैकं वाक्यं वर्णव्यतिरिक्तम् अर्थ[4]प्रतिपादकं कल्प्येत ।

§ ४१. कल्प्यमानं वा तदनित्यं स्यात्, नित्यं वा ? । यद्यनित्यम्[5], करणव्यापारान्वयव्यतिरेकानुविधानात् पौरुषेयमेव स्यात् । तदुक्तम्—

"अनित्यं यत्नसंभूतं पौरुषेयं कथं न[6] तत् ।" [ प्रमाणवा० ३.२५१ ]

अथ नित्यम्, सामर्थ्यतिरस्कारा[7]योगात् सर्वदाऽर्थप्रतीतिं जनयेत् । आवृतत्वान्नेति[8] चेत्; न, नित्यस्यावरणायोगात् । किंचित् कुर्वाणं हि आवरणं स्यात् । न च नित्यस्य किंचित् कर्तुं पार्यते । करणे वाऽनित्यताप्रसक्तेः । यदि च ताल्वादिव्यापारेऽपि कदाचिदनुपलब्धिर्वाक्यस्य स्यात् तदा व्यंग्यधर्मा[9]नुविधानात् किंचिदावरणमपि कल्प्येत[10] । व्यङ्ग्यस्य हि घटादेरेष धर्मो यदुत प्रदीपादौ व्यञ्जके सति न सर्वदोपलब्धिः । अन्यथा ताल्वादिव्यापारे नियमेनोपलभ्यमानस्य शब्दस्य व्यङ्ग्यत्वपरिकल्पने घटस्यापि कुलालादिव्यङ्ग्यताप्रसंगः । तन्न किंचित् वाक्यम् ।

§ ४२. वर्णानुपूर्वी वाक्यमिति चेत्; ननु साप्यानुपूर्वी वर्णेभ्यो भिन्ना स्यात्, अभिन्ना वा ? । न तावद्भिन्ना, भिन्नवाक्यदूषणेनैव तस्या निरस्तत्वात् । नाप्यभिन्ना, यतो वर्णबाहुल्यानभ्युपगमात् । तद्रूपायां चानुपूर्व्यामग्निरित्येव स्यात्, न गगनमिति ।

§ ४३. किञ्च—तेऽपि वर्णा नित्याः स्युः, अनित्या वा ? । अनित्यत्वे तेषां पौरुषेयत्वमेव स्यात् । नित्यत्वे व्यापिनो स्युः अव्यापिनो वा ? । अव्यापित्वे[11] न सर्वत्रोपलम्भः स्यात् । तथा हि—कान्यकुब्ज[12]देशव्यवस्थितस्य शब्दस्य न मान्यखेटदेशव्यवस्थैः पुंभिरुपलम्भः स्यात् । अप्राप्यकारित्वात् श्रोत्रस्य अदोष इति चेत्; न, तत्रापि योग्यतापेक्षणात् अयस्कान्ता[13]यःकर्षणवत् । व्यापित्वाभ्युपगमे नानुपूर्वी स्यात् । तथा हि—सा देशकृता वा स्यात् यथा पिपीलिकानां पङ्क्तौ, कालकृता वा स्यात् यथा बीजांकुरादीनाम् । तत्र न तावत् देशकृता, अन्योऽन्यदेशपरिहारेण वृत्तिर्हि देशपौर्वापर्यम् । तत् सर्वस्य सर्वत्र तुल्यदेशत्वात् वर्णेषु न

१. °तीतिः प्रसज्येत । नापि मु० । २. ननु तत् अ० । ३. नत्वेवं क० । ४. अर्थे प्र° क० अ० । ५. यद्य मु० क० । ६. कथं नु तत् क० । कथं तु तत् मु० । ७. °तिरस्कारयोगात् क० । ८. जनयेत् न नित्य° अ० । ९. तदा व्याप्यधर्मा मु० । १०. कल्पेत अ० । ११. °पिनो वा स्युः क० । १२. कन्य क० अ० ब० । १३. °न्तापकर्षण° अ० ।

संभवति वातातपादिवत् आत्मादिवच्च । नापि कालकृता, यतः कालपौर्वापर्यं यदैको नास्ति तदा अन्यस्य सद्भावात् स्यात् । तच्च नित्येषु न संभवति । सर्वस्य सर्वदा भावात् । न चान्या गतिरस्ति । तत् कथं वर्णानुपूर्वी वाक्यं यदपौरुषेयं परिकल्प्येत ।

§ ४४. वाक्यदूषणेनैव च पदस्यापि निरस्तत्वात् न तद्दूषणं पृथगुच्यते । तन्न किञ्चिद्वैदिकमपौरुषेयं यन्निबन्धनः प्रामाण्यलक्षणो विशेषो वेदे स्यात् यत्सद्भावात् असिद्धता हेतोर्भवेत् ।

§ ४५. नापि विरुद्धता, हेतोः सपक्षे सद्भावात् । नाप्यनैकान्तिकता, जगतोऽहेतुकताप्रसङ्गात् । तथा हि – कार्यभेदाभेदौ कारणभेदाभेदपूर्वकौ, अन्यस्य भेदहेतोरभावात् । तदुक्तम् – "अयमेव हि भेदो भेदहेतुर्वा यदुत विरुद्धधर्माध्यासः कारणभेदश्च ।" तौ चेन्न भेदकौ विश्वस्य वैश्वरूप्यं हीयेत । तत्र यदि लौकिक-वैदिकयोर्भिन्नकारणता स्यात् तदा कार्याभेदोऽहेतुकः स्यात्, कारणस्य हेत्वभेदस्याभावात् । तथाऽविकलेऽपि कारणभेदे यदि कार्यभेदो न भवेत् सोऽप्यहेतुकः स्यात् । यथा हि कारणाभावे भवद् अहेतुकम् तथाऽविकलेऽपि कारणे अभवद् अहेतुकमेव स्यात् । न च भेदाभेदौ विहाय अपरं जगदस्तीति अहेतुकं सकलं स्यात् । न चाहेतुकम्, नित्यं सत्त्वादिप्रसङ्गात् । तन्नानैकान्तिकताऽपि । तस्मात् स्थितमेतत् नापौरुषेयो वेद इति । तन्न तन्निबन्धनं वेदस्य प्रामाण्यमिति स्थितम् ॥ [ ७[१] ] ।

§ १. नन्वीश्वरस्य सर्वकर्तृत्वात् सर्वज्ञत्वे सिद्धे कथं न प्रामाण्यम् ? । तथा हि – भूर्भूध-
ईश्वरप्रामाण्यविचारः । रादिकं बुद्धिमत्कारणपूर्वकम्, कार्यत्वात् । यद्यत् कार्यं तत्तत् बुद्धिमत्कारणपूर्वकम्, यथा घटादि । तथा च भूभूधरादिकम् । तस्मात् तत् तथेति । नैतत् साधनम्, स्वरूपासिद्धत्वात् । तदाह – स्वरूपेणेत्यादि –

**स्वरूपेण विशेषेण न सिद्धं भूधरादिषु ॥ ७ ॥**

§ २. ननु कस्येदमसिद्धम् ? । किं गृहीतसंकेतस्य, किं वाऽगृहीतसंकेतस्य ? । यद्यगृहीतसंकेतस्य, तदा धूमोऽपि न नालिकेरद्वीपायातस्य सिद्धः । अथ गृहीतसंकेतस्य, तदाऽस्मदादेः सिद्धत्वात् कथमसिद्धम् ? । नैतदस्ति । नागमसिद्धं वस्तु साधयति किन्तु प्रमाणसिद्धम् । न च जगदादौ भूविमानादीनां प्रत्यक्षेण कार्यत्वं प्रतीयते । अनुमानेन प्रतीयत इति चेत्; तथा हि – यत् संस्थानवत् तत् कार्यम्, यथा पटः । तथा, यद्रचनावत् तदवश्यं विनश्यति, यथा तन्तुव्यतिषङ्गजनितं रूपं तन्तुविनाशात्, तन्मोचनाद्वा विनश्यति ततो विनाशात् कार्यत्वं पृथिव्यादेरनुमीयत इति ।

§ ३. अथ किमिदं रचनावत् ? । किं परमाणवः, किं वाऽवयवी ? । न तावदणवः, तेषां नित्यत्वाभ्युपगमात् । यथा हि जैनस्यावयविनमन्तरेणापि परमाणवः परिणमन्तः कार्यरूपतां भजन्ते न तथा नित्याणुवादिनामिति । नाप्यवयवी, तस्याभावात् ।

१. सद्भावः स्यात् मु० क० । २. °वति सर्वेदा क० मु० । ३. हीयते मु० ब० । ४. भूभृद्धरादि° मु० क० । ५. तथेति । ननु कस्ये° मु० । ६. साध्यति मु० । ७. किन्तु सिद्धम् मु० । ८. विनंक्ष्यति ब० मु० क० ।

§ ४. ननु धर्मिणं प्रतिपद्यते परः किं वा नेति ?। यदि न प्रतिपद्यते, तदा[1] तन्निराकरणहेतोराश्रयासिद्धत्वमस्य। अथ प्रमाणेन[2] प्रतिपद्यते; तदा कथं तन्निरासः ?। नैष दोषः। यतः प्रसङ्गविपर्ययसाधनाभ्यां तन्निरासं मन्यते। तथा हि—यदनेकवृत्ति[3] तदनेकम्, यथा जलानलम्। अनेकवृत्तिश्चावयव्यभ्युपगम्यते इति प्रसङ्गः। न चानेकरूपोऽभ्युपगम्यते। तन्नानेकवृत्तिरिति प्रसङ्गविपर्ययः। व्याप्याभ्युपगमस्य व्यापकाभ्युपगमनान्तरीयकत्व[4]प्रदर्शनात् नाश्रयासिद्धता प्रसङ्गहेतोः। व्यापकश्च निवर्तमानो व्याप्यमादाय निवर्तत इति व्यापकाभावे व्याप्याभावोऽपि नासिद्ध इति सिद्धो विपर्ययहेतुरपि। निमित्तान्तराभावाद् व्याप्तिसिद्धेः नानैकान्तिकौ[5]। तथा हि—यत् यन्मात्रनिमित्तं तत् तस्मिन् सति भवत्येव। यथान्त्यकारणसामग्रीमात्रनिबन्धनोऽङ्कुरः। विरुद्धधर्माध्यासमात्रनिमित्तश्च भेदव्यवहार इति स्वभावहेतुः। प्रतिभासभेदोऽपि न विरुद्धधर्मतामतिक्रामतीति नासिद्धता। सपक्षे भावात् न विरुद्धता। तन्निमित्ते सत्यप्य[6]भवतोऽन्यनिमित्ताभावात् सर्वत्राभवनप्रसङ्गो व्यापकविरुद्धोपलब्धिः। विपर्यये[7] बाधकं प्रमाणम्, सापेक्षत्वानपेक्षत्वयोर्विरोधात्[8]। तथा हि—यथा निमित्ताभावेऽपि भवतोऽहेतुकता तथाऽविकले निमित्ते सत्यप्य[9]भवतोऽहेतुतैव। अहेतोश्चासत्त्वं सत्त्वमेव वा सदा स्यात्। तन्नानैकान्तिकता।

§ ५. एकस्य युगपदनेकवृत्तित्वमेव च विरुद्धधर्मसंसर्गः। तथा हि—अवयवेषु अवयवी सामस्त्येन वा वर्तेत, एकांशेन वा ?। सामस्त्येन[10]वृत्तावेकस्मिन्नेवावयवे परिसमाप्तत्वादनेकवृत्तित्वं न[11] स्यात्। [12]एकद्रव्यं च द्रव्यं स्यात्। एकस्य चाणोर्विभागाभावात् नित्यत्वं च कार्यद्रव्यस्य स्यात्। एकस्य चाजनकत्वम्, सामग्र्या जनकत्वात्। अवयवेषु चावयवीति प्रत्ययाभावः प्रसज्येत। वृत्तौ चैकैकस्मिन्नवयवे युगपद्भावाभावौ स्याताम्। तथा हि—'एकस्मिन्नवयवे सामस्त्येन वर्तते' इति तत्र सद्भाव उक्तः। पुनरन्यत्र तथैव वर्तत इति तदैव तत्रैवासद्भाव इत्येकत्र युगपद्भावाभावयोर्विरोधः।

§ ६. नाप्यंशेन निरंशस्य तस्योपगमात्। सांशत्वे वा तेऽपि ततो भिन्नाः स्युरभिन्ना वा ?। भिन्नत्वे पुनरप्यनेकांशवृत्तेरेकस्य सामस्त्यैकांशविकल्पानतिक्रमः। अभिन्नत्वे अंशान्तर्गमेंऽशिनः तद्भेदा[13]दभावप्रसङ्गः। अंश्यन्तर्गमेंऽशानां, ततो निरंशोंऽशी स्यात्। तत्र च पूर्वनीतितोऽनेकवृत्त्यभावोऽनेकवृत्तित्वे वा विरुद्धधर्माध्यासिता।

§ ७. अथ अवयविनोऽवयवेषु वृत्तिस्[14]तत्र समवायः। ननु सोऽपि समवायस्तेषु वर्तते न वा ?। यदि समवायस्य समवायान्तराभावात् न वर्तते तदा यावदसौ पाण्यादिषु पुरुषावयविनं संब[15]न्धयति तावत् तन्त्वादिषु अपि किं न संबन्धयति, अवृत्तेरविशेषात्। अथ वर्तते, तदा तत्रापि यदि समवायो वृत्तिः, तदानवस्था। अथानेकावयवाधेयत्वम्, तदा 'यद् अनेकवृत्ति तदनेकम्' इत्यनेनैव साधनेन तस्याभावः। तन्नावयविनोऽनेकावयवसमवायस्तत्र वृत्तित्वम्। ततः सिद्धा प्रसंगहेतोर्विरुद्धधर्मात्मता।

---

१. तदा किं तन्नि° मु०। २. प्रमाणे प्र° मु०। ३. °कवृत्तिः तद° मु० क०। ४. °रीयकप्रद° मु० ब० क०। ५. °कान्तिकः। तथाहि ब०। ६. सत्यपि भव° मु० क०। ७. °लब्धिः सापेक्ष° मु०। ८. °रोधात् विपर्यये बाधकं प्रमाणं तथाहि मु० क०। ९. सत्यपि भव° मु० क०। १०. सामस्त्ये वृ° मु० क०। ११. त्वं स्यात् मु० क०। १२. एकं द्रव्यं मु० क०। १३. तद्भदभेदाभावप्र° अ०। १४. वृत्तिस्तत्सम° अ०। १५. संबन्धयति अ०।

§ ८. इतोऽप्यवयविनोऽनेकावयववृत्तेर्विरुद्धधर्माक्रान्तता । यत एकस्मिन्नवयवे चलति[1] चलत्वं प्राप्नोति । पुनस्तदैव द्वितीयावयवाचलत्वेऽचलत्वम् । तथैकावयवरागे रागोऽपरागे चापरागः[2] । तथा, आवरणे आवरणम्, अनावरणे चानावरणमिति निरंशस्य युगपच्चलाचलत्वादियोगो विरुद्धधर्मसंसर्गः । न चावयवानामेव चलत्वादिकं नावयविन इति वक्तव्यम् । एकस्य पाण्यादेश्चलाचलादिप्रतीतिप्रसङ्गात् । तथा हि—अवयवचलनाच्चलत्वावभासः स्यात्, तत्रैव चावयवे स्थितस्यावयविनोऽचलनादचलत्वप्रतीतिरित्येवं रक्तादिषु अपि वाच्यम् ।

§ ९. किञ्च—अवयवेभ्योऽवयवी भिन्नो वा[3] स्यादभिन्नो वा[4] ? । यद्यभिन्नः, तदाऽवयवभेदवद् अवयविनः खण्डशो भेदप्रसङ्गः । अवयविस्वरूपवद्वा अवयवानामभेदः स्यात् । तथा चैकस्यानंशस्याप्रतिभासनाद् अप्रतिभासं जगत् स्यात् । अथ भिन्नः, तदा तस्यानुपलम्भाद् असत्त्वमेव । तथा हि—यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते तदसदिति व्यवहर्तव्यम् । यथा खर[5]विषाणादि । नोपलभ्यते चोपलब्धिलक्षणप्राप्तो[6]ऽवयवेभ्यो व्यतिरिच्यमानमूर्तिरवयवीति स्वभावानुपलब्धिः । परैरवयविनो दृ[7]श्यत्वाभ्युपगमान्नासिद्धविशेषणता[8] हेतोः । ऊर्ध्वाधोमध्यभागव्यतिरिक्तवपुषोऽप्रतिभासनात् न स्वरूपासिद्धता । न च समानदेशत्वादवयविनोऽवयवेभ्यः पृथगनुपलक्षणमिति वाच्यम्, समानदेशत्वेऽपि रूपरसयोर्वातातपयोश्चैकेन्द्रियग्राह्यत्वेऽपि पृथगुपलक्षणात् ।

§ १०. अथ दूरदेशस्यावयवाप्रतिभासेऽप्यवयविनः प्रतिभासनात् कथं नासिद्धता ? । तदसत्, अस्पष्टाकारस्यावस्तुत्वेन तत्प्रतिभासस्य भ्रान्तत्वात् । वस्तुत्वे वा[10]ऽन्यस्यापि निकटदेशस्य सोऽस्पष्टाकारः सुतरां प्रतिभासेत[11] । अथाकारद्वयमवयविनः स्पष्टम् अस्पष्टञ्च । तत्र निकटस्थः स्पष्टमुपलभते, दूरस्थस्तु[12] अस्पष्टमिति । ननु असावस्पष्टाकारो यदि अवयवदेशः, तदा निकटस्थ आकारद्वयमुपलभेत । अथान्यदेशस्त[13]दात्मनः पृष्ठतः तं पश्येत् । किञ्च तदाकारद्वयम् अवयविनः केन गृह्यते ? । न तावद्दूरदेशज्ञानेन । तत्र निकटदेशज्ञानविषयस्पष्टरूपानवभासनात् । अस्पष्टस्वरूपप्रतिभासं हि त[14]दनुभूयते । नापि निकटदेशज्ञानेन । स्पष्टरूपावभासवेलायां हि त[15]त्र नापरोऽस्पष्टाकारः प्रतिभा[16]ति । तन्नावयविन आकारद्वययोगः ।

§ ११. अथ 'दूरदृष्टमवयविनः स्वरूपं परिस्फुटमिदानीं पश्यामि' इति तयोरेकता । ननु किमपरिस्फुटरूपतया परिस्फुटमवगम्यते, आहोश्वित् परिस्फुटरूपतयाऽपरिस्फुटम् ? । तत्र यद्याद्यः पक्षस्तदाऽपरिस्फुटस्व[17]रूपसंबन्धित्वमेवावयविनः प्राप्नोति, परिस्फुटरूपस्यापरिस्फुटरूपानुप्रवेशेन प्रतिभासनात् । अथ द्वितीयः, तदा स्पष्टस्व[18]रूपसंबन्धित्वमेव स्यात्, अस्फुटस्य विशदरूपानुप्रवेशेनावभासनात् । तन्न स्वरूपद्वयावगमोऽवयविनः । न चैकस्य विरुद्धधर्मद्वययोग उपपत्तिमान् । ततः स्फुटास्फुटरूप[19]योरेकत्वप्रतिभासनमभिमानमात्रम् ।

---

१. चले सति मु० । २. चारागः अ० ब० । ३. भिन्नो स्या° अ० । ४. °भिन्नो यद्य° मु० । ५. खरे विषा° अ० । ६. °प्राप्ताऽवय° क० मु० । ७. °विनोऽदृश्य अ० । ८. °णता । नच मु० । ९ °सिद्धता । अस्पष्टा° अ० । १० °ले चान्य° ब० । ११. °भासते क० मु० । १२. °स्थोऽस्प° मु० । १३. °देशस्थस्त° मु० । १४. दूरदेशज्ञानम् अ-टि० । १५. हि नाप° अ० । १६. प्रतिभासते क० मु० । १७. स्फुटरूप° मु० क० । १८. स्पष्टरूपत्वमेव क० मु० । १९. °स्फुटतयोरे अ० ।

§ १२. अथालोकभावाभावकृतस्तत्र स्फुटास्फुटप्रतिभासभेदः। नन्वालोकेनापि अवयविस्वरूपमेवोद्भासनीयम्। तच्चेदविकलं दूरदेशज्ञाने प्रतिभाति कथं न तत्र स्फुटावभासः?। अन्यथा विषयभेदमन्तरेणापि ज्ञानप्रतिभासभेदे न ज्ञानावभासभेदो रूप-रसयोरपि भेद[1]व्यवस्थापकः स्यात्। अथावयविस्वरूपमुभयत्राप्येकमेव प्रतीयते। स्फुटास्फुटाकारौ तु ज्ञानस्यात्मानावित्युच्यते। तदसत्। यदि तौ ज्ञानाकारौ; कथमवयविरूपतया प्रतिभासत इत्यभ्युपगमः?। तदुपगमेऽवयव्याकारौ तावुपगन्तव्यौ। न चापरं स्फुटा[2]स्फुटाकारतां मुक्त्वा अवयविस्वरूपमाभाति। व्यक्ताव्यक्ताकारात्मनश्चावयविनो व्यक्ताव्यक्ताकारवद् भेदः। तन्नावयवी दूरदेशस्थावयवाप्रतिभासेऽपि प्रतिभाति।

§ १३. किञ्च—किं कतिपयावयव[3]प्रतिभासे सत्यवयवी प्रतिभातीत्युपगम्यते, आहोस्वित् समस्तावयवप्रतिभासे?। यद्या[4]द्यः पक्षः, तदा जलमग्नमहाकायस्तम्भादेरुपरितनकतिपयावयवप्रतिभासेऽपि समस्तावयवव्यापिनः स्तम्भावयविनः प्रतिभासः स्यात्। नापि द्वितीयः, मध्यपरभागवर्तिसमस्तावयवप्रतिभासासंभवेनावयवविनोऽप्रतिभासप्रसंगात्।

§ १४. अथ भूयोऽवयवग्रहणे सत्यवयवी गृह्यते इत्य[5]भ्युपगमः। तस्मिन्नपि समस्तावयवव्यापिनोऽवयविनो[6]ऽग्रहणात्। तथा हि—अर्वाग्भागभाव्यवयवग्राहिणा प्रत्यक्षेण परभागभाव्यवयवाग्रहणात् न तेन तद्व्याप्तिरवयविनो गृहीतुं शक्या, व्याप्याग्रह[7]णे तद्व्यापकस्यापि ग्रहीतुमशक्यत्वात्, ग्रहणे वाऽतिप्रसङ्गः स्यात्। न[8] च व्यवहितावयवाप्रतिभासेप्य(पि) व्यवहितोऽवयवी प्रतिभाति इति वाच्यम्। व्यवहितावयविस्वरूपावभासे तल्लग्नान्यावयविस्वरूपस्याप्यवभासः स्यात्, तथा तदन्यस्यापि इति सर्वस्य सर्वावयविग्रहणप्रसङ्गात्। ततो[9] व्यवहितावयवव्यापिरूपादर्वागवयवव्यापिनोऽवयविरूपस्य भेदप्रसङ्गः। तथा हि—यस्मिन्नवभासमाने यन्न प्रतिभाति तत् ततो भिन्नम्। यथा घटादप्रतिभासमानः पटः। न प्रतिभाति चार्वागवयवव्यापिरूपे प्रतिभासमाने परा[10]वयवव्याप्यवयविरूपम्। तत् कथं न ततो भिन्नम्। तथाप्यभेदेऽतिप्रसङ्ग उक्तः। परभागावय[11]वग्राहिणा तु प्रत्यक्षेण तद्व्याप्येवाऽवयविस्वरूपं गृह्येत, नार्वा[12]क्परावयवव्याप्यवयविस्वरूपग्रहः [13]प्रत्यक्षानुसारेण स्मृतेः प्रवृत्तेरिति। तन्ने[14]श्वरवादिमतेन किञ्चित्कार्यं सिद्धमस्ति।

§ १५. तथा—यथाविधं घटादिषु बुद्धिमता व्याप्तं दृष्टम्, अदृष्टकर्तृ[15]काणामपि जीर्णकूपादिषु 'बुद्धिमता कृतम्' इति बुद्धिमुत्पादयति, न तथाविधं भूधरादिषु सिद्धम्। तदाह—**"विशेषेण न सिद्धं भूधरादिष्विति"**। नन्वेवं विकल्पने न किञ्चिदनुमानं स्यात्। तथा हि—यथाविधो धूमो धूमध्वजपूर्वकत्वेन दृष्टान्ते दृष्टः, न तथाविधः साध्यधर्मिणि सिद्ध इति। अथ धूमसामान्यं सिद्धम्। अत्रापि कार्यसामान्यमिति समानम्। ननु कार्यसामान्यात्

---

१. °रपि व्यव° अ०। २. °परं स्फुटाकारतां मु०। ३. °वयवाभासे अ० ब०। ४. यदाद्यः क० मु०। ५. इत्युपगमः क० मु०। ६. °यविग्रहणात् क० मु०। ७. °ग्रहणात् तद्व्या° मु०। ८. स्यात्। तत्र व्य° मु०। ९. ततोऽव्य° मु०। १०. °माने अपरा° अ०। ११. °गावयविग्रा° ब०। १२. °णेनार्वाकारावयवव्या, क० मु०। १३. °ग्रहः अक्षानु° ब०। १४. तन्नेश्वरादिवादि° अ०। १५. °कर्तृणामपि क० मु०।

कारणसामान्ये सिद्धेऽपि नेष्टसिद्धिः । न, यथा वह्निसामान्यसिद्धौ तद्विशेषसिद्धिः तथा कारणसामान्यात् कारणविशेषसिद्धौ कथं नेष्टसिद्धिः ? । सिद्ध्यतु यथादृष्टो विशेषः । न हि धूमेनाप्यलौकिको वह्निः साध्यते; तथेहापि दृष्टान्तदृष्टो विशेषः सिद्ध्यतु । न तु नित्यबुद्ध्यादियुक्तः ।

§ १६. अपि च – नित्यायां बुद्धौ संबन्धाभावात् मत्वर्थीयोऽपि नोपपद्यते । अनित्यत्वे तु तां[1] यदि बुद्ध्यन्तरेण करोति तदा तामपीति अनवस्था । अथ बुद्धिमन्तरेणापि करोति; तदा न बुद्धिमत्पूर्वकं सर्वमिति व्याप्तिः । अकृष्टोत्पत्तयश्च वने वनस्पतयः कर्तारमन्तरेणापि उत्पद्यमाना दृश्यन्त इति कथं व्याप्तिः ? ।

§ १७. अदृश्यत्वात्[2] कर्तुस्तथेति चेत्; ननु किमदृश्यत्वात्, किं वाऽभावात्तथेति संदिग्धविपक्षव्यावृत्तिको हेतुः । पक्षेण[3] व्यभिचाराभावादिति चेत्; येन येन व्यभिचारः तस्य तस्य पक्षीकरणे न कश्चिदहेतुः स्यात् । किंच घटेऽपि स एवादृश्यः कर्ता भवतु न कुलालः । तत् कथं तद्दृष्टान्तात् कर्तृसिद्धिः ? । कुलालस्य दृष्टत्वात् नान्यकल्पनेति चेत्; वनस्पत्यादिष्वपि दृष्टमस्तु, किमदृष्टकल्पनया ? । [७]

§ १. अपि च – यथाऽयं हेतुः कर्तारं साधयति तथेष्टविपर्ययमपि । तदाह – **विरुद्ध**मित्यादि ।

## विरुद्धं चेष्टघातेन न कार्यं कर्तृसाधनम् ।

§ २. तथा हि – कुलालः शरीरी, सरागः, असर्वज्ञश्च । ईश्वरोऽपि तथा स्यात् । तथा,

ईश्वरकर्तृत्वनिषेधः ।

ईश्वरः कर्ता न भवति, शरीररहितत्वात्, मुक्तात्मवदित्यपि स्यात् ।

§ ३. अथेह[4] हेत्वन्तरेण किं प्राक्तनस्य हेतोरन्यतररूपाभावः ख्याप्यते ?, किं वा तस्मिन्नेव धर्मिणि विशेषः साध्यते ?, यथा शब्देऽनित्यत्वे[5] सिद्धे अम्बरगुणत्वमिति । तत्र न तावदनेनान्यतररूपाभावः ख्याप्यते । नापि विशेषः साध्यमानो दोषमावहति । यदि साध्यविपर्ययसाधनेऽपि न[6] दोषस्तदा न विरुद्धस्य हेतोर्दोषः स्यात् ।

§ ४. अथ शरीरम[7]स्योपेयते । यदि तन्नित्यम्, तदा 'रचनावत् सर्वं कार्यम्' इति न स्यात् । अथानित्यम्, तदा तदपि शरीरवतान्येन कर्तव्यम् । तदप्यन्येन 'शरीरिणे[8]त्यनवस्था ।

§ ५. किञ्च – इदं चेतनावताऽचेतनस्याधिष्ठानं किं तद्धेतुकत्वम्, किं वा तदिच्छानुविधायित्वमिति ? ।

§ ६. तत्र

"सचेतनं यदा कर्म किमीशेन प्रयोजनम् ।
अचेतनः कथं भावस्तदिच्छामनुवर्तते ॥
कुलालकरसंपर्कजन्यः कुम्भस्तदिच्छया ।
दृष्टान्ते न भवन् दृष्टस्तादिच्छासाधनः कथम् ॥
जगतः करणे चास्य यदि किञ्चित् प्रयोजनम् ।
हीयेत[9] कृतकृत्यत्वं प्रेक्षाकारी न चान्यथा ॥

१. तां बुद्ध्य° अ० । २. अदृश्योऽपि करोति चेत् अ० । ३. पक्षेणाव्य° क० मु० । ४. अथ हेत्व° क० ब० मु० । ५. शब्दे नित्ये क० मु० ब० । ६. °पि दोषः क० मु० । ७. शरीरमवश्यमभ्युपेयते मु० । ८. शरीरेणे° क० मु० । ९. हीयते ब० मु० ।

प्रेक्षावतां यतो वृत्तिर्व्याप्तास्ते कार्यवत्तया।
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥
प्रयोजनं विनाप्यस्य कृपया यदि तत्क्रिया।
सृजेच्च शुभमेवैकं कृपया[1] परिचोदितः ॥
छागादीनां पुरीषादेर्वर्तुलीकरणेन किम्।
क्रीडार्था तस्य वृत्तिश्चेत् नार्यता स्यात् समाहिता ॥
किंचिन्मात्रविशुद्धोऽपि नार्यः क्रीडासु वर्तते।
स त्वत्यन्तविशुद्धात्मा कथं क्रीडासु वर्तते ॥
एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते।
कर्मणां पारतन्त्र्येण यदि चास्य प्रवर्तनम् ॥
कर्मणामीशता प्राप्ता तदा कृत्यमनेन किम्।
कर्मणां [2]कारणे चास्य सामर्थ्यं यदि विद्यते ॥
शुभान्येव कृपा[3]युक्तः किं न कारयते सदा।
अनु[4]रूपं फलं यद्व[5]त् भृत्ये राज्ञः प्रयच्छतः।
नासामर्थ्यं न चैकत्वं फलस्याप्युपलभ्यते ॥
उक्तमत्र समर्थश्चेत् शुभं कारयतां सदा।
अथेदृशः स्वभावोऽस्य कोऽत्र पर्यनुयुज्यताम्।
स्वभा[6]वो यदि विधौ नित्यः संहारं विदधाति किम् ॥
अथानित्यः सहेतुः स्यात् अहेतु[7]र्वेति कल्पना।
अहेतुर्यदि सर्वस्य स स्वभावः प्रसज्यते ॥
सहेतोर्हेतुरस्यास्तु स एवान्योऽथ कश्चन।
यद्यन्य[8]स्तत्र कर्तृत्वं स्वभावस्य विधा[9]तरि ॥
तेनैव चेद् विधीयेत प्रसंगः पूर्ववद् भवेत्।
किञ्चैककर्तृपूर्वत्वं जगतोऽनेककर्तृता ॥
संघा[10]तेनैकताव्याप्तिः प्रासादादिषु दृश्यते।
एकेन सूत्रितत्वं चेत् तत्रापि नियमो नहि ॥
स्वातन्त्र्येण क्वचित्तेषामेककार्ये[11] प्रवर्तनात्।
अनेककर्तृपक्षश्चेदात्मभिः किं न सिध्यति? ॥
कुर्वन्तु खण्डमेकैकं तज्ज्ञत्वात् चन्द्रचूडवत्।
ज्ञानवन्तोऽपि तेऽन्येन प्रेर्यन्ते यदि कर्मणि ॥
सोऽप्यन्येन तद[12]न्योऽपीत्यनेकेश्वरसंगमः।
को दोषश्चेद् भवेदेवं नैकोऽपि हि तवेश्वरः ॥
सर्वेषां परतन्त्रत्वात् अनीशत्वं कुलालवत्।
तदेवं कार्यताहेतुं सर्वदोषैरु[13]पद्रुतम्।
आश्रित्य जगतो हेतुं साधयन्तो निराकृताः ॥"

इति निखिलविधानाधीनविज्ञानमस्य, त्रिभुवनभवभावग्राहि दूरान्निरस्तम्।
तदिह सकलवस्तुज्ञानशून्यस्य[14] रागात्, कथमिव [15]वनिताङ्गासङ्गिनो मानताऽस्तु ॥ [८[1]]

१. करुणया परि° अ० ब०। २. करणे अ० ब० मु०। ३. क्रिया अ०। ४. अनरूपं मु०। ५. यच्च भृ° मु०। ६. स्वभावश्चेद्विधौ क०। ७. अहेतुश्चेति अ० मु०। ८. °न्यस्यात्र मु०। ९. विघातकम् मु०। १०. साध्यतेनैक° अ० ब०। ११. °कार्यप्रव° अ० ब०। १२. °तदान्यो अ० ब०। १३. °दोषैरभिद्रुतम् ब०। १४. शून्यः स रागात् मु०। १५. °मिव दयिता क० मु०।

§ १. एवमीश्वरस्य प्रामाण्यं निरस्य सांख्याभिमतस्य प्रकृतिपुरुषान्तरज्ञानस्य प्रामाण्यं निरस्यन्नाह—प्रकृत्यन्तरविज्ञानम्—इत्यादि ।

**प्रकृत्यन्तरविज्ञानं पुंसो नित्यमथान्यथा ॥ ८ ॥**
**नित्यत्वे सर्वदा मोक्षोऽनित्यत्वे न तदुद्भवः ।**

प्रकृत्यन्तरविज्ञानपरीक्षा ।

§ २. ते हि एवं मन्यन्ते केवलानन्दभोक्तृस्वरूपो हि पुरुषः, प्रकृतिश्चाचिदात्मिका । कथमसौ तां भुङ्क्ते ? । केवलमज्ञानतमश्छन्नः प्रकृतिसाध्यमेवात्मगतं मन्यमानः तत्सुखं दुःखं चोपभुङ्क्ते इति । यदा[1] तु ज्ञानमस्य भवति[2] 'दुःखहेतुरियम्, न ममानया सह [3]संगो युक्तः' इति तदा किमिति तदुपार्जितं कर्मफलमुपभुङ्क्ते ? । सापि च 'विज्ञातस्वरूपाऽहं[4] न मदीय[5]कर्मफलमनेन भोक्तव्यम्' इति बुद्ध्वा न किंचिदपि करोति । कुष्ठिनीव वि[6]ज्ञातस्वरूपा दूरादपसर्पति । अतः केवलज्ञानं मोक्षायालमिति ।

§ ३. [7]अत्रेदमभिधीयते—कस्य तज्ज्ञानं किं प्रकृतेरथात्मन इति ? । न तावत् प्रकृतेः, अचिद्रूपत्वात्, अनभ्युपगमाच्च[8] । अत एव 'निर्ज्ञाताऽहमनेन' इति अस्याः याचितकमण्डनम् । अथात्मनः, तदपि किं भिन्नमथाभिन्नम् ? । यद्यभिन्नम्, तदा तत्स्वरूपवत् नित्यं स्यात् । तत आदित एव मुक्तो भवेत् । अत आह 'सर्वदा मोक्षः' इति । अथ भिन्नम्; भिन्नमपि किं नित्यमथानित्यम् ?, नित्यमपि[9] संबद्धम्, असंबद्धं वा ? । असंबद्धे सर्वस्य स्यात् । ततश्च न कस्यापि संसारः । संबन्धोऽपि न नित्ययोः परस्परमनुपकार्योपकारकयोः स्यात् । संबन्धेऽपि [10]वा सदा मुक्तिरिति । अनित्यमपि किं जन्यमजन्यं वा ? । तत्रानित्यमजन्यं चेति व्याहतम् । अव्याहतावपि सर्वस्य स्यात् । जन्यमपि किं प्रकृतिवियुक्तात्मजन्यम्, किं वा तत्सहितजन्यमिति । प्रथमपक्षे इतरेतराश्रयत्वम् । तथा हि—सति ज्ञाने प्रकृतिवियोगः, सति वियोगे तज्ज्ञानमिति । तत्सहितजन्यत्वे किं तद्वियोगेन ? । सर्वदा सर्वेषां च[11] मुक्तिः स्यात् । ननूक्तम् 'अविज्ञानतमश्छन्नः' इति तमोवि[12]गमादस्य विज्ञानमुपजायत इति ।

§ ४. अथ किमिदं तमः ? । रागादय इति चेत्—न, तेषां प्रकृतिधर्मत्वात् । न च[13] साम्यावस्थायां तदुत्तरकार्यभाविनः प्रकृतावपि ते सन्ति । शक्तिरूपतया सन्तीति चेत्; शक्तिरपि न [14]कार्यकार्यं करोति । किन्तु स्वकार्यमेव करोति । न हि क्षीरे दधिशक्तिः दधिसाध्यं कार्यं करोति । किन्तु दध्येव करोति । दधि पश्चात् स्वकार्यं करोति । पश्चाद्भवन्तु, तथापि रागादयः सिद्धा इति चेत्; न, प्रधानस्य विकार[15]जनने सहकारिकारणाभावेन तेषां पश्चादप्यसिद्धेः ।

§ ५. सन्तु वाऽविद्यारागादयः, ते मुक्तात्मनः किं न तमो भवन्ति । अधिकारिण एव ते भवन्ति, न मुक्तात्मन इति चेत्; किमिदम् अधिकारित्वम् ? । [16]योग्यत्वमिति ब्रूमः । तथा हि—प्रकृतिरचेतना भोग्यरूपा । सा भोक्तारमपेक्षते । पुरुषोऽपि चेतनो भोक्ता च । स

१. यदा ज्ञान° मु० । २. भवेत् ब० । ३. संयोगः अ० । ४. °पाहं मदीयं मु० । ५. मदीयं कर्म° अ० । ६. नीव निर्ज्ञात क० । ७. अथेदम मु० । ८. °गमाद्वा मु० । ९. °मपि किं सं° मु० । १०. °ऽपि सदा अ० । ११. सर्वेषां मुक्तिः अ० । १२. तमो विरामाद° क० । तमो विरामेऽवश्यं विज्ञा° मु० । १३. न साम्या° अ० मु० । १४. न कार्यं क० । १५. विकाराज° मु० । १६. इतः आरभ्य 'योग्यतालक्षणः' इतिपर्यन्तः पाठः मु० क० प्रत्योः 'सन्ति' [ पृ० ४४ पं० ...... ] इत्यनन्तरं वर्तते सं० ।

च भोग्यमपेक्षते। तयोरयं योग्यतालक्षणः संबन्धो वनगतयोरिव पङ्ग्वन्धयोर्ग्रामं निर्जिगमिष्वोरिति[2]। ननु सा योग्यता तयोर्नित्या न कदाचिदपैति[3]। ततो न कदाचित् ज्ञानोत्पत्तिरिति। तदाह–**न तदुद्भवः** इति। न तस्य ज्ञानस्योद्भव उत्पत्तिः स्यादिति[4]। न चाप्रच्युतानुत्पन्नस्थिरैकरूपस्यात्मनः[5] स्वभावविगमो युक्तिमानिति न तस्य प्राग्वत् केवलज्ञानं प्रमाणमिति स्थितम्[6]। [९[1]]

§ १. निरस्ते कुमतध्वान्ते[7] जिनार्कोदयकांक्षिणां[8][9]।
इदानीमुदयोपायस्तस्यायमभिधीयते[10]॥

–कालवैपुल्येत्यादि[11]–

**कालवैपुल्ययोग्यत्वकुशलाभ्याससंभवे॥ ९॥**
**आवृतिप्रक्षयाज्ज्ञानं सार्वज्ञ्यमुपजायते।**

§ २. तथा हि–

जीवस्वाभाव्यतः सिद्धा गुणा गम्भीरतादयः।
चरमे पुद्गलावर्ते भव्यत्वे पाकमागते॥
रत्नत्रयाख्यं कुशलमवाप्याभ्यस्यतः क्रमात्।
ज्ञानावृतिक्षयाज्ज्ञानमर्हतो[12] जायतेऽक्षतम्॥ [१०[2]]

§ १. शरीराद्भिन्नमात्मानं प्रत्यक्षं नैव वीक्षते।
प्रामाण्यं नानुमानस्य सर्वमेतदसंगतम्॥
नानुमानं प्रमेत्येतद्वचनं चार्वाकचर्चितम्[13]। किं प्रमाणमथान्यथा?।

अप्रमाणं कथमनुमाननिषेधायालम्?। प्रमाणमपि नाध्यक्षम्, अनक्षजत्वात्। अथानुमानम्। तदेतत् पीतमद्यस्य प्रलपितम्। प्रतिपादयिष्यतेऽनुमानप्रामाण्यं प्रमाणद्वित्वसिद्धाविति। तदेवोपन्यस्यन्नाह[14]–**सदहेतुकमित्यादि**[15]–

**सदहेतुकमस्तीह सदैव क्ष्मादितत्त्ववत्॥ १०॥**

§ २. अनेन प्रयोगार्थो दर्शितः। प्रयोगश्च–यत् सदहेतुकं[15] तत् सर्वदा अस्ति। यथा पृथिव्यादितत्त्वम्[16]। सदहेतुकं[17] च आहाराद्यासक्तिचैतन्यपर्यायं जीवद्रव्यमिति। [१०]

§ १. एतत् साधयितुमनुमानमाह–**आहारासक्तीत्यादि**–

**आहारासक्तिचैतन्यं जन्मादौ मध्यवत्तथा।**

§ २. इह आहारग्रहणमुपलक्षणम्। इह चेतसो यदासक्तिः सा तदभ्यासपूर्विका। यथा जीवसिद्धिः। यौवनावस्थायां[18] रागाद्यासक्तिचित्तं तदभ्यासपूर्वम्। अस्ति च जन्मादावाहाराद्या-

---

१. °न्धयोर्निर्जि° अ० ब०। २. °मिषोरिति क०। ३. °दपि निवर्तते न कदा° मु०। ४. उत्पत्तिः। न चा° ब०। ५. °त्पन्ने स्थि° अ०। ६. स्थितिः मु०। ७. निरस्तकु° क० मु०। ८. कुमुदध्वा° मु०। ९. कांक्षिणः मु०। १०. °दयो यस्य तस्या° मु०। ११. किलवै° क०। १२. मर्हते जा° अ० ब०। १३. चर्वितम् मु०। १४. °न्यसन्नाह अ० ब०। १५. सहेतु° मु०। १६. °व्यादिकं मु०। १७. सहेतु° मु०। १८. यौवनाद्यव° मु०।

सक्तिचैतन्यमिति कार्यहेतुः । तत्क्षणजातस्यापि स्तनपान-शरीररक्षाद्युपलब्धेर्नासिद्धता हेतोः । सपक्षे सत्त्वान्न विरुद्धता । कार्यकारणभावसिद्धेर्नानैकान्तिकता । अनुगमस्य भावात् सदा[1]स्तित्वमात्मन इति ।

§ ३. अथ कार्यकारणभावाव्यवस्थानात् कथमेतत् ? ।

तथा हि—

"धूमो धूमान्तरोत्पन्नो न धूमादेव सर्वथा ।
शौ[2]ल्ककादपि शौ[3]ल्ककः कथं भवति गोमयात् ? ॥"

तथा—

"चित्रं चित्रकराज्जातं पतत्रिष्वपि किं तथा ? ।
तथाभ्यासाद्विशेषो यः सोऽन्यथाऽपि भविष्यति ॥"

§ ४. तदसत् ।

"धूमो धूमाद्यथाभूतः सोऽन्यथाऽपि न जायते ।
अभ्यासात्तु विशेषो यः स जन्मादौ तथा स्थितः ॥"

ग्रामान्तराभ्यासवज्जन्मान्तराभ्यासानुपलब्धेर्न तत्कारणता चैतन्यस्य, किन्तु तदैव तस्योपलब्धेः । तस्मात् तदैव तदिति चेत् । तदेतद्भीताख्यानम्—

"कश्चिद्भीतः किलान्येन पृष्टः कथय संभवः[4] ।
मातुर्दीर्घविषाणस्य महिषस्य[5] कथं स्थितेः ।
स प्राह कुक्षेर्जायन्ते न मातुर्महिषा अमी ॥
हट्टागतानामेवैषां[6] मूल्येन क्रयमा[7]त्रकम् ।
न[8] च मातापितृचैतन्यजन्यत्वेन चेतसः ॥"

सिद्धता[9] वाच्या । अन्यथा सकलस्य पाण्डित्यादि[10]विशेषस्याप्यनुवर्तनं स्यात् । न चेहान्यस्य[11] संस्कारोऽन्यस्य दृष्टः । उपाध्यायसंस्कारानुवर्तनमुपलभ्यत इति चेत्; न, स्वसंतान[12]पूर्वविज्ञानस्यैवाभिरुचिविशेषितस्य भावाद् अन्यथाऽदृष्टेः । ये चाचेतनात् काष्ठादेरुपजायन्ते तेषां कथं मातापितृचैतन्यपूर्वकत्वम् ? ।

§ ५. किञ्च—तत्र[13] कस्यचिन्मरण[14]भावात् सकलमातापितृस्वभावानुवर्तनं स्यात् । परलोकिन[15]स्तु मरणगर्भजन्मदुःखसमुद्घातव्याकुलत्वेन कस्यचिदेव दृष्टेः । कस्यचि[16]त्तु जातिस्मरणमुपलभ्यते । अपूर्वोत्पन्नस्य तु सैवावस्थितिर्न दुःखम् ।

"तदैव तत्रोत्पन्नस्य न दुःखं विषकीटवत् ।
परलोकिनस्तु तद्दुःखमनाद्यभ्याससेवनात् ॥"

§ ६. "अथ देहात्मिका देहकार्या देहस्य च गुणो (°र्या देहगुणो) मतिः[17] ।
मतत्रयमिहाश्रित्य न परलोकस्य संभवः ॥"

---

१. सदा नित्य° अ० ब० । २. साल्लुका° अ० ब० । ३. साल्लुकः अ० ब० । ४. °न्येन सृष्टः कथमसंभवः मु० । ५. वृषमस्य क० मु० । ६. °मेवैषा शून्येन क्रयविक्रयमात्रकम् मु० । ७. क्रयविक्रयमा° क० । ८. न च मातृपि° क० । न मातृपि मु० । न मातापि अ० ब० । ९. सिद्धसाध्यता वाच्या क० मु० । १०. °स्य व्यापिलावि° मु० । ११. °न्यसंस्का° क० मु० । १२. स्वसंतानस्य पूर्व° क० मु० । १३. किञ्च कस्य° क० मु० । १४. °मरणभावात् क० मु० । १५. परलौकिकस्तु क० मु० । १६. °चिज्जाति° क० मु० । १७. चैतन्यम् अ-टि० ।

तथा हि—न धूमो [1]धूमध्वजान्तरादागच्छति । नापि धूमध्वजान्तरं [2]प्रयाति । नापि धूमध्वजविरहे भवति । चित्रं वा न कुड्यान्तरादागच्छति, कुड्यान्तरं वा संक्रामति, कुड्यविरहितं वाऽवतिष्ठते; मदशक्तिर्वा कषायादेः सशर्करादपूर्वा जायमाना न मद्यान्तरमवलम्बते, मद्यान्तराद्वा आगच्छति, [3]तद्विलये वाऽवतिष्ठते ।

§ ७. [4]तदसत् । [5]महाभूतपरिणामरूपस्य चैतन्यकारणत्वे सर्वं स्तम्भकुम्भादि सचेतनं स्यात् । अथ महाभूतसंभविनोऽपि रत्नादयो न सर्वत्र भाविनः, तद्वत् कश्चिदेव महाभूतपरिणतिविशेषश्चैतन्यहेतुः । तदप्यसत् । यतः—

"[6]न स कश्चित् पृथिव्यादेरंशो यत्र न जन्तवः ।
संस्वेदजाद्या जायन्ते [7]सर्वं बीजात्मकं ततः ॥"

अथ यदि न महाभूतकार्याः प्राणिनः कथं काष्ठाद्यन्वयिनी प्राणिजातिरुपलभ्यते ? । तन्न, यतः समानजातीयं सर्वं तद्रूपप्राणिमयं स्यात् । न चैवम् । तथा हि—[8]परिश्राव्य [9]स्थापितेऽम्भसि सकलतद्रूपप्राणिगणोत्पत्तिः स्यात् । कुतो वर्णसंस्थानवैलक्षण्यम् ? ।

"तथा हि [10]रक्तशिरसः पीतकायादयोऽपरे ।
जलादिप्राणिनो दृष्टाः स आकारः कुतो भवेत् ? ॥
तद्रूपबीजात् कमलादिभेदः, किं दृष्ट [11]इष्टोऽनियतः कदाचित् ।
न प्राणिभेदो नियतोऽस्ति बीजात्, [12]सर्वत्र कर्माणि नियामकानि ॥"

§ ८. न च चैतन्यादुत्पद्यमानमुपलब्धम[13]न्यदा शरीरादुत्पद्यत इति वाच्यम् । सर्वत्र कार्यकारणभावोच्छेदप्रसक्तेः । तथा च सति—

"नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात् ।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥" [प्रमाणवा० ३.३४]

§ ९. किञ्च—तदुत्पद्यमानं चैतन्यं किं समस्तादुत्पद्यते, व्यस्ताद्वा ? । न तावत् समस्तात्, अङ्गुल्यादिच्छेदेऽपि मरणप्रसङ्गात्, अन्यथा शिरश्छेदेऽप्यमरणप्रसक्तेः । नापि [14]व्यस्तात्, एकस्मिन्नेव कायेऽनेकचैतन्योत्पत्तिप्रसङ्गात् । अथैकः शरीरावयवी तत एकमेव चैतन्यमुत्पद्यते । तदप्यसत् । आवृतानावृतत्वेन, रक्तारक्तत्वेन, चलाचलत्वेन च तस्यासंभवात् ।

§ १०. किञ्च—शरीरस्यावैकल्यात् मृतशरीरेऽपि चैतन्योत्पत्तिः स्यात् । अथ वातादिदोषैर्वैगुण्यात् न मृतशरीरस्य चैतन्योत्पादकत्वम् । नैतत् सारम् । यतो मृतस्य समीभवन्ति दोषाः, ततो देहस्यारोग्यलाभात् पुनरुज्जीवनं स्यात् ।

"तेषां समत्वमारोग्यं क्षयवृद्धी विपर्ययः ।"

इति वचनात् । अथ समीकरणं दोषाणां कुतो [15]ज्ञायते ? । ज्वरादिविकारादर्शनात् । अथ वैगुण्यकारिणि निवृत्तेऽपि नावश्यं तत्कृतस्य वैगुण्यस्य निवृत्तिः । यथाऽग्निनिवृत्तावपि न

---

१. धूमान्तरा° क० मु० । २. गच्छति मु० । ३. तद्विगमे मु० । ४. °ष्ठते तदप्यसत् । यतः मु० । ५. तदसत् महाभाविनः तद्वत् क० । ६. न कश्चित् अ० क० मु० । ७. सर्वबीजा° क० मु० । ८. परिताप्य मु० । ९. स्थाप्यतेंऽभसि ब० मु० । १०. रक्तः शिर° अ० ब० । ११. इष्टो वानि° क० । १२. सन्त्वत्र मु० । १३. °न्यथा श° मु० । १४. व्यस्तादेवास्मि° अ० । १५. कुतो जायते ब० ।

काष्ठे दूरदाहस्याऽपि[1]। तदपि न, यतः किंचित् क्वचिदनिवर्त्यविकारारम्भकं दृष्टम्, यथा काष्ठेऽग्निः। क्वचिच्च निवर्त्यविकारारम्भकम्, यथा सुवर्णे द्रवतायाः। तत्र यदि दोषविकारोऽनिवर्त्यः स्यात्, चिकित्साशास्त्रं वृथैव स्यात्। ततो दौर्बल्यादिविकारस्येव महतोऽपि मरणविकारस्य निवृत्तिः प्रसज्येत[2]। अथ चिकित्साप्रयोगाद्दौर्बल्यादिनिवृत्त्युपलब्धेः प्रत्यानेयविकारत्वम्, असाध्यव्याध्युपलब्धेश्चाप्रत्यानेयविकारत्वं चेत्युभयथाभावात् मरणानिवृत्तिः। तदसत्।

"[3]दुर्लभत्वात् समाधातुरसाध्यं किंचिदीरितम्।
आयुःक्षयाद्वा दोषे तु केवले नास्त्यसाध्यता॥"

तथा हि—तेनैव व्याधिना कश्चित् म्रियते, कश्चिन्नेति। नेदमसमञ्जसं केवले दोषे[4] विकारकारिणि घटते। तस्मात् कर्माधिपत्यमेवात्र परिहारः। अन्यथा—

"मृते विषादिसंहारात् तद्दंशच्छेदतोऽपि वा।
विकारहेतोर्विगमे स नोच्छ्[5]सिति किं पुनः॥"

§ ११. किञ्च—उपादानविकारमन्तरेण नोपादेयस्य विकारो दृष्टः, यथा मृद्विकारमन्तरेण न कुण्डस्य। इह[6] तु स्वच्छेऽपि देहे[7] भयशोकादिना मनोविकारदर्शनात् न देहस्योपादानता। शरीरविकारेणापि चेतसो विकारोपलब्धेः त[8]दुपादानमिति चेत्; न, पुत्रेण व्यभिचारात्। नियमाभावाच्च। यथा हि चित्तविकारमन्तरेण नोत्तरचेतसो विकारो नैवं शरीरे नियमः। अवस्थाकारणं तु स्यात्।

"अवस्थाकारणं वस्तु नैवोपादानकारणम्।
अवस्थाकृन्निवृत्तौ हि सैवावस्था निवर्तताम्॥
सन्तानकारणं यत्तु तदुपादानकारणम्।
तन्निवृत्तौ भवेत्तस्य सन्तानस्य निवर्तनम्॥
अग्नेर्निवृत्तौ ता[9]म्रस्य द्रवतैव निवर्तते[10]।
चेतसः[11] सह कायेन तावत्कालमवस्थितिः॥
[12]अन्योऽन्यसहकारित्वादग्नितात्रद्रवत्ववत्।
[13]तयोर्हेत्वोरकार्यं तु [14]भिन्नं तिष्ठति हेमवत्॥"

तच्चित्तमेव चेतस उपादानम्, न शरीरमिति।

§ १२. नापि चक्षुरादीनि, यतो मनःसमाश्रितान्येव चक्षुरादीन्युपलभ्यन्ते, न मनस्तदाश्रितम्। यस्मान्नियमेन भयशोकक्रोधादिनोपहते मनसि चक्षुर्विकारो दृश्यते। न तु सात्त्विकानां चक्षुरादिविकारेऽपि मनोविकारः। कादाचित्कस्तु मनसो विकारः पुत्रेन्द्रियविकारेऽपि पितुरुपलब्धे[15] इति। न ततो व्यभिचारः। न च यथाग्नेर्विकारमासाद्य[16]त् घटादिवस्तु तत एव नोत्पद्यते तथेन्द्रियाणीति वाच्यम्। यतः—

"घटादिरन्यथा दृष्टस्ततो न तत एव सः।
नान्यथा तु पुनर्दृष्टमिन्द्रियं तद्विकारतः॥"

१. काष्ठात् दाह° मु०। २. प्रसज्यते ब०। ३. वातादिदोषवैषम्यादसाध्यं मु०। ४. केवलदो° ब०। ५. °च्छ्वसति अ० मु०। ६. इह स्वच्छे अ०। ७. शरीरम् अ-टि०। ८. °कारणं यत्तु तदुपा° मु०। ९. °त्तौ हेम्नस्तु द्रव° मु०। १०. पूर्वार्धेन हेतुनिवृत्तौ निवृत्तिमुक्त्वा हेतुसद्भावे युगपत्सत्तामाह–ब-टि०। ११. यावत् देह-कर्मवासितं चेतश्च–ब-टि०। १२. कुतः ब-टि०। १३. तयोर्हेतोर° मु० क०। १४. तु चित्तं तिष्ठ° मु०। १५. °लब्धेरिति मु०। १६. मासाद्य घटा° मु०।

§१३. किञ्च, चक्षुरादिभ्यः किमेकैकशो मनोविज्ञानमुत्पद्यते, समस्तेभ्यो वा? । प्रथमपक्षे नियतविषयमेव मनोज्ञानं स्याद् रूपादिदर्शनादिवत् । द्वितीये तु नान्धबधिरादेर्मनोविज्ञानं स्यात् । न हि बीजादिभ्यः समस्तेभ्यः समुत्पद्यमानोऽङ्कुरस्तदेकापायेऽप्यु[1]त्पद्यते । तन्न चक्षुरादिकार्यता ।

§१४. नापि प्राणापानकार्यता । प्राणापानौ हि मनोविज्ञानान्वयव्यतिरेकानुविधायिनौ । न मनोविज्ञानं तदन्वयव्यतिरेकानु[2]विधायि । अन्यथा मूर्च्छाविच्छेदे चैतन्यं न स्यात् । त[3]त्कार्यतामन्तरेण मनोज्ञानवश्यता च तयोर्न स्यात् । न खल्वन्याधीनम् अन्येन वशयितुं शक्यम् । अथ अन्यत उत्पन्नोऽपि अन्येन नियम्यते, यथा स्वामिना भृत्यः । तदप्यसत् ।

"भृत्यस्यान्यत उत्पत्तिर्दृश्यते न पुनस्तयोः ।
न चित्तमन्तरेणास्ति तयोरुत्पत्तिरन्यतः ॥"

§१५. अथ स्वापावस्थायां प्राणापानौ चित्तमन्तरेणापि दृश्येते । तत् कथं तत्कार्यौ ? । तन्न । निद्रा[4]भिभूतस्य तदाऽपि भावात् ।

"शरीरचेष्टा यावत्यस्ताः सर्वा[5]श्चित्तसंस्कृताः ।
सुप्तस्य दीर्घह्रस्वादिनिःश्वासाः पूर्वचित्ततः ॥"

न हि चैतन्यमन्तरेण प्रेरणाकर्षणे भवतः । न च प्रेरणाकर्षणे एव चैतन्यात् न[6] प्राणापानाविति । तत्स्वरूपव्यतिरेकेण प्रेरणाकर्षणयोरभावात् ।

§१६. अथ स्थिरो वायुः प्राणापानयोर्हेतुः, ततश्चेतना । तदप्यसत् । मृतस्यापि स्थिरो वायुरस्ति इति प्राणापानानिवृत्तौ चैतन्यस्या[7]निवृत्तिः स्यात् । यदि च प्राणापानकार्यं चैतन्यं तदा तयोर्निर्ह्रासातिशये तस्यापि तौ स्याताम् । अवश्यं हि कारणे परिहीयमानेऽभिवर्धमाने वा कार्यस्य हानिरुपचयश्च स्यात् । अन्यथा तत् तस्य कार्यमेव न भवेत् । न चैवम् । अतो न शरीरेन्द्रियप्राणापानकार्यं चित्तम् ।

§१७. नापि देहाश्रितम् । आश्रयाश्रयिभावप्रतिषेधात् । तथा हि—असतस्तावत् खरविषाणस्येव नाश्रयः । केवलमसत् कारणादुत्पत्तिमेवेहते, अतोऽसतः कारणमेव स्यात्, नाश्रयः । सतोऽपि सर्वनिराशंसत्वात् न कश्चिदाश्रयः । अथ सतः स्थितिकरणा[8]दाश्रयः । न, स्थितेः स्थातुरव्यतिरेके[9] तत्करणे स एव कृतः स्यात् । न च सतः करणमुत्पन्नस्य पुनरुत्पादायोगात् । अथोत्पन्नस्यापि किञ्चिदनुत्पन्नमस्ति त[10]त्करणादाश्रयः । सर्वात्मनोत्पादे कारणमुच्यते, कस्यचित्तु धर्मस्योत्पादे आधारः[11] । न च स्थितिरव्यतिरिक्ता स्वरूपात्, पततोऽपि स्थित्यभावे स्वरूपसद्भावात् । यदि पुनरव्यतिरिक्ता स्थितिः स्यात्, स्थितेरव्यतिरिक्तः स भवेत्, ततः सर्वदा स्थितिरेव भवेत् । तेन स्वरूपे सति निवर्तमाना विरुद्धधर्माध्यासात् ततो व्यतिरिक्ता सा । तदप्यसत् । व्यतिरेके[12] हि सति तद्धेतुरेवासौ, न तस्याधारः ।

१. °ये उत्प° मु० । २. °रेकविधायि अ० ब० । ३. स्यात् कार्य° अ० ब० मु० । ४. सिद्धाभि° अ० ब०; सिद्धाभि° क० । ५. ताः स्वार्थाश्चि° क० मु० । ६. °न्यात् प्राणा° मु० । ७. °न्यानिवृ° क० । ८. °करणे वाश्रयः मु० । ९. °रेकेण तत्क° मु० । १०. तत्कारणा° मु० । ११. आधारोऽनवस्थिति° अ० ब० । १२. °तिरिक्ते हि मु० ।

§ १८. तस्य स्थितिकरणात् तदाधार इति चेत्; किमसावुत्पन्ना सती स्थाप्यस्य[1] भवति, अन्यथा वा ? । अनुत्पन्ना असत्त्वात् न तस्य । उत्पन्नाप्यन्यस्मात् कथं भावस्य, तादात्म्यतदुत्पत्तिसंबन्धाभावात् ? । अथ तत एवोत्पद्यते नान्यतः । तथा सति तत्कार्या स्यात् नाश्रयकार्या । तत्र चोक्तं दूषणम् । तथा हि—स्थाप्येन स्थितिः क्रियते नाश्रयेण । अथ स्थितेः स्थितिः क्रियते आश्रयेण तर्हि अनवस्था स्यात् ।

§ १९. यदि चाश्रयो देहः, तदा यस्य स्थितिकारणमस्ति तस्य न विनाशः स्यात् । अथ तत्स्थापके[2] सत्यपि नाशहेतोर्नाशः । न नाशो नामाऽन्य एव भावात् । व्यतिरेके च नाश एव तेन कृतः स्यात्, न भावः । ततोऽनाशात् स्वयमेवास्त इति किं स्थितिहेतुना ? । यदि च नाशहेतोर्नाशो यावन्नाशको नायाति तावत् स्वयमेवास्त इति किं स्थितिहेतुना ? । अथ विनाशकात् पूर्वं स्थापकेन विनाशप्रतिबन्धः क्रियते । ननु सोऽपि विनाशप्रतिबन्धोऽन्यो विनाश्यात् । ततश्च विनाश्यस्य[3] न किंचिदिति विनश्येत् । अथानन्यः, तर्हि विनाश्यः स्थापकेन क्रियते न स्थितिः[4] । अथ प्रतिक्षणं विनश्वरः स्थापकादन्यथा भवति, तस्यापि विनाशोऽहेतुक इति स एव प्रतिक्षणं विनाशः । स च अन्यथा स्थापकादुत्पन्न इति कारणमेव[5] स्यात्, न स्थापकः ।

§ २०. अथ पततो धारणोपलब्धेः कथं न स्थापकः ? । न पततो धारणं, यस्य च धारणं न तस्य पतनम्, पतनापतनयोः परस्परविरोधात् । पूर्वं पतनं पश्चादपतनमिति चेत्, न[6] तर्हि यस्य पतनं तस्य धारणम्, प्रत्यक्षेणैकत्वाप्रतिपत्तेः । न ह्येकोऽवस्थाता पतनेतरव्याप्युपलभ्यते ।

§ २१. स एव पतन्नवतिष्ठत इति एकत्वाभिमानादवस्थातुः प्रतीतिरिति चेत्; न, प्रत्यभिज्ञानस्याभिमानमात्रत्वात् । ततः प्रतिक्षणविनाशिनामपरापरदेशोत्पादवतामुपादानदेशोत्पत्तिरेव[7] आधारसमागमकृतेति हेतुरेव विशिष्टावस्थाया आधार उच्यते ।

§ २२. किं च, गुरुणो द्रव्यस्य पततः पातप्रतिबन्धात् स्थापकः स्यादपि, निष्क्रियाणां तु गुणसामान्यकर्मणां किमाधारेण ? । चैतन्यं च सामान्यं गुणः कर्म वा ? तच्च सर्वथा निष्क्रियमिति नाऽधारेणास्य किंचित् । अतोऽनाधेयस्य चेतसो नाधारविनाशेन विनाशः । कियत्कालं तु सहस्थानमात्रमम्रितामद्रवत्ववदित्युक्तम्[8] । तन्न कायाश्रितं चेतः ।

§ २३. नापि कायात्मकम् । यतः परमाणुसंघातमात्रमेव शरीरम् । तत्तादात्म्ये प्रत्येकं सकलपरमाणुसंवेदनप्रसङ्गः स्यात् । न च अवयव्येको विद्यते तत्सद्भावेऽपि वा श्यामतादिवदन्येन चैतन्यवेदनं स्यात् । अन्तःस्प्रष्टव्यरूपत्वान्नेति चेत्; न, व्रणं स्पृशतोऽन्यस्यापि तद्वेदनावेदनं स्यात् । तच्छरीरे गृह्यमाणे चैतन्याग्रहणाद् विरुद्धधर्माध्यासेन न[9] तादात्म्यम् । तन्न देहकार्यं देहगुणो देहात्मकं वा चैतन्यं किन्तु जन्मान्तरचैतन्योपादानमेव । जन्मादिजन्यचैतन्यपर्यायं जीवद्रव्यमिति ।

---

१. स्थाप्या भवति मु० । २. अथ स्थापके क० मु० । ३. विनाशस्य अ० ब० । ४. स्थापकेन न स्थितिः अ० ब० । ५. करण° मु० । ६. चेत् तर्हि मु० । ७. °शोत्पत्तिराधार° क० मु० । ८. °मात्रकममि° क० मु० । ९. °ध्यासेन तादा° मु० ।

§ २४. अथ कथं परलोकशरीराच्छरीरान्तरसंचारः ? । वृद्धादिशरीरावस्थासंचारवत् । अथैकोपादानभावेन तदेकत्वात् न शरीरान्तरम् । पश्चादिशरीरं तु नैवम् । तदपि स्वप्नान्तिक[1]शरीरसंचारदर्शनाद् अनैकान्तिकम् । किं च, शरीरान्तरे मनःसंक्रान्तिः कथञ्चित्[2] तद्ग्राहकत्वेनैव, नान्यथा । सा चेह पश्चादिशरीरेष्वप्युपलभ्यते । तत् कथं न शरीरान्तरसंचारोपलब्धिः ? । अथ ग्राह्यतामात्रे संचारे परशरीरवत् स्वशरीरक्षतावपि न व्याकुलतादयः स्युः[3] । तदप्यसत् । पररक्तादिदर्शनेऽपि केषांचिद् व्याकुलितोपलब्धेरात्मशरीरक्षतावपि केषांचिदभावात् । [4]तदनेकजन्मपरंपरावासनादार्ढ्यादात्मीयग्रहसद्भावे व्याकुलतादयः प्रवर्तन्त इति ।

§ २५. अथ भवतु कार्यादतीतपरलोकानुमानम्, भाविनस्तु कथं ?, तदर्थां च दानादिक्रियेष्यते ? । तदपि यत्किंचित् । सिद्धे हि[5] कार्यकारणभावे, यथा कार्यात् कारणानुमानम्, तथाऽविकलकारणात् कार्यस्यापि इत्यनैकान्तिकत्वादिदूषणं नैव संभवति ।

"कार्यकारणसद्भावात् चैतन्येनान्यचेतसः" इति ।
"एवं क्षणिकपर्यायपरिणामिनि संस्थिते ।
गुणाः प्रकर्षमायान्ति कालेन सहकारिणा" ॥ [ ११ ]

ॐ

§ १. इति निगदितमेतत् केवलज्ञानहेतुः, कुशलमखिलबन्धो ज्ञानचारित्रदृष्टिः ।
सकलमलविहीनं साधनं तस्य सिद्धौ, कथयितुमिदमन्यद् वार्तिकस्याह कर्ता ॥

ॐ

अन्त्यसामग्र्यवद्धेतुरित्यादि —

**अन्त्यसामग्र्यवद्धेतुः संपूर्णः कार्यकृत् सदा ॥ ११ ॥**
**ज्योतिः साक्षात्कृतिः कश्चित् संपूर्णस्तत्त्ववेदने ।**

§ २. हेतुः कारणकलापः । संपूर्ण इति अविकलः । सदेत्यवश्यमेव कार्यकारी । अन्यथा सर्वज्ञसिद्धिः । कार्योत्पत्तिर्न कदाचित् स्यात् । अन्त्यसामग्र्यवदिति व्याप्तिविषयोपदर्शनम् । कश्चिद् विवादाध्यासितः तत्त्वज्ञानोत्पत्तौ ग्रहोपरागादिसाक्षात्कारित्वाद्[6]विकलकारणं[7] इति । प्रयोगश्च — यदविकलकारणं तदवश्यमेव कार्यमुत्पादयति । यथा अन्त्या कारणसामग्री । अविकलकारणश्च [8]तत्त्वज्ञानोत्पत्तौ अतीन्द्रियग्रहोपरागादिसाक्षाद्द्रष्टा तज्जातीयेष्[9]वतीन्द्रियेषु जीवादिषु कश्चिदिति । हेतुमेव समर्थयितुमाह — यस्य यज्जातीयाः पदार्थाः प्रत्यक्षाः, तस्यासत्यावरणे तेऽपि प्रत्यक्षाः । यथा घटसमानजातीयभूतलप्रत्यक्षत्वे घटः । प्रत्यक्षाश्च कस्यचिदतीन्द्रियजीवादिपदार्थसजातीयग्रहोपरागादयो भावा इति । न तावदयम्[10]सिद्धो हेतुः । यतो यो यद्विषयानुपदेशा[11]लिङ्गाविसंवादिवचनरचनानुक्रमकर्ता स तत्साक्षात्कारी । यथास्मदादिरात्मीयानुभववचनरचनानुक्रमकर्ता । ग्रहोपरागादिशा[12]स्त्रकर्ता च स, तस्मात् साक्षात्कारीति । न चापौरुषेयत्वेनासिद्धत्वमभिधानीयम्, तस्य पूर्वमेव निरस्तत्वात् ।

---

१. तदपि स्वाप्निकशरीर° मु० । २. °क्रान्तिः तद्ग्रा° अ० ब० । ३. °दयः । तद° अ० ब० । ४. तदानेक° क० मु० । ५. सिद्धे कार्य अ० ब० । ६. °कारित्वाविक° क० मु० । ७. कारणमिति क० मु० । ८. °कारणश्चातीन्द्रि° क० मु० । ९. तज्जातीयेषु जीवा° क० । १०. तावदयं सि° मु० । ११. °देशलिङ्ग° क० । १२. ग्रहोपरागादिसाक्षात्कारी तत्शास्त्रकर्तेति नचा° क० मु० ।

सर्वज्ञवादे मीमांसकस्य पूर्वपक्षः ।

§ ३. ननु अनुमानबाधितेयं प्रतिज्ञा । तथा हि–देशान्तरे कालान्तरे च यद्रूपं तदिदानींतनचक्षुर्जनितप्रत्यक्षसमानजातीयप्रत्यक्षग्राह्यम्, रूपशब्दवाच्यत्वाद् इदानीन्तनरूपवदिति । एवं रसादिष्वपि पञ्चानुमानानि भवन्ति । तथा यच्चक्षुर्जनितं प्रत्यक्षं तद्देशान्तरादावपि नियतदेशकालरूपग्राहकं प्रत्यक्षशब्दवाच्यत्वाद्, इदानींतनरूपप्रत्यक्षवदिति । एवं शेषेन्द्रियप्रत्यक्षेष्वपि पञ्चानुमानानि भवन्ति । तदुक्तम्–

"यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।
दृष्टं संप्रति लोकस्य तथा कालान्तरेऽप्यभूत् ॥" [ श्लोक० २.११३ ]

इति न च गृध्रादिभिर्व्यभिचारो वाच्यः । तेऽपि न स्वार्थमुल्लङ्घ्य वर्तन्ते । तदुक्तम्–

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तितः ॥" [ श्लो० २.११४ ]
"येऽपि सातिशया दृष्टाः प्रज्ञामेधाबलैर्नराः ।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ॥
प्राज्ञोऽपि हि नरः सूक्ष्मानर्थान् द्रष्टुं क्षमोऽपि सन् ।
[1]संजातीरनतिक्रामन्नतिशेते परान् नरान् ॥" इति [तत्त्वसं० का० ३१६०,६१]
"एकशास्त्रविचारेषु दृश्यतेऽतिशयो महान् ।
न तु शास्त्रान्तरज्ञानं तावन्मात्रेण लभ्यते ॥
ज्ञात्वा व्याकरणं दूरं बुद्धिः शब्दापशब्दयोः ।
प्रकृष्यते, न नक्षत्रतिथिग्रहणनिर्णये ॥
ज्योतिर्विच्च प्रकृष्टोऽपि चन्द्रार्कग्रहणादिषु ।
न भवत्यादिशब्दानां साधुत्वं ज्ञातुमर्हति ॥
तथा वेदेतिहासादिज्ञानातिशयवानपि ।
न स्वर्गदेवताऽदृष्टप्रत्यक्षीकरणक्षमः ॥
दशहस्तान्तरं [2]व्योम्नो यो नामोत्प्लुत्य गच्छति ।
न योजनमसौ गन्तुं शक्तोऽभ्यासशतैरपि ॥
तस्मादतिशयज्ञानैरतिदूरगतैरपि ।
किञ्चिदेवाधिकं ज्ञातुं शक्यते न त्वतीन्द्रियम् ॥"
[ तत्त्वसं० का० ३१६४–३१६९ ]

इति । तत् स्थितमनुमानबाधितेयं प्रतिज्ञेति ।

§ ४. तथा, अभावप्रमाणबाधिता । तथा हि–प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावेऽभावप्रमाणमेव विजयते । [3]तदभावमेव दर्शयितुमाह–

"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
दृष्टो न चैकदेशोऽस्ति लिङ्गं वा योऽनुमापयेत् ॥
न चागमविधिः कश्चिन्नित्यः सर्वज्ञबोधकः ॥"
[ तत्त्वसं० का० ३१८६,३१८७ ]

§ ५. "वेदाहमग्रे पुरुषं महान्तमादित्यवर्णं तमसः पुरस्तात् । तमेव विदित्वा [4]मृत्युमत्येति नान्यः पन्था विद्यते अयनाय" इति । तथा, "विश्वतश्चक्षुरुत विश्वतो मुखो, विश्वतो बाहुरुत विश्वतः पात् । संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव

---

१. मनुष्यजातिभाविनी प्रकृतिरदिव्यचक्षुष्ट्वादिलक्षणा, ब-टि० । २. °न्तराद्व्यो° अ० ब० । ३. प्रत्यक्षाद्यभावम्, ब-टि० । ४. विदित्वातिमृ° मु० ।

एक आस्ते" इत्यादेर्विद्यमानत्वात्, इति चेत्; न, स्तुतिमात्रत्वात् एतेषां न प्रामाण्यमिति। तथा चाह–

"न च मन्त्रार्थवादानां तात्पर्यमवकल्पते।
न चान्यार्थप्रधानैस्तैस्तदस्तित्वं विधीयते॥
न चानुवदितुं शक्यं पूर्वमन्यैरबोधितम्।
अनादिरागमस्यार्थो न च सर्वज्ञो नादिमान्॥"
"कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते॥
अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते॥
प्रकल्प्येत कथं सिद्धिरन्योन्याश्रययोस्तयोः।
सर्वज्ञोक्ततया वाक्यं सत्यं तेन तदस्तिता॥
कथं तदुभयं सिध्येत् सिद्धमूलान्तरादृते।
असर्वज्ञप्रणीतात्तु वचनान्मूलवर्जितात्।
सर्वज्ञमवगच्छन्तः स्ववाक्यात् किन्न जानते?॥"
[तत्त्वसं० का० ३१८७-३१९०]

"सर्वज्ञसदृशं किंचित् यदि पश्येम संप्रति।
उपमानेन सर्वज्ञं जानीयाम[1] ततो वयम्॥" [तत्त्वसं० का० ३२१५]
"उपदेशो हि बुद्धादेर्धर्माधर्मादिगोचरः।
अन्यथा नोपपद्येत सर्वज्ञो यदि नाभवत्॥" [तत्त्वसं० का० ३२१७]
"बुद्धादयो ह्यवेदज्ञास्तेषां[3] वेदादसंभवः।
उपदेशः कृतोऽतस्तैर्व्यामोहादेव केवलात्॥" [तत्त्वसं० ३२२४]
"येऽपि मन्वादयः सिद्धाः प्राधान्येन त्रयीविदः।
त्रयीविदाश्रितग्रन्थास्ते वेदप्रभवोक्तयः॥" [तत्त्वसं० ३२२८]

तदेवम्–

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥" [श्लोक० अभाव० १]

§ ६. तथोपमानबाधिता। तथा हि–

"नरान् दृष्ट्वा त्वसर्वज्ञान् सर्वानेवाधुनातनान्।
तत्सादृश्योपमानेन[4] शेषासर्वज्ञसाधनम्॥" [तत्त्वसं० का० ३२१६]

इति। तदेवमनुमानाभावप्रमाणोपमानबाधितेयं प्रतिज्ञेति।

§ ७. भवतु वा, तथापि निष्फला। तथा हि–

"समस्तावयवव्यक्तिविस्तरज्ञानसाधनम्[5]।
काकदन्तपरीक्षावत् क्रियमाणमनर्थकम्॥
यथा च चक्षुषा सर्वान् भावान् वेत्तीति निष्फलम्।
सर्वप्रत्यक्षदर्शित्वप्रतिज्ञाप्यफला तथा॥
स्वधर्माधर्ममात्रज्ञसाधनप्रतिषेधयोः[6]।
तत्प्रणीतागमग्राह्यहेयत्वे हि प्रसिद्ध्यतः॥

---

१. जानीयामस्ततो क० मु०। २. सर्वज्ञसदृशः कश्चित् यदि दृश्येत सम्प्रति। तदा गम्येत सर्वज्ञसद्भाव उपमाबलात्॥ तत्त्वसं०। ३. ये हि तावदवेद° तत्त्वसं०। ४. सादृश्यस्योपमा° तत्त्वसं०। ५. °साधने अ० ब०। ६. °षेधतः मु०।

तत्र सर्वजगत्सूक्ष्मभेदज्ञत्वप्रसाधने ।
अस्थाने क्लिश्यते लोकः संरंभाद् ग्रन्थवादयोः ॥"
[ तत्त्वसं० ३१३८–३१४१ ]

"एतच्च फलवज्ज्ञानं[1] यावद्धर्मादिगोचरम् ।
न तु वृक्षादिभिर्ज्ञातैरस्ति[2] किञ्चित् प्रयोजनम् ॥" [ तत्त्वसं० ३२०३ ]

"क्रत्वर्थाः पुरुषार्थाश्च यावन्तः खदिरादयः ।
सर्ववृक्षज्ञता तावत् तावत्स्वेव समाप्यते ॥
लताः सोमगुडूच्याद्याः काश्चिद्धर्मार्थहेतवः ।
सिद्धान्तज्ञानमात्रेण लतासर्वज्ञताऽपि नः ॥
व्रीहिश्यामाकनीवारग्रामारण्यौषधीरपि ।
ज्ञात्वा भवति सर्वज्ञो नानर्थकशतान्यपि ॥
तथा कतिपयेष्वेव यज्ञाङ्गेषु तृणेष्वपि ।
दर्भादिषु च बुद्धेषु तृणसर्वज्ञतेष्यते ॥
तृणौषधिलतावृक्षजातयोऽन्याः सहस्रशः ।
विविक्ता नोपयुज्यन्ते तदज्ञानेन नाज्ञता ॥
यत्रापि चोपयुज्यन्ते व्यक्तयो जातिलक्षिताः ।
जातिज्ञानोपसंहारात्तत्रापि व्याप्तिरस्ति नः ॥
अतश्च व्यक्तिभेदानामनभिज्ञोऽपि यो नरः ।
सर्वज्ञत्वफले प्राप्ते सर्वज्ञत्वं न वाञ्छति ॥
जरायुजाण्डजोद्भेदसंस्वेदजचतुर्विधे ।
भूतग्रामेऽल्पकज्ञोऽपि सर्वज्ञफलमश्नुते ॥
पृथिव्यादिमहाभूतसंक्षेपज्ञश्च यो नरः ।
सविस्तरानभिज्ञोऽपि सर्वज्ञान्न विशिष्यते ॥
भूमेर्य एकदेशज्ञो भूमिकार्येषु वर्तते ।
सप्तद्वीपमहीज्ञानं क्व नु तस्योपयुज्यते ॥
तथाल्पेनैव तोयेन सिद्धं तोयप्रयोजनम् ।
तोयान्तराण्यविज्ञाय नाज्ञदोषेण युज्यते ॥
वह्नेश्चानन्तभेदस्य ज्ञातस्योपासनादिभिः ।
पञ्चभिः कृतकार्यत्वादन्याज्ञानमदूषणम् ॥
शरीरान्तर्गतस्यैव वायोः प्राणादिपञ्चके ।
ज्ञाते शेषानभिज्ञत्वं नोपलम्भाय जायते ॥
व्योम्नश्च पृथुनः पारमज्ञात्वाप्येकदेशवित् ।
न च व्योमानभिज्ञत्वव्यपदेशेन दुष्यति ॥"

§ ८. धर्मकीर्तिनाऽप्युक्तम् –

"ज्ञानवान्मृग्यते कश्चित् तदुक्तप्रतिपत्तये ।
अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥
तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् ।
कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥
हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः ।
यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः ॥
दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु ।
प्रमाणं दूरदर्शी चेदेते गृध्रानुपास्महे ॥" [ प्रमाणवा० १.३२–३५ ]

१. एकं च फ° अ० ब० । २. फलदज्ञानं तत्त्वसं० । ३. °तैः सर्वैः किञ्चित् तत्त्वसं० ।

"धर्मज्ञत्वनिषेधस्[1]तु केवलोऽत्रोपयुज्यते।
सर्वमन्यद् विजानं[2]स्तु पुरुषः केन वार्यते॥" [तत्त्वसं० का० ३१२८]

"सर्वप्रमातृसंबंधि[3]प्रत्यक्षादिनिवारणात्।
केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः॥
एतावतैव मीमांसापक्षे सिद्धेऽपि यः पुनः।
सर्वज्ञवारणे यत्नस्तैः कृतं मृतमारणम्॥
येऽपि च[4] च्छिन्नमूलत्वाद् धर्मज्ञत्वे हते सति।
सर्वज्ञान् पुरुषानाहुस्तैः कृतं तुषखण्डनम्॥" [तत्त्वसं० का० ३१४२-३१४४]

§ ९. किञ्च, सर्वज्ञे सिद्धेऽपि न प्रतिज्ञातोऽर्थः सिद्ध्यति। तथा हि—

"यत् सत्यं[5] नाम लोकेषु प्रत्यक्षं तद्धि कस्यचित्।
प्रमेयज्ञेयवस्तुत्वं[6] दधिरूपरसादिवत्॥
ज्ञातर्य[7]त्राप्यनिर्दिष्टे पक्षे न्यूनत्वमापतेत्।" [तत्त्वसं० का० ३२३५,३२३६]

"यदि बुद्धातिरिक्तोऽन्यः कश्चित् सर्वज्ञतां गतः॥
बुद्धवाक्यप्रमाणत्वे तज्ज्ञानं क्वोपयुज्यते।" [तत्त्वसं० ३२३७]

"सर्वज्ञो[8] यस्त्वभिप्रेतो न श्रुत्यार्थेन वाऽपि सः॥" [तत्त्वसं० ३२३६]

"विज्ञायते यतः पक्षः साध्यत्वेनेप्सितो भवेत्।
यस्त्वीप्सिततमं पक्षं विशिंष्यात् तस्य संज्ञया॥
यावज्ज्ञेयं जगत्सर्वं प्रत्यक्षं सुगतस्य तत्।
तैरेव हेतुभिः सर्वैः[9] घटकुड्यादिरूपवत्॥
तत्र नैवं विशिष्टोऽपि पूर्वस्मादेष भिद्यते।
विशिष्टग्रहमात्रेण हेतोर्नैव विशिष्टता॥
शक्त्या हि यदा हेतुः दृष्टान्तानुग्रहेण वा।
पक्षान्तरेण तुल्यः स्यात् तदा काऽस्य विशिष्टता?॥
सत्प्रमेयत्व[10]मित्येतद् यतोऽन्येष्वपि वर्तते।
साधनं नियमाभावात् तेनाकिंचित्करं हि तत्॥"

"नरः कोऽप्यस्ति सर्वज्ञः स[11] तु सर्वज्ञ इत्यपि।
साधनं यत् प्रयुज्येत प्रतिज्ञा[12]मात्रमेव तत्॥
सिसाधयिषितो योऽर्थः सोऽनया नाभिधीयते।
यस्तू[13]च्यते न तत्सिद्धौ किञ्चिदस्ति प्रयोजनम्॥
यदीयागमसत्यत्वसिद्धौ[14] सर्वज्ञतोच्यते।
न सा सर्वज्ञसामान्यसिद्धिमात्रेण लभ्यते॥
यावद् बुद्धो न सर्वज्ञस्तावत्तद्वचनं मृषा।
यत्र क्वचन सर्वज्ञे[15] सिद्धे तत्सत्यता कुतः॥
अन्यस्मिन्न हि सर्वज्ञे वचसोऽन्यस्य सत्यता।
सामानाधिकरण्ये हि तयोरङ्गाङ्गिता भवेत्॥"

[तत्त्वसं० का० ३२३०-३४]

---

१. निषेधश्चेत्के° तत्त्वसं०। २. °द्विजानानः पुरु° तत्त्वसं० ३१२८। ३. °संबद्धप्रत्य° तत्त्वसं०। ४. येऽपि विच्छिन्न° तत्त्वसं०। ५. यत् सर्वं नाम तत्त्वसं०। ६. °वस्तुत्वाद्दधि° मु०। ७. ज्ञानमात्रेऽपि निर्दिष्टे पक्षे° तत्त्वसं०। ८. सर्वज्ञ इति योऽभीष्टे नेत्थं स प्रतिपादितः तत्त्वसं०। ९. °भिः पूर्वैः क० मु०। १०. सत्त्वात् प्रमेयमि° मु०। ११. सर्वज्ञः तत्सर्वज्ञत्वमित्यपि तत्त्वसं०। १२. प्रतिज्ञान्यूनमेव तत् तत्त्वसं०। १३. यतू° तत्त्वसं०। १४. °सिद्ध्यै स° तत्त्वसं०। १५. °सर्वज्ञसिद्धे अ० ब०।

§१०. "तदेवं[1] दोषदुष्टस्य पक्षस्यास्य न पक्षता।
इदानीं हेतुदोषेण हेतोर्दूषणतोच्यते॥
वचसोऽपौरुषेयत्वं पूर्वमेव स्थितं यदा।
नष्टमुष्ट्यादिकं नैव कृतं पुंसास्ति किंचन॥
एवं तावदसिद्धत्वमनैकान्तिकता तथा।
पारम्पर्योपदेशेन वचसः संप्रवर्तनात्॥
असत्यार्थं च तद्वाक्यं तेन हेतोर्विरुद्धता।
एवं सर्वज्ञतासिद्धिः कथञ्चिन्नोपपद्यते॥" इति।

§११. अत्रोच्यते—

"दशोत्पाद्यापि मानानि मीमांसा दोषवाहिनी।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी॥
यत्साध्यबाधनायोक्तं प्रमाणदशकं परैः।
प्रामाण्ये तद्विधस्यैषां बहु स्यादसमञ्जसम्॥"

तथा हि—

"तच्छब्दवाच्यतामात्रं प्रामाण्यं[2] यदि कल्प्यते।
न मानं विधिवाक्यं[3] स्यादीश्वरस्य च सिद्धता॥
वेदाहमग्रे पुरुषं महान्तमित्यादिवद्वेदवचोऽप्रमाणम्।
तच्छब्दवाच्यत्वसमानभावाद्भूधरादेरपि कर्तृसिद्धिः॥
संस्थानशब्दवाच्यत्वं यतस्तस्यापि विद्यते।
घटवद्बुद्धिमत्कर्ता तेन तत्रापि सिध्यतु॥
विशेषैः[4] परिहाराय यदि कल्प्येत कश्चन।
नियोगादिस्तदा तस्य दोषाः शास्त्रकृतोदिताः॥"

§१२. तथा[5] हि—यत् प्रमाणगोचरचारि न भवति तन्न सद्व्यवहृतिपथमवतरति। यथा व्योमोत्पलम्[6]। न भवति च नियोगः प्रमाणगोचरचारीति व्यापकानुपलब्धिः। (नियोग-खण्डनम्।) तथा हि—किमसौ स्वतन्त्र इष्यते, परतन्त्रो वा?। न तावत् पटादिपदार्थवत् स्वतन्त्रोऽध्यक्षतः प्रतीयते। नाप्यनुमानात्, तत्सद्भावे लिङ्गाभावात्। न च पुरुषप्रवृत्तिर्लिङ्गम्, तस्याः फलाभिलाषकार्यत्वात्। अन्यथा "स्वर्गकामः" इति फलोपदर्शनं न विदध्यात्। अथ प्रचण्डप्रभुनियोगात् फलाभिलाषमन्तरेणापि प्रवर्तमानो दृश्यते। तन्न, तत्रापायपरिहारस्यैव फलत्वात्। नापि शब्दैकप्रमाणसमधिगम्यता तस्य वाच्या, यतः शब्देन प्रतीयमानोऽसौ किं संबद्धेन[7] प्रतीयते, असंबद्धेन वा?। असंबद्धेन प्रतीतावतिप्रसंगः[8] स्यात्। संबद्धेनापि किं स्वाभाविकसंबन्धात्, साङ्केतिकाद् वा?। प्रथमपक्षे बालगोपालादेरपि प्रतीतिप्रसंगः। नह्याकाशं अनाकाशं कस्यचित्। संकेतोऽपि नियोगे प्रतीतेऽप्रतीते वा?। यद्यप्रतीते तदाऽतिप्रसङ्गः स्यात्। प्रतीतिश्च किं तेनैव शब्देन शब्दान्तरेण वा? तेनैव चेत्; किं संकेतेन?। इतरेतराश्रयत्वं च स्यात्। शब्दान्तरेण चेत्; तदपि शब्दान्तरम् गृहीतसंकेतं प्रवर्तते[9]। पुनरपि सङ्केतग्रहः शब्दान्तरेणेत्यनवस्था।

---

१. तदेव मु०। २. प्रमाणं क० मु०। ३. °वाच्यं स्या° मु०। ४. विशेषपरि° अ० ब०। ५. तथापि मु०। ६. व्योमेत्पलम् मु०। ७. संबन्धेन मु०। ८. प्रतीतावप्यति° क०। ९. प्रवर्तेत मु०।

§ १३. किञ्चासावेकोऽनेको वा ? । एकश्चेत्; सर्वपुरुषाणां नियोगः[1] प्रतीतः स्यात् । अथ विपर्ययात् न परस्येति चेत्; तत्रापि पक्षपातादिति समानम् । अनेकश्चेत्; प्रतिपुरुषमसाधारणतया न संकेतक्रिया स्यात् । किञ्च, शब्दप्रमाणैकसमधिगम्यतया सत्त्वे आकाशकुसुमस्यापि सत्त्वमासज्येत, विशेषो वा वक्तव्यः । न च शब्दप्रवृत्तिमात्रेण सत्त्वं युज्यते । अन्यथा दाराः[2] षन्न(ण्ण)गरीत्यादावपि सत्त्वं[3]मासज्येत । तन्न कश्चित् स्वतन्त्रो नियोगो वाक्यार्थः प्रतीयते ।

§ १४. परतन्त्रोऽपि किं तत्कार्यतया, तद्धर्मतया[4] वा ? । न तावत् प्रथमः पक्षो यतः किमसौ यागकार्यः, नियोज्यैकार्यः[5], शब्दकार्यो वा ? । न तावद्यागकार्यः, तस्य तदानीमनिष्पन्नत्वेनाभावात् । नापि पुरुषकार्यः, पुरुषस्य पूर्वमपि सद्भावेन[6] तद्भावप्रसङ्गात् । नापि शब्दकार्यः, तदा हि न शब्दस्य वाच्यः स्यात्, कार्यत्वात् । न च वैदिकस्य शब्दस्य नित्यत्वेन क्रमयौगपद्याभ्यां जनकत्वं युज्यते । तद्धर्मतायामपि किमसौ यागधर्मः, पुरुषधर्मः, शब्दधर्मो वा ? । न तावद्यागधर्मः, तस्याविद्यमानत्वेन तद्धर्मस्याप्यविद्यमानत्वात् । अविद्यमानविषयत्वे[7] च वाक्यं निरालम्बनमपोहमात्रविषयमेव स्यात् । नापि पुरुषधर्मः, तथाहि—पुरुषाद्व्यतिरिक्तः स्यात्, अव्यतिरिक्तो वा ? । अव्यतिरेके पुरुषस्य सर्वथा निष्पन्नत्वात् न नियोगरूपता स्यात् । नियोगो[8] हि अनुष्ठेयोऽर्थोऽभिधीयते । निष्पन्नस्य चानुष्ठाने नानुष्ठानविरतिर्भवेत्[9] । अथ निष्पन्नस्यापि किंचिदनिष्पन्नमस्ति । तन्न, निष्पन्नानिष्पन्नयोर्विरोधेन तादात्म्याभावप्रसङ्गात् । अथ व्यतिरिक्तः; ननु यावदसौ तस्य धर्मः तावदन्यस्य किं न भवति ? । तस्यैवाधारशक्तिर्नान्यस्येति चेत्; सापि किं नान्यत्रा[10]ऽऽधीयते । तां प्रति तस्यैवाधारशक्तिर्नान्यस्येत्यभ्युपगमेऽनवस्था । न च हेतुफलभावादन्यो व्यतिरेके[11] संबन्धोऽस्ति । तद्भावे च न समानकालता । असमानकालयोर्न च[12] धर्मधर्मिभावः । एतच्च शब्दधर्मतायामपि दूषणं वाच्यम् ।

§ १५. किञ्च, यद्यसौ[13] वस्ति; न पुरुषः प्रवर्तेत । न हि कश्चित् निष्पन्ननिष्पादनाय प्रवर्तते[14] । अप्रवर्तकस्य च वाक्यस्य न प्रामाण्यमुपेयते । अथ नास्ति; तथापि न प्रामाण्यम्, अविद्यमानविषयत्वात् । तन्न[15] कश्चित् नियोगो वाक्यार्थतया प्रतीयते ।

§ १६. अथ शब्दाद् 'यागादिविषये नियुक्तोऽहमनेन' इति प्रतीतेः कथमप्रतीतिः[16] ? । तथाहि—नियोक्ता शब्दो वेदे पुरुषाभावात् । नियोज्यः पुरुषः । यागो विषयः । सकलं चैतत् प्रतीयते । तत् कथं प्रतीतावप्यप्रतीतिः ? । तदसत् । नेयमगृहीतसंकेतस्य प्रतीतिरुदेति । किं तर्हि ? । येन यागं कश्चित् कुर्वाण उपलब्धस्तस्य तत्रैव[17] गृहीतसंकेतस्य पूर्वदृष्टानुसारेण विकल्पिका बुद्धिरुत्पद्यमाना अन्यापोहविषयैवोत्पद्यते । नातस्तत्त्वव्यवस्था ।

---

१. नियोगप्रतीतिः क० मु० । २. दारः मु० । ३. सत्त्वं समासज्येत मु० क० । ४. °तया धर्मतया मु० क० । ५. नियोगकार्यः मु० । ६. सद्भावे तद्भाव° ब० । ७. °विषयत्वं वाक्यं क० । ८. नियोगेन हि मु० । ९. °ष्ठाने न विरतिर्भ° अ० । १०. °त्राभिधीयते क० । ११. °रेकसंबं° क० मु० । १२. °लयोर्न धर्म° मु० क० । १३. नियोगः अ-टि । १४. °र्तते । प्रव° क० मु० । १५. °त्वात् । कश्चित् मु० क० । १६. कथं न प्रतीतिः अ० ब० । १७. तदैव मु० ।

§ १७. एतेन भावनादयोऽपि वाक्यार्थो निरसनीयाः ।

"इति वाक्यस्य ये वाच्यं नियोगं संप्रचक्षते ।
खरशृङ्गस्य ते तैक्ष्ण्यं नूनं व्यावर्णयन्त्यलम् ॥
विधेरपि[1] विधेयत्वेऽनवस्थैव प्रसज्यते ।
स्वरूपवाचकत्वे तु न स्यादन्यविशिष्टता ॥
विधिवाक्यस्य[2] कृच्छ्रेण विशेषपरिकल्पने[3] ।
कैरैथ[4] भक्षितः काकैरध्यक्षे येन[5] नेष्यते ॥
नक्तञ्चरवराहादिप्रत्यक्षेऽप्यक्षवीक्षितम्[6] ।
विशेषमाक्षिपन्मूढः कथं नाध्यक्षबाधितः ॥
मनुष्यत्वे सतीत्येवं यदि[7] हेतोर्विशेषणम् ।
मनुष्यत्वं तदा हेतुः पूर्वस्य स्यादहेतुता ॥
जैमिन्यादिर्विशेषज्ञस्तदा नैव भवेत्तव ।
प्रज्ञोन्मेषस्य चोत्कर्षः क्व नु नाम व्यवस्थितः ॥
स्तोकस्तोकान्तरज्ञत्वं येन पुंसः प्रसाध्यते ।
इन्द्रियान्तरविज्ञानं नेन्द्रियान्तरवस्तुनः ॥
ग्राहकं चेति[8] यो दोषः सोऽतीन्द्रियदृशः कुतः ।
अथातीन्द्रियविज्ञानं न दृष्टं केनचित् क्वचित् ॥
विनेन्द्रियं च वैशद्यं कुतस्तस्य भविष्यति ।
सर्वदेशेषु[9] कालेषु सर्वज्ञो नेति यो[10] वदेत् ॥
तस्य सर्वज्ञता प्राप्ता सिद्धं चास्तसमीहितम् ।
कामादिभावनाजातं विज्ञानं विशदं यदा ॥
तदेन्द्रियसमुत्थत्वं वैशद्ये नोपयोगवत् ।
अक्षाश्रितत्वमध्यक्षे व्युत्पत्तेरेव कारणम् ॥
निमित्तं तु पुनस्तस्य वस्तुसाक्षात्क्रिया मता ।
तदेवं जैनमध्यक्षं नानुमानेन बाधितम् ॥
न प्रमाणमभावाख्यं बाधकं कुत एव तत् ।
सर्वसंबन्धि चाध्यक्षं[11] नेति तत्रेति यो वदेत् ॥
तस्य सर्वज्ञता प्राप्ता नैकस्यास्य निषेधकृत् ।
अनुमानं निषेधाय यद्युच्येतास्य[12] किंचन ॥
असिद्धावाश्रयासिद्धिः सिद्धौ हेतोर्विरुद्धता ।
अर्थः[13] को नोपपद्येत विनाऽसर्वज्ञतां[14] तव ॥
अपौरुषेयता नो चेन्नास्याः पूर्वं निषेधनात् ।
नोपमानस्य मानत्वं बाधकं कुत एव तत् ॥
विशेषाः पुंसि[15] दृश्यन्ते तेनादृष्टेषु का कथा ।"

तथाहि । केचित् सकलशास्त्रज्ञाः केचिन्न किंचिद्विदन्ति । केचिच्चतुर्वेदपाठकाः । केचिद्गायत्रीमपि न पठन्ति । तत् कथमदृष्टेषु पुरुषेषु साम्यं सिद्ध्येत्? ।

§ १८. ननूक्तं 'दशहस्तान्तरम्' इत्यादि ।

---

१. विधिरपि अ० क० ब० । २. विधिबाधस्य मु० । ३. विशेषः परिकल्पते मु० । ४. कैरेव ब० । कैरवे मु० क० । ५. येनेष्यते क० । ६. °प्रत्यक्षेप्यक्षवी° मु० । ७. नु माने व्य° मु० । ८. वेति मु० । ९. °शेषु राष्ट्रेषु मु० । १०. योऽवदत् मु० । ११. वाध्य° मु० । १२. यद्यप्येतास्य मु० । १३. केनोप° ब० मु० क० । १४. विना सर्व° क० अ० । १५. पुंसु दृश्य° मु० क० ।

"तदसत्तुल्यजातीयपूर्वबीजप्रवृत्तयः।
ज्ञेयेषु बुद्धयस्तासां सत्यभ्यासे[1] कुतः स्थितिः॥
नचैवं लङ्घनादेव लङ्घनं बलयत्नयोः।
तद्धेत्वोः स्थितरूपत्वात् लङ्घनस्य स्थितात्मता॥
बलयत्नोत्थमभ्युच्चैर्लङ्घनं हि गरुत्मति।
श्रूयते तेन मानत्वं नोपमानस्य युक्तिमत्॥
न चागमविधिः कश्चित्तन्निषेधाय वर्तते।
तन्नास्य बाधकं किंचित् साधकं प्रतिपादितम्॥
§ १९. धर्माधर्मज्ञतामात्रात् सिद्धमस्तत्समीहितम्।
यदुक्तं तदसत् माननिष्ठा नेच्छानुवर्तिनी॥"

न हि प्रमाणं वस्तुनि प्रवर्तमानं विभाषया[2] प्रवर्तते, तेन—

"समस्तवस्तुविस्तारि सार्वज्ञज्ञानमक्रमात्[3]।
प्रतियज्जगतः[4] कार्त्स्न्यं किमन्यत् परिवर्जयेत्॥
धर्माधर्मौ तयोः कार्यं वेत्ति नासकलार्थवित्।"

तदुक्तम्—"जे एगं जाणइ से सव्वं जाणइ।" [आचा० १.३.४.१२२] तथाहि[5]—सकलकर्म-कारणं सर्वप्राणिकर्माणि। तत्कार्यं नरकादि। तत्कारणकार्यपरंपरायाः[6] परमाण्वन्तपरिज्ञाने कथं न सर्वज्ञता?। तस्मादावरणविगमादनन्तवस्तुज्ञानम्। न च वस्तुपरिसमाप्तिः[7]। यथाहि वयमनाद्यनन्तरूपतां विकल्पविज्ञानेन रात्रिंदिवादीनां बुद्ध्यामहे न च तत्परिसमाप्तिः, तथा भगवतोऽप्यनाद्यनन्तरूपतया साक्षात्कुर्वतो न विरोधः। अकरणाधीनतया[8] च न रसा-स्वादनप्रसङ्गः। अत एवापराधीनतयाऽनियतविषयम्। न चातीतानागतस्य वस्तुन इदानी-मसत्त्वेनासद्विषयम् तदिति वाच्यम्। तत्कालालिङ्गितत्वेन तस्य सत्त्वात्। तदापि हि यदि तद्वस्तु न भवेत् तदा तन्निर्विषयं स्यात्। अन्यथा चोदनाबुद्धिरपि कथं भूतभवद्भविष्य-द्वस्तुविषयिणी सत्या[9]ऽभ्युपेयते। तदुक्तम्—

"किंच तत्कालयोगेन तस्य साक्षात्क्रिया यदा।
तदेदानीमसत्त्वेपि तस्यास्तित्वमदुर्घटम्॥"

अथ यस्य भावी सुतस्तदनुभूयमानतया दृष्टस्तेनाप्रतीयमानतायां कथमभ्रान्तता?। तदप्यसत्

"यथा स दृष्टः शरदादिकालयुक्तस्तथा तस्य न बाधितत्वम्।
तत्कालयोगस्तु न तेन दृष्टस्तथाप्रतीतावपि नास्ति दोषः॥"

यच्च[10] विशेषापरिज्ञाने दूषणमभाणि, तदसत्। यतश्चूडामणिप्रभृतिकेवलीनामतीन्द्रियार्था-नामर्हत्प्रणीतत्वेन सुप्रसिद्धत्वात्। यच्चान्यदुक्तम् तदसंबद्धतयोपेक्षितमिति। विस्तरेण सर्वज्ञ-वादटीकायामुक्तमिति[11][12] विरम्यते।

बाधाकलङ्कविकलं निखिलप्रमाणसामान्यलक्षणमिदं विवृतं स्वबुद्ध्या।
[13]एतेन तीर्थिकमतानि निरस्य नीतं ज्ञानं व्यतीतमनसां[14] परमां प्रतिष्ठाम्॥ [१२[1]]

॥ इति श्रीशान्त्याचार्यविरचितायां वार्तिकवृत्तौ प्रथमः परिच्छेदः॥

१. °भ्यासेषु कुतः क०। २. °षया वर्तते अ० ब० मु०। ३. सर्वज्ञज्ञान मु० क०। ४. प्रतिपद्यमानम् अ-टि०। ५. यथाहि मु०। ६. परंपरापरमार्थपरि° अ०। ७. वस्तुपरिज्ञानपरिस° क० मु०। ८. अकारणा° मु० क०। ९. सत्ताभ्यु° मु० क०। १०. यदपरि° मु०। यद्यपरि° क०। ११. °वाद-टीका° क०। १२. °मुक्त इति क०। १३. यत्तेन तैर्थिक° मु०। १४. मनसः मु० क०।

# २. प्रत्यक्षपरिच्छेदः ।

§ १. एवं प्रमाणसामान्यलक्षणमभिधाय इदानीं संख्या-लक्षण-गोचर-फलविप्रतिपत्ति-निराकरणद्वारेण विशेषलक्षणमभिधातुकामो व्यक्तिभेदकथनमन्तरेण प्रतिव्यक्तिनियतं लक्षणं कथयितुं न शक्यत इति व्यक्तिभेदमेव तावत् कथयितुमाह—ज्ञात्रपेक्ष[1]मित्यादि ॥

**ज्ञात्रपेक्षं प्रमेयस्य द्वैविध्यं न तु वास्तवम् ॥ १२ ॥**

§ २. न हि नीलपीतवद्वस्तुस्थित्या प्रमाणविषयस्य किंचिद्द्वैविध्यमस्ति । किन्तु ज्ञातारमपेक्षते—ज्ञात्रपेक्षम्[1] । तथाहि—तदेव वस्तु कस्यचित् प्रत्यक्षम्, कस्यचित् परोक्षमिति ।

§ ३. ननु इदं द्वैविध्यं केन प्रतीयते ? । न तावत् प्रत्यक्षेण, परोक्षे तस्याप्रवृत्तेः । प्रवृत्तौ वा प्रत्यक्षतैव स्यात् । अथा[2]कस्माद् धूमदर्शनात् परोक्षे वह्नौ प्रतीतिः प्रत्यक्षा, नानुमानम् । यतोऽनु व्याप्तिस्मरणात् मानम् अनुमानम् । न चेह तदस्ति । नैतदस्ति । यतोऽक्षासंबन्धि[3]न्यपि वस्तुनि यद्यक्षजं ज्ञानं प्रवर्तेत तदा सकलपरोक्षवस्तुविषयं प्रवर्तेत । न हि संनिहितासन्निहितयोः परोक्ष[4]त्वे विशेषोऽस्ति । अथ संबद्धधूमदर्शनात् नातिप्रसङ्गः । तदसत् । यतः किं तदेव धूमदर्शनं परोक्षवह्निविषयं कल्प्यते[5] ?, किं वा तज्जनितमन्यदिति । न तावत्तदेव । न हि अन्यवस्तुग्राहकमन्यस्य ग्राहकम् । न च तथाप्रतीतिरस्ति । न हि तद्देशोऽन्यदेशो वा वह्निस्तद्दर्शने प्रतिभासते । ननूक्तम् 'संबद्धधूमदर्शनात् तद्दर्शनम्' इति । उक्तमिदम्, किन्त्वयुक्तम् । यतो यद्यप्रतीतसंबन्धोऽपि धूमो धूमध्वजप्रतीतिं जनयति किं न नालिकेरद्वीपायातस्यापि ? । अथ प्रतीतसंबन्धस्या[6]भ्यासाद् अकस्मात् प्रतीतिः संबन्धस्मृतिं नापेक्षते इत्युच्यते । तन्न, स्मरन्नेवान्तर्लीनं संबन्धं तथा प्रत्येति, अन्यथा अ[7]गृहीतसंबन्धस्यास्य च को विशेषः ? । किञ्च, प्रत्यक्षात्[8] प्रतीतौ विशेषरूपस्य किं न प्रतीतिः ? । कथं न दूरादिति चेत्; न, तत्रापि व्यक्तिविशेषाप्रतीतावपि भास्वरस्य रूपस्य प्रतिभासनात्, न च तथेहेति । तन्न परोक्षे प्रत्यक्षं प्रवर्तत इति । अन्यथा[9] परोक्षमेव तन्न स्यात् । न चेतरेतराश्रयत्वम् । यतः स्वकारणात्साक्षात्कारि विज्ञानमुत्पद्य[10]मानं स्वविषयस्य प्रत्यक्षतां व्यवस्थापयति । तन्न परोक्षे प्रत्यक्षस्य प्रवृत्तिरिति । नाप्यनुमानस्य प्रत्यक्षे । न च मानान्तरमस्ति । सद्भावे वा विषयद्वैविध्यादित्यनर्थकमिति ।

§ ४. अत्रोच्यते । प्रत्यक्षं हीदंतया स्वविषयं परिच्छिदद्यदेवं न भवति तत् सकलमेव परोक्षं व्यवस्थापयति । तथा परोक्षमप्यनिदन्तया स्वविषये प्रवर्तमानं ततोऽन्यत्प्रत्यक्षमिति व्यवस्थापयति । न च परस्परमनन्वयात्[11] कस्य द्वयप्रतीतिरिति वाच्यम् । यस्मान्न ज्ञानमात्मनः सर्वथा भिन्नम् । किन्तु आत्मैव कर्मक्षयोपशमादिन्द्रियद्वारेण लिङ्गद्वारेण वा स्पष्टास्पष्टतया वस्तु प्रतिपद्यत इति कथमनन्वयः[12] ? । [ १२ ]

---

१. ज्ञानापेक्ष° मु० । २. अथ कस्मा° क० ब० मु० । ३. °संबद्धेपि मु० । ४. पक्षले क० । ५. कल्पते अ० । कथ्यते मु० क० । ६. °संबन्धस्य ( पं० १७ ) च को विशेषः ? ( पं० १९ ) । क० । ७. अन्यथा गृहीत- ब० मु० । ८. प्रत्यक्षाप्रतीते मु० । ९. अन्यच्चापरो° क० । १०. °मुत्पाद्यमा° मु० । ११. °मन्वयात् मु० क० । १२. कथमन्वयः मु० क० ।

§ १. तदेवं विषयद्वैविध्यं व्यवस्थाप्येदानीं तयोः लक्षणमाह – दूरासन्नेत्यादि ।

**दूरासन्नादिभेदेन प्रतिभासं भिनत्ति यत् ।**
**तत् प्रत्यक्षं परोक्षं तु ततोऽन्यद्वस्तु कीर्तितम् ॥ १३ ॥**
**तन्निमित्तं द्विधा मानं न त्रिधा नैकधा ततः ।**

§ २. दूरं चासन्नं च ते आदिर्यस्य स्वच्छावरणघनावरणादेः स तथा । दूरासन्नादिश्चासौ भेदश्च तेन प्रतिभासं[1] भिनत्ति । ज्ञानस्य स्पष्टास्पष्टत्वं यद्वस्तु करोति तत् प्रत्यक्षम् । तथाहि – प्रत्यक्षे प्रतिभासमानं दूरे घनावरणाच्छादितं चास्पष्टम्, निकटे स्वच्छावरणावृतं च स्पष्टम् । न[2] चैवं धूमात् प्रतीयमानो वह्निः, दूरासन्नादिष्वप्येकरूपतया प्रतिभासनात् । अत एव आह – **परोक्षं तु ततोऽन्यद्वस्तु कीर्तितम्** पूर्वाचार्यैरिति ।

द्विविधविषयस्य लक्षणम् ।

§ ३. इह प्रामाण्यं यद्यनिमित्तं स्यात् सर्वत्र भवेत् । न चार्थवत्त्वमन्तरेणान्यन्निमित्तं संभवति । न ह्यनर्थकेन ज्ञानमात्रेण कस्यचित् प्रयोजनं, हिताहितार्थं च तदुक्तम् । अतो विषयवत्तया प्रामाण्यं व्याप्तम् । तद[3]भावात् प्रत्यक्षपरोक्षाभ्यामन्यस्य न प्रामाण्यम् । अत आह – **तन्निमित्तं द्विधा मानं न[4] त्रिधेति** । त्रिधेत्युपलक्षणं चतुर्धादेः । प्रयोगश्च – यदर्थवन्न भवति तन्न प्रमाणम् । यथोभयाभिमतं मिथ्याज्ञानम् । नास्ति च प्रत्यक्षपरोक्षव्यतिरिक्तस्य ज्ञानस्यार्थवत्त्वमिति व्यापकानुपलब्धिः । इयं[5] चाग्रे साधयिष्यते ।

प्रमाणसंख्यानियमः ।

§ ४. तथा, यत् यन्निमित्तं त[6]त् तस्मिन् सति भवत्येव । यथान्त्यबीजादिसामग्रीनिमित्तोऽङ्कुरः । अस्ति चानुमानादौ प्रामाण्यव्यवहारनिमित्तम्, अन्यथा प्रत्यक्षेऽपि तद्व्यवहारो न स्याद् अन्यनिमित्ताभावात् । अत आह – **नैकधेति** ।

§ ५. तथा,

"प्रमाणेतरसामान्यस्थितेरन्यधियो गतेः ।
प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचित् ॥"

अयं हि तार्किकचक्रचूडामणिमन्यश्चार्वाकोऽनुमानमङ्गीकुर्वाणोऽपि उन्मादान्नावबुध्यते वराकः । तथाहि – प्रत्यक्षेणाशेषप्रत्यक्षव्यक्तीरप्रतिपद्यमानोऽप्यर्थवत्त्वेन तासां साकल्येन प्रामाण्यं व्यवस्थापयन्ननुमानव्यक्तीनां प्रत्यक्षेणाग्रहणेऽपि प्रामाण्यनिमित्ताभावेन अप्रामाण्यं व्यवस्थापयन्ननुमानं प्रतिक्षिपन् कथं नोन्मत्तः ? । व्याहारादिलिङ्गा[7]च्चाप्रत्यक्षं प[8]रं प्रतिपद्य तदर्थं शास्त्रं रचयन्कथमनुमानं नाभ्युपैति ? । तथा, अनु[9]मानप्रामाण्यं विना 'नानुमानं प्रमाणमिति' स्ववचनमभ्युपगम्यानुमानप्रतिषेधं[10] कुर्वाणः स्ववचसैव तिरस्क्रियते । परलोकादौ प्रत्यक्षं न प्रवर्तते, तेन च तदभावं करोतीति महत्प्रमाणकौ[11]शलमस्य । प्रत्यक्षनिवृत्तेरभाव इति चेत्; सा किं प्रत्यक्षा सती वराकी तदभावं प्रत्येति किं वा लिङ्गभूता ? । न तावत्

१. प्रतिभासन्ते ज्ञा° मु० । २. नैवं मु० क० । ३. विषयवत्ता° अ-टि० । ४. न त्रिधेत्यु° अ० ब० क० । ५. °ब्धिश्चाग्रे मु० । ६. °मित्तं तस्मिन् मु० । ७. °च्च प्रत्यक्षं मु० क० । ८. परां प्रति° अ० ब० । ९. अनुमानं प्रामाण्याविनाभावि नानुमानं प्रमा° अ० ब० । अनुमानप्रामाण्यं विनानुमानं न प्रमा° मु० । अनुमानप्रामाण्याविनानुमानं प्रमा° क० । १०. प्रतिबन्धं अ० ब० । ११. °माणकोश° क० ।

प्रत्यक्षा; न हि प्रत्यक्षाभावः प्रत्यक्षम्, अन्यथा तदभाव एव न स्यात् । यदि लिङ्गभूता; सा किं तदभावाविनाभूता[1], किं वा नेति ? । यदि न; तदा[2] कथमेकान्तेन गमयेत्[3] ? । अथाविनाभूता; कथं नानुमानमिति ? । [ १३-१४' ]

§ १. एवमेकत्वसंख्यां निरस्यानेकत्वसंख्यां निरस्यन्नाह—सादृश्यमित्यादि ।

**सादृश्यं चेत् प्रमेयं स्यात् वैलक्षण्यं न किं तथा ॥ १४ ॥**

उपमाननिषेधः ।

§ २. इह 'यथा गौस्तथा गवयो यथा गवयस्तथा गौः' इत्युपमानम् । न तावद्गोर्गवय[4]व्यक्तिविषयमस्य प्रामाण्यम्, तस्याः प्रत्यक्षेण प्रतिपन्नत्वात् । सादृश्यविषयमिति चेत्; महिषगवयवैलक्षण्ये मानान्तरं स्यात् । सादृश्याभावरूपत्वाद् वैलक्षण्यस्य नेति चेत्; वैलक्षण्याभावरूपं सादृश्यं किं न भवति ? ।

§ ३. अपि च किमिदं सादृश्यम् ? । न तावत्सामान्यम्, विजातीययोस्तस्यानभ्युपगमात्[5] । अथ धर्मसाधकत्वं सादृश्यं तत्संज्ञाकरणं चोपमानस्य[6] फलम् । तथाहि[7]—गवाभावे गवयालंभनेऽपि[8] तथाविधधर्मोत्पत्तिरिति । तर्हि मृतमिदानीं भट्टसामान्यम्, जीवितं सौगत[9]सामान्यम् । सौगतस्यापि हि वाहदोहा[10]द्येकार्थक्रियाकारित्वं सामान्यनिबन्धनम् । तदर्थिनो गोव्यक्तिषु सामान्यमन्तरेणापि संज्ञाकरण[11]मुपपत्स्यत इति किं तत्कल्पनया ? । यच्च धर्मसाधकत्वं हिंसायामपि, तदलं पापकथयेति । एवंविधेन च कल्पितेनार्थेनार्थवत्त्वे प्रमाणेयत्ता न स्यात् । तन्नोपमानं विषयवत् । [ १४' ]

§ १. तदेवमुपमानस्य प्रामाण्यं निरस्यार्थापत्तेर्निरस्यन्नाह—अर्थापत्तेरित्यादि ।

**अर्थापत्तेर्न मानत्वं नियमेन विना कृतम् ।**

अर्थापत्तेः पृथक्प्रामाण्याभावः ।

§ २. इह पूर्वं सति नियमेऽनुमानत्वं प्रत्यपादि । इदानीम् अनियमे तस्याः प्रमाणत्वं चक्षुर्दृष्टान्तेन[12] प्रतिपादितं निराक्रियते । चक्षुषोऽपि हि रूपे एकसामग्र्यधीनतालक्षणोऽस्त्येव नियमः । अन्यथा यतः कुतश्चिद् अन्यत् सर्वं प्रतीयेत । नचैवम् । [13]अतो **नियमेन विना कृतं** रहितं **नार्थापत्तेः** प्रामाण्य[14]मिति ।

§ ३. अत एवास्याः षड्भेदकथनमसत् । तथाहि—हस्तस्फोटादेर्वह्नेर्दाहकशक्ति[15]ज्ञानं कार्यानुमानात् न भिद्यते । न च शक्तिः काचिदस्ति । दाहस्वरूपमेव हि मन्त्रादिना तिरस्क्रियते । अन्यथा किं तस्य रूपं स्यात् । तन्न प्रत्यक्षपूर्विकाऽर्थापत्तिः । नाप्यनुमानपूर्विका । सा[16]हि देशान्तरप्राप्तेरादित्यगत्यनुमाने तद्गमनशक्तिप्रतीतिरूपा । तत्रा[17]पि न काचिच्छक्तिः । यदि वा समर्थकारणानुमानं तदिति । तथा, शब्दपूर्विका—'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दिवाभोजननिषेधं[18] शब्दादवेत्य[19] रात्रौ भोजनप्रतीतिरर्थापत्तिरिति । सापि कारणानुमानान्न भिद्यत इति । तथा, गोगवययोः सादृश्यमुपमानात्प्रतीत्य तच्छब्दवाच्यताशक्तिमर्थापत्त्या

१. °भूता नेति अ० । २. तथा अ० ब० । ३. साधयेत् मु० । ४. तावद्गौर्गवय° क० । ५. विजातीयस्य तस्यानभ्यु मु० । ६. °मानफलम् क० मु० । ७. तथा गवा° क० । ८. गवयोपलम्भेपि मु० । ९. सौगतं सा° अ० । १०. वाहदौहा° अ० ब० । ११. संज्ञाकारण° अ० । १२. °न्ते प्रति° क० । १३. नचैवमिति निय° मु० । १४. प्रमाणत्वमिति क० मु० । १५. शक्तेर्ज्ञा° अ० । १६. तथाहि मु० । १७. तत्रापि मु० । १८. °निषेधः मु० । १९. °वेत्यानन्तरं रात्रौ मु० ।

प्रत्येतीति। सापि शक्त्यभावान्न किंचिदिति। तथा, शब्दाद्वाच्यमवेत्य तद्वाचिकां शक्तिमर्थापत्त्या प्रतिपद्य शब्दनित्यत्वमर्थापत्त्या प्रत्येतीति। सापि प्रथमार्थापत्तिनिरासेनैव निरस्ता। तथा, जीवति देवदत्तो गृहे नास्तीति बहिस्तदस्तित्वमभावपूर्विकयाऽर्थापत्त्या प्रत्येति। तत्रापि देवदत्तजीवनं येन प्रमाणेन ज्ञातं तेनैव बहिरस्तित्वमपि, किमर्थापत्त्या ?। तन्नार्थापत्तिरपि प्रमाणमिति। [१५[१]]

§१. इदानीम् अभावप्रमाणं निरसितुं तत्पूर्वपक्षमुत्थापयन्नाह – **प्रमाणपञ्चकेत्यादि।**

**प्रमाणपञ्चकाभावेऽभावोऽभावेन गम्यते॥ १५॥**

§२. तथाहि – न तावत् प्रत्यक्षेणाभावो गम्यते। इन्द्रियसन्निकर्षाभावेऽपि हि यद्युत्पद्येत तत्प्रत्यक्षं सर्वाभावेषू[२][३]त्पद्येत। न[४] चाभावे सोऽस्ति। तदुक्तम् –

"न तावदिन्द्रियेणैषा[५] नास्तीत्युत्पाद्यते मतिः।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि॥" [श्लोकवा० अभा० १८]

§३. प्रत्यक्षनिषेधे[६] चानुमानमपि तत्र निषिद्धम्, तत्पूर्वकत्वादस्य। नहि अप्रतिबद्धं[७] लिङ्गं कस्यचिद्गमकम्। प्रत्यक्षस्य च तद्ग्रहणनिषेधात् कथमभावेन कस्यचिल्लिङ्गस्य प्रतिबन्धावगमः ?। अनुमानेन ग्रहणेऽनवस्था। सैवं न भवेद्यदि मूलभूतं तद्ग्राहकं क्वचिदुपेयते। नापि सामान्यतो दृष्टाल्लिङ्गात् तदवगतिः, कार्यादेर्लिङ्गस्याभावात्। अनुपपद्यमानस्य चाभावादर्थापत्तिर्[८]पि न। नाप्यागमस्[९]तत्प्रतिपादकः, तस्य लौकिकवैदिकभेदेन द्विधा स्थितत्वात्। लौकिकस्य प्रत्यक्षानुमाननिषेधे[१०]न निषेधः। वैदिकस्याप्यनुष्ठेयविषयप्रतिपादकस्य न तत्प्रतिपादने व्यापारः। यदपि वैदिकं वचः "असद्वा इदमग्र आसीद्" [तैत्ति० २.७] इत्यादि तदर्थवादत्वेन स्वरूपप्रतिपादकं न भवतीति व्याख्यातम्। नाप्युपमानस्याभावो विषयः, तस्य द्विविधस्यापि प्रमेयान्तरप्रतिपादनात्। एतच्च तत्प्रत्यक्षनिषेधेनाऽनु[११]मानमभ्युपगम्योक्तम्।

§४. न तु तत्प्रतिपत्तौ किञ्चिल्लिङ्गमस्ति। न तावद्भावः तेन सह पूर्वं क्वचिदप्यदृष्टत्वात्। दर्शनेऽपि व्यभिचारसंभवात्। यत्र यदभावो गृहीतस्तत्र तद्भावस्यापि क्वचिद्ग्रहणाद्व्यभिचारे वा तयोर्यस्मादेव व्याप्तिग्राहकात् प्रमाणात् तदवगमः तदेव प्रमेयप्रतिपत्तौ निमित्तं भविष्यतीति किं भावाख्येन लिङ्गेन ?। एतेन तत्प्रतिपत्तिरप्यभावलिङ्गत्वेन निराकृता।

§५. नाप्यनुपलब्धेः प्रतिषिध्यमानवस्त्वग्रहणस्वभावाया लिङ्गता, तस्याः स्वरूपानिश्चयात्। न तावत् प्रतिषिध्यमानवस्तूपलब्धिप्रतिषेधोऽनुपलब्धिस्तस्या अभावत्वेन ग्रहणासंभवे लिङ्गत्वानुपपत्तेः। न च तथाविधेनाऽन्येन लिङ्गेन तद्ग्रहणम्, अनवस्थाप्रसङ्गात्। न चागृहीताया लिङ्गता। भवतु वा तस्या[१२] ग्रहणम्, तथापि स्वसाध्येन संबन्धग्रहणं पूर्वं वक्तव्यम्। न हि पक्षधर्मत्वनिश्चयमात्राद[१३]नुमेयप्रतिपत्तिः। संबन्धग्रहणाभ्युपगमे वा तत्र

---

१. शब्दवाच्य° मु० क०। २. प्रतिपाद्य मु०। ३. °भावेष्युत्प° मु०। ४. नैवाभावे मु०। ५. दिन्द्रियैरेषा श्लोकवा०। ६. °निषेधेनानु° क० मु०। ७. °बद्धलि° क०। ८. °त्तिरिति न मु० क०। ९. °मस्तत्र प्र° मु०। १०. निषेधे नि° अ० ब०। ११. लिङ्गम् अ-टि०। १२. तस्याऽग्रहणम् मु०। १३. °मात्रानुमे° क०।

प्रमाणं वक्तव्यम् । न तावत्सैव प्रमाणम्, तद्व्यतिरिक्तेनान्येन तयोः संबन्धग्रहणाभ्युपगमात् । न हि धूमाग्न्योः प्रतिबन्धग्रहणकाले धूमे न प्रतिबन्धग्रहः । प्रमाणान्तरसद्भावे तदेवाभावस्यानुमेयस्य प्रतिपादकमस्तु, किमनुपलब्ध्या ? । अनवस्था च तया प्रतिबन्धग्रहणे ग्रन्थकारैर्दर्शिता । तन्नोपलब्धि[1]प्रतिषेधोऽनुपलब्धि[2]र्लिङ्गम् ।

§६. नाप्यन्योपलब्धिः, विकल्पानुपपत्तेः । तस्या लिङ्गत्वे तद्गम्यं वस्तु वा स्यात्, प्रतिषिध्यमानवस्त्वभावो वा, असद्व्यवहारो वा ? । न तावद्वस्तु, तस्य प्रमेयत्वेऽपि[3]अनुपलब्ध्याख्यलिङ्गागम्यत्वात् । नापि वस्त्वभावः, तस्य तया सह पूर्वोक्तेन न्यायेन प्रतिबन्धग्रहणासंभवात् । असद्व्यवहारश्चेत्; एतदुक्तं भवति — यद्यपि परमते भूतलोपलब्धेर्घटाभावं प्रति पूर्वोक्तेन क्रमेण [4]न लिङ्गता तथापि तस्यास्तद्रूपत्वं प्रतिषेद्धुमशक्यम्[5] । यतः पदार्थान्तरोपलब्धिस्वभावा सा[6] स्वसंवेदनप्रत्यक्षसिद्धा । प्रमेयमपि तस्या न वस्त्वन्तरम्, नापि वस्तुप्रतिषेधः तस्य गृह्यमाणवस्तुव्यतिरेके[7]णासत्त्वात् । अत एव[8] न तेन सह प्रतिबन्धग्रहणं मृग्यम् । [9]असद्व्यवहारस्तु तया साध्यते । स च तस्मान्निमित्तात् पूर्वमसकृत् प्रवृत्तेर्न प्रवर्त्यते । किं तर्हि क्रियते ? । समयस्मरणमात्रम् । तथा चोक्तम् । "स्मार्यते[10] समयं[11] परः ।" अयमर्थः — शशविषाणादावसत्त्वव्यवहारनिबन्धनं भवतोऽस्मान्निमित्तात् नान्यत् किंचित् पूर्वं प्रवृत्तम् । न च तेषु कश्चिदपि सद्व्यवहारं करोति । न चोक्तनिमित्तव्यतिरिक्तस्य निमित्तान्तरस्य संभवः । यथा तदसंभवः तथा वादन्याये निर्णीतमिति नेहोच्यते ग्रन्थगौरवभयात् । अतः तन्मात्रनिबन्धोऽसद्व्यवहारस्तया साध्यते ।

§७. ननु ज्ञानाभिधानस्वभावोऽसद्व्यवहारोऽभिप्रेतः । स चानुपलब्धेः पूर्वोक्तायाः साध्ये[12] उक्तः । सा च स्वभावहेतावन्तर्भाविता । तस्यास्तस्मादर्थान्तरत्वे कथमन्तर्भावः ? नैष दोषः । नात्र तया स साध्यते, तस्य पुरुषेच्छायत्तत्वात् । किन्तु तन्निमित्त[13]दर्शनेन नैमित्तिकस्य व्यवहारयोग्यत्वस्य प्रदर्शनं विवक्षितम् । एवं विषयदर्शनेन विषयी प्रदर्श्यत इति यत्राभिधानं तत्राप्ययमेवाभिप्रायः ।

§८. तथा, अन्यत्रोक्तम् —

"हेतुना यः समग्रेण कार्योत्पादोऽनुमीयते ।
अर्थान्तरानपेक्षत्वात् स स्वभावोऽनुवर्णितः ॥" [प्रमाणवा० ३.६]

यथैतस्य स्वभावहेतुता तद्वदुक्तेऽपि हेतौ । यत उत्पादशब्देनात्र श्लोके न कार्योत्पत्तिरभिधीयते, तस्याः सामग्रीतोऽर्थान्तरत्वेन स्वभावत्वायोगात् । किन्तूत्पद्यतेऽस्मादित्युत्पादः समग्राणां योग्यतैवमुक्ता । तत् स्थितमनुपलब्धेः स्वभावहेतावन्तर्भावः । तत्र यथा शशविषाणादौ तस्मान्निमित्तादसद्व्यवहारं करोति तथा चक्रमूर्द्धन्यपि मूढो घटस्य कार्यते । यत एवमुच्यते तस्य न भवता तत्र निमित्तान्तरमसद्व्यवहारे मृग्यते[14], तस्याविकलस्यात्रापि

१. °लब्धिः प्रति° मु० । २. °ब्धिलिङ्गम् क० । ३. °त्वेप्युपल° क० अ० ब० । ४. क्रमेण लि° मु० क० । ५. °क्यम् त्वया यतः मु० । °क्यम् त्वा यतः क० । ६. सा च स्व° क० मु० । ७. °केण सत्त्वात् मु० क० । ८. एव तेन मु० ब० क० । ९. मृग्यम् सद्व्य° मु० क० । १०. स्मर्यते मु० क० । ११. समयः परम् मु० । १२. साध्यमुक्तः मु० । १३. °मित्तप्रद° मु० क० । १४. मृग्यम् तस्य विकल्पस्या° मु० ।

सद्भावात् किमिति भवान् तत्र न[1] प्रवर्तयति । तस्मादनुपलब्धेः लिङ्गादसद्व्यवहारप्रवृत्तौ कथमिदमुक्तम्—'लिङ्गाभावान्नाभावस्यानुमेयतेति' ।

§ ९. नन्वेवं सुतरां तस्यानुमेयता[2] नास्ति । यतो यद्यल्लिङ्गत्वेन विवक्षितं तत्तन्न प्रतिपादयति । यच्च तस्मात् प्रतीयते सोऽभावो न भवति, योग्यताया भावरूपत्वात् । तस्मात्कथमनुपलब्धेर्लिङ्गात् तत्प्रतिपत्तिरित्युच्यते ? । किञ्च, किमित्यभाव एव पूर्वोक्ताल्लिङ्गात् प्रमाणान्तराद्वा नावसीयते ? । किमत्रोच्यते । तस्य भावव्यतिरेकेणासत्त्वात् । तथा[3] चाभावो लिङ्गात् प्रमाणान्तराद्वाऽवसीयमानो न स्वतन्त्रतया प्रतीयते । किन्तु देशादिविशेषणत्वेनैव प्रतिपत्तिः—अत्रेदानीम[4]स्य चाभावः ।

§ १०. न चाभावस्य देशकालाभ्यां सह विशेषणविशेष्यभावः[5], वस्तुप्रतिषेधरूपत्वेनानुपकार्योपकारकस्वभावत्वात् । नापि भावसंबंधिता तस्य युक्ता, तयोर्भिन्नकालत्वात् । यदा घटाख्यो भावः, न तदा तदभावः । यदा[6] तस्य सत्त्वं[7] न तदा घटोऽस्तीति कथं तस्य तत्सं[8]बंधिता ? । न च स्वतन्त्रस्य तस्य[9] प्रतिपत्तिः ।

§ ११. अथैव[10]मुच्यते—घटो नास्तीति तयोः समानाधिकरणप्रत्ययविषयता तत् कथं नीलोत्पलादिवत् तयोः संबन्धाभावः ? । अस्त्ययं प्रत्ययः । स तु संबन्धं विना भवन् मिथ्यात्वेन व्याख्यातृभिर्व्यवस्थापितः । यतो न प्रतिभासनिबन्धनं सत्त्वम् । तन्निबन्धनत्वे तस्य नेदानीं किञ्चित् असद् भवेत् । प्रतिभासस्यासत्त्वेऽपि तत्त्व[11]वत उपजायमानत्वात् । तस्माद् घटस्याभाव इति प्रत्ययो मिथ्या ।

§ १२. विशेषणविशेष्यभावश्चे[12]त् संबन्धस्तयोरस्तीति । न, तस्य संबन्धपूर्वकत्वेन स्थितत्वात् कथमत्र तद्भावोऽन्यथा पुरुषे[13]च्छया तयोर्विपर्ययो न स्यात् । दृश्यते च तदिच्छया विपर्ययः । कदाचिद्विशेषणत्वे[14]नापि व्यवस्थितं पूर्वं पश्चाद्विशेष्यत्वेन विवक्ष[15]ति । एवं विशेष्येऽपि द्रष्टव्यम् । उभयोरुभयरूपत्वाददोष इति चेत्; तद[16]सत्, तयोरसंबन्धप्रसङ्गात् । न विशेष्यस्य विशेषणेन संबन्धो नापि विशेषणस्य तथाविधेन । अपि चोभय[17]योर्द्विरूपत्वे सर्वदा तयोर्द्विरूपा[18] प्रतिपत्तिर्भवेत् । न चैतद् दृष्टम् । तस्मान्न घटस्याऽभाव इति तयोर्विशेषणविशेष्यभावः ।

§ १३. अथ[19] मा भूदसौ, विरोधस्तु तयोरस्तीत्येवमभिधानम् । एतदसत् । तस्मिन् सति संबन्धित्वेन प्रतिभासो न स्यात्, अपि तु विरुद्धत्वेन मुद्गरादिवत् । किञ्च[20], विरोधोऽप्यवस्थाप्यमान एवं व्यतिष्ठते यद्यभावे सति भावो न स्यात् प्रकाश इव तमः । न त्वेवं अत्रास्ति । न हि घटे विद्यमाने कुतश्चित् स्वस्मान्निमित्तादभावो भवन् भावं विरुणद्धि, प्रकाशवदेव ।

---

१. तत्र प्रव° मु० क० । २. मेयं नास्ती मु० । ३. तन्नाभावो अ० । ४. °दानीं तस्य अ० । ५. °ष्यभावोऽस्तु प्रति° क० । °ष्यभावौ स्तः प्रति° मु० । ६. यदा तु तस्यासत्त्वं मु० । ७. तस्यासत्त्वं क० । ८. तस्य संबं° अ० । ९. °न्त्रस्य प्रति° मु० । १०. अत्रैव° क० मु० । ११. °पि सत्त्ववदुप° मु० । १२. °भावश्च सं° मु । १३. पुरुषेच्छायत्तयोर्वि° मु० क० । १४. °णत्वेऽपि मु० क० । १५. विवक्ष्यति ब० । १६. चेत् तदनन्तरयोरसं° ब० मु० क० । १७. अपि चोभयोर्द्विरूपा प्रति° अ० । १८. द्विलरूपा ब० मु० । १९. °भावः । मा भूद° मु० क० । २०. वत् । विरो° मु० क० ।

किन्तु स्वस्माद् मुद्गरादेर्विरोधिनः प्रत्ययात् स्वयमेव न भवति। न च तथा भवन्नभावेन विरोधमपेक्षते तस्यान्यविरोधिजन्यत्वात्।

§ १४. अथोच्यते – यथा मुद्गरापेक्षयाऽसौ घटो न भवति तथा [1]स्वसंबन्ध्यभावापेक्षया न भविष्यतीति किमत्रानुपपन्नम्?। ननु एतदेव यत् तयोरसमानकालत्वम्। समानकालत्वे हि तयोर्विरोधाविरोधौ चिन्त्येते न [2]त्वेवमेव। अपि च, मुद्गरादिवत् तस्य विरोधकत्वाभ्युपगमेऽनवस्थाप्रसक्तिः। यथा मुद्गरो घटस्याभावजनकत्वात् तद्विरोधी एवमभावोऽपि अभावान्तरजनकत्वेन, [3]तदप्येवमित्यनवस्था। न चाऽकिंचित्करा[4]दुत्पन्नस्य पदार्थान्तरस्य तथात्वव्यपदेशः। तन्न भावाभावयोर्विरोधोऽपि संबन्धः।

§ १५. किञ्च, तस्य शास्त्रे कार्यकारणभावत्वेन स्थापितत्वात् मुद्गराद्यपेक्षा तस्याऽसमर्थतरासमर्थतमोत्पादे। न तु तस्य तदपेक्षया निवृत्तिः, स्वयमेवैकक्षणस्थायित्वेन स्वहेतोरुत्पन्न[5]त्वात्। [6]तन्न मुद्गराद्य[7]पेक्ष्यासौ निवर्तते, स्वयमेव निवृत्तत्वात्। अन्यथा तन्निवृत्त्ययोगात्। तस्मान्न भावाभावयोः कश्चित् संबन्धः। तदभावान्न तस्य प्रतिपत्तिः। न हि भाववदभावो देशाद्यनपेक्षः स्वतन्त्रः [8]प्रत्ययविषयः। [9]अतो यदस्ति कथंचिन्निमित्तमात्रं तन्न प्रमाणगोचरः। यच्च प्रतीयते देशाद्यपेक्षम्, तन्निरूप्यमाणं न तत्त्वतोऽस्तीति कथमभावः प्रमेयः स्यात्?। तद्भाव एवैकदाऽस्ति पश्चात् स एव न। न तु तस्य पश्चादभावः।

§ १६. इतश्च [10]न तस्य निरूप्यमाणं तत्त्वमस्ति। यतोऽसौ भवनधर्मा भवेद्, अन्यथा वा? पूर्वस्मिन्पक्षे वस्तुनि एव अभाव इति नाम कृतं स्यात्। उत्तरस्मिन्नपि सर्वपदार्थानामसत्त्वप्रसङ्गः। सत्त्वाभ्युपगमे [11]तस्योनताद्यभावादवश्यंभाविनी नित्यता। ततश्च विरोधिनः सर्वदा सन्निधानाद्भावो जगति नाममात्रेणाप्युच्छिद्येत।

§ १७. अपि च तस्यैकभावसंबन्धिता भवेत्, सर्वसंबन्धिता वा?। पूर्वस्मिन्पक्षे विशेषो वक्तव्यो येन तस्यैवासौ नान्यस्येति। तन्निवृत्तिस्वभावत्वादेवं भविष्यतीति अपास्तम्, अकिंचित्करत्वेन तस्याः। यथा ह्यसौ तत्राकिंचित्[12]कर्यपि तस्य निवृत्तिः, तथा त्रैलोक्यस्यापि किमिति न भवति?। तन्नैकभावसंबन्धी। नापि सर्वसंबंधी एकस्य विनाश उत्पादे वा सर्वस्य विनाशोत्पादप्रसंगात्। न चैवमस्ति। तन्नाभावस्य केनचित्संबन्धः। तस्मात् कल्पनामात्रदर्शित एवाभावो न तत्त्वतः कश्चिदस्तीति स्थितम्।

§ १८. अत्राहुः – एवमभावनिराकरणे पर्युदा[13]स एवैको नञर्थः स्यात्। तत्र च द्वयी गतिः। वस्त्वन्तरस्य सत्ता अन्यस्याभावः, पदार्थान्तरत्वेन वा भावविलक्षणस्याभ्युपगतस्य?। उत्तरस्मिन्पक्षे प्रसज्यप्रतिषेधे यो दोष उक्तः सोऽत्राप्यपरिहार्यः। न हि पदार्थान्तरोत्पत्तौ स्वरूपेणाप्रच्युत[14]स्य पूर्ववदुपलब्ध्याद्यकरणं, निवृत्तौ वा स्वयमेव तस्य निवृत्ते[15]र्न पदार्थान्तरोत्पत्त्या किंचित्। तन्नोत्तरः पक्षः। नापि पूर्वः। तत्र स एव भावोऽन्यापेक्षयाऽभावः।

---

१. तथा संबन्धाभावा° मु०। २. नन्वेवमेव मु०। ३. °त्वेन, न च तदप्ये° क० मु०। ४. °करादेरुत्प° मु०। ५. रुपपन्नत्वात् मु० क०। ६. °त्वात्। मुद्ग° मु०। ७. मुद्गरादिमपे° मु० अ० ब०। ८. प्रत्यक्षवि° ब०। ९. °षयः यस्मात् तस्य प्रतिपत्तिः नहि भाववदस्ति कथं° मु०। १०. इतश्च तस्य मु० क०। ११. अभावस्य अ-टि०। १२. °चित्कार्यपि मु०। १३. पर्युदासस्यैको मु०। १४. °स्य भावस्य पूर्व° क०। १५. निवृत्तेर्वा पदा° मु०।

ततश्च घटस्य प्रध्वंसः कपालानां सत्ता । यदा च कुतश्चिन्निमित्तात् तेषां प्रध्वंसः तदा गत्यन्तराभावाद् घटस्याभावे प्रतिषिद्धे सत्तया भाव्यम् । न चैतद् दृष्टम् ।

§१९. किं च यथा कपालानां सत्ता घटस्याकिंचित्कर्यपि प्रध्वंसः, तथा त्रैलोक्यस्यापि सा प्रसज्येत । ततश्चैकविनाशे सर्वविनाशः । एकोत्पादे च सर्वोत्पादः । तथाहि—दध्नः प्रागभावः क्षीरमात्रम्, तन्निवृत्त्या तस्योत्पादात् । यथा च प्रागभावव्यावृत्तौ दध्न उत्पत्तिः एवं पदार्थान्तरस्यापि । [1]अथ येनैवासौ संबद्धः तस्यैवासौ प्रागभावः प्रध्वंसो वा । तेन न पूर्वोक्तो दोषः । [2]उक्तमत्र—'तेन सह संबन्धे विशेषहे[3]त्वभावः' । तत् प्रसज्यप्रतिषेधे [4]पर्युदासरूपस्याभावाख्यस्य प्रमेयस्याभावात् कथं तत्प्रतिपत्तिः कुतश्चिल्लिङ्गाद् दृश्यते । तत्रैवम[5]भावाभावे ग्रन्थकारैः पदार्थसंकराख्यो दोषः प्रतिपादितः—

"क्षीरे दधि भवेदेवम्" [ श्लोकवा० अभा० ५ ]

इत्यादिना ।

§२०. नैष दोषः । परात्मना[6]ऽसत्त्वा[7]नभ्युपगमे पूर्वोक्तम[8]सामंजस्यं प्रतिपादितम् । अथ ब्रूयात्—स्यादयं दोषो यदि स एव भावः पररूपे[9]णासन्न भवेत् किन्तु [10]तस्य पररूपेणासत्त्वं धर्मिणो धर्मः । त[11]था च द्व्यात्मकः पदार्थोऽभ्युपगतो भवति । तदुक्तम्—

"स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते[12] किंचित् रूपं कैश्चित्कदाचन ॥" [ श्लोकवा० अभा० १२ ]

न च तयोर्भावाभावलक्षणयोरं[13]शयोरनेन प्रकारेणाभेद उक्तो येनायं दोषः स्यात् किन्तु कथंचिद्भेदस्याप्यभ्युपगमात् । तदुक्तम्—

"धर्मयोर्भेद इष्टो हि [14]धर्म्यभेदेऽपि नः स्थिते ॥" [ श्लोकवा० अभा० २० ]

§२१. [15]अत्रोक्तम्—"[16]ऐकान्तिको भेदोऽस्तु तयोः, कथञ्चिद्वा भेदस्तावदिष्टः । तथा सति भावस्य घटाख्यस्याभावांशे[17]न पदार्थान्तरात् पटाख्यात् य[18]थाऽसंकीर्णता एवं [19]भावाभवांशयोरपि । ततश्च पटादि[20]र्भावांशादपि तेनासंकीर्णेनाभावान्तरेण भाव्यम् । तस्मादप्यसंकीर्णता[21]भ्युपगमेऽनवस्था प्रदर्शितैव । तन्नाभावांशाभ्युपगमेनापि पदार्थान्तरा[22]त् पदार्थान्तरस्य [23]व्यावृत्तिसिद्धेर्वस्त्वसंकरसिद्धिः । किन्तु स्वहेतुतः समुपजायमाना भावाः परस्परासंकीर्णस्वभावा एवोपजायन्ते । अन्यथा पूर्वोक्तदोषप्रसङ्गः । तदुक्तम् "[24]सर्वभावाः [25]स्वस्वभावस्थितयो नात्मानं परेण मिश्रयन्ति" । तत् 'नास्तीति' व्यवहारमात्रम् । न त्वभावो नाम [26]तज्ज्ञानगम्यः कश्चिद्विद्यते । भाव एवैकदा अस्ति । अन्यदा स एव न । न तु तस्याभावो

---

१. °स्यापि । तस्यैवा° मु० क० । २. अत्रोक्तम् ब० मु० क० । ३. °हेतुभावः मु० क० । ४. °षेधे च पर्यु° क० । ५. तत्रैवमभावे मु० । ६. °त्मनोऽस° मु० । ७. °सत्त्वाभ्यु° मु० क० । ८. °क्तमासमंजस्य क० अ० ब० । ९. °णासद् भवेत् अ० । °णासन् भवेत क० । १०. किन्तु पर° मु० क० । ११. तदा च क० । १२. ज्ञायते कैश्चिद्रूपं किंचित्कदाचन श्लोकवा० । १३. °लक्षणयोरनेन अ० । १४. धर्मभे मु० । १५. अथोक्तम् मु० क० । १६. एकान्तिको अ० क० मु० । १७. °वांशेपि तेन पदा° मु० । १८. यथास्त्वसं ब० । १९. भावांशयोरपि अ० । भावाश्रयैरपि मु० । २०. पटादिभावां° मु० । २१. °र्णत्वाभ्यु° मु० क० । २२. °र्थान्तरत्वात् क० । २३. व्यावृत्तेर्वस्त्व° ब० क० । २४. सर्वे भावाः मु० । २५. सर्वभावाः स्वरूपे पररूपेण क० । २६. अभाव° अ-टि० ।

यतो भावैकपरमार्था भावाः [1]स्वरूपेण । पररूपेण तु न सन्तो नाप्यसन्तः । तथाभ्युपगमे पूर्वोक्त[2]दोषान्निवृत्तिः । तत् स्थितमनुपलब्धेः सविशेषणाया असद्व्यवहारयोग्यत्वं प्रति लिङ्गता ।

§ २२. ननु अनुपलब्धेः किं विशेषणं येनैवमुच्यते ? । किमत्र प्रष्टव्यम् ? । निषिध्यमानस्य दृश्यत्वम् । तन्न, तदानीम[3]सन्न दृश्यते । कथं तथा व्यपदिश्यते ? । अदृश्यमानोऽपि दर्शनयोग्यश्चेत् तद्योग्यत्व[4]म् । दर्शनाभावात् कथमवसितम् ? । अत्रोक्तं व्याख्यातृभिः — दृश्यत्वं समारोपितं तत्र, न तु वास्तवम् । अतः समारोपितदृश्यत्वाभिप्रायेणानुपलब्धेः पूर्वोक्तं विशेषणम् । एतच्च पूर्वावगतस्य घटस्य शशविषाणस्य [5]चाऽनवगतस्य द्वयोरपि तुल्यं क्वचित्प्रतिषेधे । तत् स्थितं यथोक्त[6]विशेषणाया अनुपलब्धेर्व्यवहारयोग्यतास्वभावः प्रमेयम् । न तु[7] भावव्यतिरिक्तोऽभावः ।

§ २३. अत्राहुः — [8]सर्वस्य [9]ज्ञानद्वयं समुपजायते — 'इदमस्ति' 'इदं नास्तीति' । तयोश्च विभिन्नविषयावभासित्वाद्वैलक्षण्यं [10]सुप्रसिद्धम्, एकस्य भावविषयत्वात् अपरस्याभावविषयत्वात् । तत्रैतत् स्यात् द्वयोर्मध्ये कतरद्भावप्रतिभास्यन्यदभावस्य । न[11]नु स्फुटे प्रतिभा[12]सभेदे कुतस्त्यः संशयः ? ।

§ २४. अत्राहुः — प्रतिभासोत्पादादेव । भावो हि सामर्थ्यलक्षणः शास्त्रे गीयते [13]तद्विलक्षणेन चाभावेन भवितव्यम् । अन्यथा तयोर्न स्यात् स्वरूपाभेदाद्वैलक्षण्यम् । तस्मात् तस्यासमर्थत्वेनैव भवितव्यम् । असामर्थ्या[14]च्चाजनकत्वम् । तस्माच्च कुतः प्रतिभासः ? । सामर्थ्ये [15]वा भावस्यैवाऽभाव इति नामकरणम् । न च तन्निबन्धनमर्थतथात्वम् । तत् भाव एव वस्त्वन्तरासं[16]श्रयतयोपलभ्यमानः पूर्वोक्तं[17] ज्ञानद्वयं जनयति । अत इदमभावज्ञानं भावग्राहिप्रमाणसामर्थ्यादुत्पन्नं न प्रमाणान्तरम् ।

§ २५. अत्रोच्यते — भावसामर्थ्यादस्योत्पादेऽस्तीत्येवमुत्पत्तिः स्यात् न तु नास्तीति, जनकस्य भावैकस्वभावत्वात् । यथानुभवं च विकल्पेनोत्पत्तव्यम् । न त्वन्यथा विकल्पः । तत्रैतद्भवेत् — अन्यापेक्षया जनकस्य प्रतिषेधरूपताप्यस्तीति अतोऽयमदोषः । नैतच्चारु । तस्योभयरूपत्वे पूर्वोक्तदोषानुवृत्तेः । एतच्च भवद्भिरेवोपगतम् — 'स्वरूपेण स[18]न् पररूपेण तु न सन् नासन्निति' [19]वदद्भिः । तद्विधिस्वभावत्वात् अस्तीति विकल्पं जनयेत् न प्रतिषेधविकल्पम्, अतद्रूपत्वात् । अस्ति च प्रतिषेधविकल्पो भवतां मते स्वसंवेदनप्रत्यक्षसिद्धः । स च विषयभेदात् [20]पूर्वस्मात् प्रमाणान्तरम् ।

§ २६. ननु प्रतिषेधविकल्पस्याभावविषयत्वं तस्याजनकत्वेन प्रतिक्षिप्तम् । अत्र केचिदाहुः — भावेऽयं नियमो जनकस्य प्रतिभासः । अभावस्त्वजनकोऽपि स्फुटप्रतिभासोत्पत्तेः प्रतिभासत इति कमुपालभेमहि ? । न च प्रतिभासापलापो युक्तः । अपि च भावेऽप्ययं न

---

१. स्वरूपे पर° मु० । २. दोषानिवृत्तिः अ० ब० । ३. °नीमयं न दृ° मु० । ४. °ग्यत्वदर्श° क० मु० । ५. °स्य वाऽनव° मु० । ६. यथोक्तविशेषणतयाऽनुप° मु० । ७. ननु भा° मु० । ८. सर्वज्ञस्य क० मु० । ९. सर्वस्य समु° क० । १०. ण्यं प्रसि° मु० । ११. न तु स्फुटे अ० ब० मु० । १२. प्रतिभासेत् मु० । १३. तद्विल° मु० । १४. असामर्थ्याच्च कुतः मु० । १५. °र्थ्ये चाभाव° मु० । १६. °तरासंसृष्टतयो° मु० । १७. °क्तज्ञान मु० । १८. स्वरूपेण तु मु० । १९. भवद्भिः अ० ब० । २०. °भेदात् प्रमाणा° मु० ।

नियमो जनकस्यैव भावस्य प्रतिभासः । यः प्रतिभासे प्रतिभाति ग्राह्याकारो वर्तमानावच्छिन्नो न[1] तस्य प्रतिभा[2]ससमानकालत्वेन जनकत्वम् । यस्य च[3] जनक[4]ता तस्यातीतत्वान्न प्रतिभासः । तत्रैतद्भवेत्–जनकस्य न साक्षात् प्रतिभासः । किन्तु स्वाकारजननमेव तस्य ग्राह्यत्वम् । न तु प्रतिभाससमानकालत्वेन तद्भावस्य सामर्थ्यं तथाविधं ग्रा[5]ह्यत्वेन संभवति ।

§२७. अत्र वदन्ति–कथमसौ प्रतिभाससमानकाल आकारोऽनुपकारकस्तत्र प्रतिभाति । न चान्यस्योपकारकत्वेऽन्यस्य प्रतिभासोऽतिप्रसंगात् । एकसामग्र्यधीनत्वेनातिप्रसंगनिवारणं प्रतिक्षिप्तम् । किंच, उपकार्याभावाज्जनकस्य भावस्य ग्राह्यत्वेन परिकल्पितस्योपकारकत्वमनुपपन्नम् । न च ज्ञानप्रतिभास्याकार उपकार्यः, तस्य स्व[6]तत्त्वतोऽसत्त्वेनाभ्युपगमात् । अतः कथं भावस्योपकारकत्वम् ? । मा भूत् ज्ञानाकारस्योपकार्यता ज्ञानं तु परमा[7]र्थसद्विद्यते । तदपेक्षयोपकारकत्वं भविष्यति । एतदप्यसत् । ज्ञानप्रतिभासिन आकारस्यापरमार्थसत्त्वे तद्व्यतिरेके[8] ज्ञानस्याप्यसत्त्वप्रसङ्गः[9] तस्य चाबोधरूपता । कः पुनस्तद्रूपतायां दोषः ? । न कश्चित् तदसत्त्वव्यतिरेकेण । यथाहि ग्रा[10]ह्याकारे वृत्तिविकल्पादिबाधकं प्रमाणं प्रवृत्तमसत्त्वं प्रतिपादयति तथा त[11]द्व्यतिरिक्तस्यापि बोधाकारस्यासत्त्वमावेदयेत् । तद्कार्यकारणभूत एव ग्राह्यत्वेनाभिमतो भावः प्रतिभाति । तद्वदभावोऽपि ।

§२८. ननु एवमजनकस्याभावस्य प्रतिभास्यत्वे सर्वदा अभावप्रतीतिः स्यात् । स्यादयं दोषो यदि तद्ग्राहकप्रमाणोत्प[12]त्तौ निमित्तं सर्वदा स्यात् । किं पुनस्तद् यत् सर्वदा न भवति ? । प्रतिषिध्यमान[13]पदार्थस्मरणम्, भावोपलम्भश्च । अतः प्रमाणोत्प[14]त्तिनिमित्तान्वयव्यतिरेकानुविधानात् कादाचित्कत्वमभावग्राहिणो न त्वभावस्य जनकत्वात्, तस्य सदैव भावात् । तत् प्रमाणान्तरमभावः–एवं केचिदाहुः ।

§२९. अन्ये ब्रुवते–अभावस्य प्रतिभासजनकत्वं किमक्षणिकत्वान्नेष्यते, आहोस्वित् प्रतिभासजनकत्वेन भावाद्वैलक्षण्यं न स्यादित्युच्यते ? । यदि पूर्वः पक्षः तदा[15] एतत् प्रतिसमाधास्यते क्षणभङ्गभङ्गे । यथा भावस्याकिंचित्क[16]रसहकार्यपेक्ष[17]स्य कार्यजनकत्वं तथाऽभावस्यापीति वक्ष्यते । अथ द्वितीयः । सोऽपि न युक्तः । न हि जन्य[18]त्वजनकत्वाद्वैलक्षण्यानुपपत्तिः । एवं [19]वैलक्षण्ये जगति न किंचित्कुतश्चित् विलक्षणं भवेत् । पूर्वोक्तस्य निमित्तद्वयस्य संभवात् ।

§३०. अथ तस्मिन्सत्यपि हेतुभेदात् प्रति[20]भासभेदाच्च भावानां विलक्षणता । तद्वदभावेऽपि स्यात् । अथोच्येत–सर्वसामर्थ्योपाख्याविरहलक्षणमसत्त्वम् । तदेव चाभावोऽतः कथं तस्य

१. °न्नो तस्य क० मु० । २. प्रतिभासमानका° क० मु० । ३. यस्य जन° अ० क० मु० । ४. जनकत्वं ब० । ५. ग्राहकत्वेन मु० । ६. तस्य तत्त्व° क० मु० । ७. परमार्थं स° मु० । ८. °रेकज्ञान क० मु० । ९. °प्रसङ्गात् । तस्य चाबोध° अ० ब० । प्रसङ्गः तस्य बोध° क० मु० । १०. ग्राह्यग्राहकाकारे वृ° क० । ग्राहकाकारि( कारे ) मु० । ११. तद्व्याति° मु० । १२. प्रमाणोपपत्तौ ब० क० मु० । १३. °ध्यमानं पदा° क० मु० । १४. णोपपत्तिनि° क० मु० । १५. तदेतत् क० मु० । १६. °चित्करस्य सह° क० मु० । १७. °पेक्षस्याकार्य° ब० । १८. जन्यत्वाज्जन° क० । १९. एवं तावद्भाववैल° अ० । २०. प्रतिभासते मे° क० मु० ।

जनकत्वम् ? । न सामर्थ्यलक्षणं सत्त्वम्, तस्य क्षणभङ्गभङ्गे निषेत्स्यमानत्वात् । तद् अभावस्य प्रतिभासाजनकत्वात् अप्रमेयत्वमयुक्तम् ।

§ ३१. अथ न पूर्वोक्तेन निमित्तेन तस्याप्रमेयता किन्तु भाव[1]व्यतिरिक्तस्य तस्यासंभवात् एवमुच्यते । एतत् असत्, रूपाद् रसस्य कथं भेदः ? । किमत्र प्रष्टव्यम् ? । भिन्नप्रत्ययविषयत्वात् तस्य तस्माद्भेदे[2]ऽत्राप्यस्तीतिप्रत्ययप्रतिभा[3]सस्य भेदः, तस्मिन्वाऽसति कथं विलक्षणः [4]प्रत्ययः ? ।

§ ३२. तत्रैतत् स्यात्—न प्रतिभास्यभेदान्नास्तीतिप्रत्ययस्य पूर्वस्माद्वैलक्षण्यम् । किन्तु सामग्रीभेदात् । नन्वेकोपलम्भानुभवाद्[5] द्वयोरुत्पादे कथं सामग्रीभेदः ? । नैष दोषः । प्रतिषिध्यमानस्मरणस्य नास्तीतिप्रत्यये पूर्वस्मादाधिक्यात् । ननु[6] तस्यैव कथमुत्पत्तिः ? । न हि अप्रतिबद्धपदार्थदर्शनेऽन्यस्य स्मरणमतिप्रसङ्गात् । एकज्ञानं[7]संसर्गः प्रतिबन्ध इति चेत्; वक्तव्यं तर्हि कोऽयमेकज्ञानसंसर्गः ? । पूर्वं[8] द्वयोः सह प्रतिभास्यतेति चेत्; तर्हि[9] यो यत्र न दृष्टः तस्य तत्राद्दश्य[10]मानस्य प्रतिषेधो न स्यात् । प्रतिषिध्यमानस्मरणनिमित्ताभावाद्योग्यतेति चेत् । साऽपि न युक्ता दर्शनं विना, कार्यानुमेयत्वात् तस्याः ।

§ ३३. [11]अथ ब्रूयात्—न योग्यता पूर्वोक्ताऽस्माभिर्भण्यते किन्तु—'यदि प्रतिषिध्यमानं वस्तु तत्र सन्निहितं भवेत् तदा भूतलमिव [12]तत्र द्रष्टुं शक्यं स्यात्'—इयं योग्यता एकज्ञानसंसर्गलक्षणा । अस्यामपि योग्यतायां नैकस्यैव प्रतिभासो भवेत् । किन्तु यावत् तत्र सन्निहितं द्रष्टुं शक्यं तस्य स्मरणे[13] सति प्रतिषेधप्रतिभासः स्यात् । न चैतदस्ति, कस्यचिदेव प्रतिभासात् । तत्र प्रतिषेधविकल्पोत्पत्तौ प्रतिषिध्यमानस्मरणं पूर्वस्मात् सामग्र्यन्तरम् । तत् नास्तीति विकल्पो न भवेद् एकनिमित्तोत्पन्नयोः वैलक्षण्याभावात् । भवतु वा तदुत्पत्तौ सामग्र्यन्तरम्, तथापि नोपायभेदात् विकल्पयोर्भेदः किन्तु प्रतिभा[14]सभेदात् प्रत्यक्षानुमानयोरिव । तदुक्तम्—

"प्रामाण्यं वस्तु विषयं द्वयोरर्थभिदां जगौ ।
प्रतिभासस्य भिन्नत्वादेकस्मिंस्तदयोगतः ॥"

युक्तं चैतत् । अन्यथा नास्तीति प्रत्ययेऽप्रतिपत्तिरेव स्यात् । [15]यतः प्रतिभास्यं तावदसत्त्वात् न [16]प्रतिभाति, प्रतिभासोऽपि वक्ष्यमाणात् स्वसंवेदननिषेधात् नैव । न च वस्त्वन्तरमस्ति । अतो नास्तीति विकल्पोत्पादानुत्पादयोः प्रतिभासाभावात् तुल्यता प्रसक्ता ।

§ ३४. अथ भेदा[17]नुमानस्य प्रतिभासस्य संभवात् प्रत्यक्षानुमानयोर्विषयभेदाद्भेदोऽस्ति[18], प्रमाणत्वात् । नास्तीति विकल्पस्य पुनर्न प्रतिभासोऽस्ति[19] । नापि प्रमाणत्वम् । अतः तुल्यता तस्य न युक्ता । ननु अनुमानेऽपि नैवं[20] प्रतिभास्यं वस्त्वस्ति, आरोपितस्य तद्विषयत्वेनाभ्युपगमात्

१. भावाव्यति° क० मु० । २. °द्भेदोऽत्रापि° अ० ब० मु० । ३. °प्रतिभासः स्यात् तदसत् तस्मि° मु० । °प्रतिभासस्य क० । ४. °क्षणः तत्रै° अ० । ५. °नुभवाध्यवसाययोरुत्पादे मु० । ६. न तु मु० । ७. एकज्ञाने सं° अ० ब० । ८. °संसर्गः पूर्वं क० । ९. तर्हि तयोः यत्र मु० । १०. °दृश्य प्रति° अ० ब० । ११. यदि ब्रूयात् मु० । तस्याः । ब्रूयात् अ० क० । १२. मिव द्रष्टुं मु० । °मिव तद् क० । १३. स्मरणासति क० । १४. प्रतिभास्यभे° क० । प्रतिभासस्य भे° मु० । १५. ततः मु० । १६. न प्रतिभासो मु० । १७. भेदो नानुमानस्य अ० ब० । १८. भेदेऽस्ति अ० । १९. °प्रतिभास्योऽस्ति क० मु० । २०. नैवाप्रति° अ० ।

तच्च नास्तीति विकल्पेऽपि न दण्डवारितम् । यथा युक्तिबाधितत्वेऽपि तद्विषयस्याभ्युपगमः, तथा नास्तीति विकल्पविषयस्यापि । तत्प्रामाण्यमप्यस्तीति विकल्पवत् नास्तीति विकल्पस्य प्रापकत्वात् न वार्यते ।

§ ३५. ननु न विधिविकल्पस्य तत्र प्रामाण्यं किन्तु दर्शनमेव स्वाकारार्पणात् तद्रूपतामापन्नं वस्तु प्रापयत् प्रमाणम् । प्रतिषेधविकल्पेऽपि दर्शनस्यैवंरूपता किमिति न कथ्यते ? । अथ विधिविकल्पस्य पारंपर्येण यो[1] विषयो नीलादिः स प्राप्यते, प्रतिषेधविकल्पस्य तु यो विषयः तस्य न कथंचित् प्राप्तिरिति तदाकारतामापन्नं दर्शनं न तत्र प्रमाणम् । कथं न प्राप्तिर्यतो नीलं प्राप्यमाणं तत्प्रच्युत्यविनाभूतपीताद्यसंसृष्टं प्राप्यते[2] न शुद्धं तस्याश्च पदार्थव्यवस्थानिबन्धनायाः प्रच्युतेः कथंचित् प्राप्तिरस्तीति किन्न[3] तत्र दर्शनं प्रमाणम् ? । तदनभ्युपगमे च पदार्थव्यवस्था नास्तीति उक्तं तैर्लौक्षणिकविरोधं प्रदर्शयद्भिः । कल्पितायास्तस्याः सत्त्वाभ्युपगमाददोष इति चेत्; एतन्नातिसुभाषितम्—अकाल्पनिकवस्तुव्यवस्थापकत्वं[4] कल्पितत्वं च ।

§ ३६. अथोच्येत—तस्याः प्रापकत्वेऽपि कथंचित् दर्शनं[5] न प्रमाणं तदर्थक्रियाऽकरणात् । ननु केयमर्थक्रिया यामसौ न करोति ? । नीलादिसाध्यामिति चेत् । तन्न[6], नीलादिष्वपि तुल्यम् । तेऽपि[7] न परस्परस्यार्थक्रियां[8] कुर्वन्ति । अथ वस्त्वन्तरसाध्यार्थक्रियाऽकरणेऽपि स्वकार्यकर्तृत्वं तेषामस्तीत्युच्यते । तत् प्रच्युतेरपि न केनचिद्वारितम् । तथाहि—पीताद्यवच्छेदकत्वं तत्प्रच्युतेर्भवद्भिरभ्युपगतम् । तदनुमानवद्दर्शनपृष्ठभाविविधिविकल्पवच्च प्रतिषेधविकल्पस्यापि प्रामाण्यम् । तन्नानुपलब्धेर्लिङ्गादसद्व्यवहारयोग्यतोऽवसीयते[9] । किन्तु अभाव एव । स[10] तु प्रमाणान्तरगम्यः । न च[11] सदुपलम्भकप्रमाणगम्यः पूर्वोक्तेन्यायेन[12] ।

§ ३७. इतश्चैतन्न । यतः कश्चित् कुतश्चिदागतः पृच्छ्यते—'तत्र[13] प्रदेशे चैत्रो स्थितो न वेति' । स प्रश्नात् चैत्रं स्मृत्वा तदभावमवगत्य वक्ति न तत्र स्थितः । न च तत्र तदभावा[14]वगमे तस्य तदानीमिन्द्रियव्यापारः । नापि लिङ्गं किंचिद्विद्यते । न चानुपपद्यमानत्वम्[15], नाप्यागमः, उपमानं वा । न च तदभाव[16]प्रतिपत्तिर्नास्ति, प्रश्नस्योत्तरदानात् । न[17] बाध्यते, संदिग्धा वा । नापीयं स्मृतिः, पूर्वं तदभावानवगमात् । प्रतिषिध्यमानपदार्थस्मरणं तदभावावगमे[18]निमित्तम् । तच्च निमित्ताभावात् पूर्वं तस्य नोत्पन्नम् इदानीं प्रश्ने सति संजातम् ।

§ ३८. अथोच्येत[19]—पूर्वमेव तत्रोपलब्धिलक्षणप्राप्ताशेष[20]वस्तस्वभावग्रहणं मेचकबुद्ध्या । तस्मिन्सति यस्य स्मरणादिसहकारिकारणमस्ति तस्य[21] व्यक्तितिरस्कृतस्य गृहीतस्य स्फुटप्रतिभासविषयता[22] । एतदसाधु । यतोऽस्य ग्रहणं भवद्विकल्पद्वयं नातिवर्तते स्वतन्त्रस्याशेषवस्त्व-

---

१. °र्येण विष° क० मु० । २. प्राप्यन्तु मु० । प्राप्यते तस्या° अ० । ३. कथं न क० मु० । ४. °कत्वं विक° अ० । ५. दर्शकं क० ब० मु० । ६. तच्च अ० ब० । ७. ते च न अ० । ८. परस्यार्थ क० मु० । ९. °व्यतानुमीयते मु० । १०. एव तत्र प्रमा° मु० । ११. न तु सदु° क० मु० । १२. °क्तेन न्यायेन क० मु० । १३. अत्र अ० । १४. तत्र सदभा° क० मु० । १५. मानः ना° मु० । १६. तदप्रति° मु० क० । १७. °दानात् नापीयं मु० । १८. °गमे नि° क० मु० । १९. अथोद्युक्तेः पू° मु० । २०. °प्राप्तावशेष° मु० । २१. तस्य तस्य व्य° मु० क० । २२. विशेष इति ब० । विशेष्यता क० मु० ।

भावस्य ग्रहणम्, अन्योपसर्जनस्य वा ? । प्राच्ये[1] विकल्पे नैकाभावस्मरणं भवेत् सर्वेषां सह गृहीतत्वात् । एतेना[2]न्योपसर्जनत्वेन ग्रहणं व्याख्यातम् । तत् स्मृतिरपि न भवति । न च सदुपलम्भकं तदवगमे किंचित् प्रमाणमस्ति । पारिशेष्याद्[3]भावाख्यात् प्रमाणात् तस्यावगमः । तदुक्तम् —

"स्वरूपमात्रं दृष्टं[4] च पश्चात् कश्चित् स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव[5] प्रतिपद्यते ॥" [ श्लोकवा० अभा० २८ ]

§ ३९. एतदपरे दूषयन्ति । प्रश्नकाल एवाभावावगमे तद्भावाशङ्का न निवर्तेत । तथा च तस्योत्तरम् 'मया पूर्वं न दृष्टस्तत्र तेन तदानीमसौ नास्ति नेदानीं' इतीदृश्येव च संवित्तिः 'तदानीं नासीत् नेदानीम्' इति । तन्न प्रश्नकालेऽभावावगमः । ननु पूर्वमप्यवगमे सर्वस्मरणलक्षणदूषणमभिहितम् । उभयत्र दूषणसद्भावात् संशयोऽस्तु न निश्चयोऽतोऽभावस्य प्रमाणान्तरगम्यत्वे पूर्वोक्त एव न्यायो न त्वनन्तराभिहितः [ १५ ]

§ १. अत्रोच्यते । यत्तावदुक्तम् 'अभावे[6]नेन्द्रियसन्निकर्षाभावात् न प्रत्यक्षगम्योऽभावः[7]' इति तदसत् । यतः[8] सन्निकर्षस्य पूर्वमेव निरस्तत्वत् । प्राप्यकारित्वे चक्षुषः स्पर्शनेन्द्रियस्येव वह्न्यादिना दाहाद्यापद्येत । अथा[9]प्राप्यकारित्वे मेर्वादेः किन्न ग्रहणम् ? । प्राप्यकारित्वेऽपि किन्न भवति ? । अयोग्यत्वात् नेति चेत्; तर्हि योग्यतैव ग्रहणे[10] निबन्धनं न संबन्धः । तेन भाववदभावेऽपि योग्यत्वात् अक्षमध्यक्षमुत्पादयति ।

अभावस्य पृथक्-प्रामाण्य-निषेधः ।

§ २. किञ्च, नेन्द्रियसंबन्धात् प्रत्यक्षं वस्तु किन्तु प्रत्यक्षविषयत्वात् । अन्यथाऽऽकाशादेरपि प्रत्यक्षता स्यात् । तथा चाक्षुषे[11] रसस्यापि प्रतिभासो भवेत् तत्रापि [12]संयोगस्य संयुक्तसमवायद्वारेणैकार्थसमवायस्य वा संयुक्तविशेषणभावस्य[13] वा भावात् ।

§ ३. ननूक्तम् 'योग्यत्वादिन्द्रियस्य हि' इत्यभावांशेन[14](°वांशे) योग्यतैव नास्ति । ननु भावांशे[15]ऽपि कथं योग्यता ? । तद्विषयज्ञानोत्पत्तेरिति चेत् । अभावांशेऽपि समानम् । तथाहि — अस्तीति ज्ञानस्येव नास्तीति ज्ञानस्यापीन्द्रियान्वयव्यतिरेकानुविधानं तुल्यम् । अस्त्येतत् किन्तु अन्यथा[16] सिद्धं तद्भावभावित्वम् । यथा दूराद[17]ग्निदर्शने रूपज्ञानस्यै[18]वेन्द्रियजत्वम्, न[19] तद्गतस्पर्शज्ञानस्य, तस्य रूपदर्शने सति भावाद् । एवमिहापि भूतलग्रहणे सति नास्तीति ज्ञानस्य[20] भावे तद्भावभावित्वं द्रष्टव्यम् । तदुक्तम् ।

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात् ॥" [ श्लोक० अभा० २७ ] [21]इति ।

§ ४. एतद[22]युक्तम् । दूरादग्नौ स्पर्शज्ञानं सहचररूपोपलम्भादानुमानिकम् । इह तु भूतलस्य

---

१. प्राते वि° मु० । २. °त्वात् तेन मु० । ३. परिशेषाद° क० मु० । ४. दृष्ट्वापि पश्चा° श्लोकवा० । ५. तदेव अ० ब० । ६. अभावो नेन्द्रि° क० मु० । ७. °भावः तद° अ० । ८. °सत् सन्नि° अ० मु० । ९. तथा° मु० । १०. ग्रहणनि° क० मु० । ११. तथा वा चक्षुषि मु० । १२. तत्रापि संयु° मु० । १३. °भावस्य भावात् अ० ब० । १४. °वांशेनैव यो° क० । १५. °शे कथं क० मु० । १६. अन्यस्मात् सिद्धं मु० । १७. धूमाद मु० । १८. °स्य चेन्द्रि° क० मु० । १९. °त्वम् तद्ग° मु० । २०. °ति विज्ञा° क० मु० । २१. णात् । एत° अ० ब० । २२. इति तद° क० मु० ।

तत्प्रतिपत्तेश्च लिङ्गत्वनिषेधात् न स न्यायः । यथा च भवतां भूतले उपलभ्यमाने अस्तीति ज्ञानस्य,

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते सापि प्रत्यक्षत्वेन संमता" ॥ [ श्लोकवा० प्रत्य० १२० ]

इत्यभिधानात् प्रत्यक्षता तथा नास्तीति ज्ञानस्यापि ।

§५. किञ्च, भावांशस्य ग्रहणं किं वस्त्वन्तरसंसृष्टस्य किं वा असंसृष्टस्य ? । यदि संसृष्टस्य तदा प्रत्यक्षबाधितत्वादभावः प्रमाणं न स्यात् । अथासंसृष्टस्य तदा कथं नाभावस्य प्रत्यक्षता । अथ वस्तुमात्रमेव प्रतीयते, न वस्त्वन्तराभावः । तत् किं वस्त्वन्तरं तत्र प्रतिभाति ? । नेति चेत्; तत् कथं न तदभावः प्रत्यक्षग्राह्यः ? । अथ प्रत्यक्षेण न तद्भावो नाप्यभावः प्रतीयते । तदसत् । एवं हि अप्रवृत्तिनिवृत्तिकं जगत्स्यात् । तदुक्तम्—"न हि अयमनलं पश्यन्नप्यनलमेव पश्यति किन्तु सलिलमपि । ततः तदर्थी न तिष्ठेन्न प्रतिष्ठेतेति दुस्तरं व्यसनमापन्नम्" इति । तस्माद् इदन्तया सदसदात्मकं वस्तु परिच्छिन्दत् प्रत्यक्षं सव्यवहारमिव असव्यवहारमपि करोति इति न नास्तीति ज्ञानस्य पृथक्प्रामाण्यमिति । तदेवाह—न, नास्तीत्यादि ।

**न, नास्तीति यतो ज्ञानं नाध्यक्षाद्भिन्नगोचरम् ।**

§६. क्वचिदस्तीति ज्ञानमपि लैङ्गिकमित्यभिधास्यते । [ १६[१] ]

§१. ननु अभावप्रमाणनिरासे प्रमेयाभावनिरासाद् अभ्युपेतहानिः स्यादित्याह—अभावोऽपि चेत्यादि ।

**अभावोऽपि च नैवास्ति प्रमेयो वस्तुनः पृथक् ॥ १६ ॥**

§२. एतदुक्तं भवति—नाभावो जैनैर्नाभ्युपगम्यते । किन्तु न पृथगिति । उक्तं च सूत्रे ।

"अण्णोण्णाणुगयाणं 'इमं च' 'तं व' त्ति विभयणमजुत्तं ।
जह खीर-पाणियाणं" [ सन्मति० १.४७ ] इति ।

§३. ननु अशेषाभावानुभवे[१०] युगपत्स्मरणमुत्पद्येत । न किञ्चिदेतत् । यतो नानुभूतं स्मर्यत एव, किन्तु अनुभूतमेव[११] । तेनाशेषाभावानुभवेऽपि यस्य प्रतिषिध्यमानपदार्थस्मरणे प्रश्नादिनिमित्तमस्ति, तस्यैव स्मृतिः, नान्येषामिति विरोधपरिहारं चाभिधास्यतीति । तदेवं न प्रमाणा( मेया )भावः प्रमाणेतः[१२] सिद्ध्यति इति । अतः साधूक्तम् "द्विधा मेयविनिश्चयात्" [ का० २ ] इति । [ १६ ]

§१. यत् सूत्रे द्वैविध्यं "प्रत्यक्षं च परोक्षं च" [ न्याया० १ ] इत्युक्तम्, तदेव व्याख्यातुमाह प्रत्यक्षमिति ।

**प्रत्यक्षं विशदं ज्ञानं त्रिधे(धै)न्द्रियमनिन्द्रियम् ।
योगजं चेति वैशद्यमिदन्त्वेनावभासनम् ॥ १७ ॥**

---

१. °त्वनिषे° क० मु० । २. सन्न्यायः ब० । संन्यासः मु० । सन्यासः क० । ३. भवता क० अ० । ४. °के अनुप° मु० । ५. कथं भाव° क० मु० । ६. कथं तदभा° अ० ब० । कथं न तदाभा° क० मु० । ७. अप्रवृत्तिकं अ० ब० । ८. करोति न क० मु० । ९. जह दुद्धपा° सन्मति० । १०. °नुभावात् अ० । ११. °मेव तन्नाशेषा° ब० । १२. प्रमाणमित्यतः साधू° ब० क० मु० ।

§ २. प्रतिगतम् अक्षं प्रत्यक्षमिति । 'प्राप्तापन्ने'त्यादिना तत्पुरुषे परवल्लिङ्गताप्रतिषेधात् त्रिलिङ्गः प्रत्यक्षशब्दः गमनक्रियेव गोत्वस्य अक्षाश्रितत्वमर्थसाक्षात्कारित्वस्योपलक्षणम् । तेनानक्षजेष्वपि तच्छब्दवाच्यता नायुक्ता । इदानीं तस्य लक्षणमाह– **विशद**मिति ।

प्रत्यक्ष-विचारः ।

§ ३. अथ किमिदं वैशद्यम् ? । न तावन्निर्विकल्पकत्वं, अनभ्युपगमात् । अथ स्पष्टत्वम्, तदा बालापेक्षया वृद्धस्यापि प्रत्यक्षं न स्पष्टम् । तथा, दूरवस्तुनि प्रत्यक्षं च[1] । अथ तच्छ्रुतं; तदसत्, इन्द्रियजत्वात् । अथ त्रिधा श्रुतम्–प्रत्यक्षपूर्वकम्, लैङ्गिकम्, शाब्दं चेति । तन्न, प्रत्यक्षपूर्वकस्य प्रमाणभूतस्य लैङ्गिकत्वात् । न च तदप्रमाणम् । नापि लैङ्गिकम्, व्याप्तिस्मरणादेरननुभवात् । यत् प्रत्यक्षेण परोपदेशसहकारिणा शब्दोल्लेखि ज्ञानं जन्यते तत् प्रत्यक्षपूर्वकं श्रौतम् तच्चाप्रमाणम्, प्रत्यक्षनिश्चितार्थे प्रवर्तमानत्वात् । तस्मात् यदुक्तम्–

"त्रिधा श्रुतमविप्लवम्" [ प्रमाणसं० का० २ ]

इति तदसंगतम् । विप्लवस्योक्तत्वात् । येन च मूढस्य प्रत्यक्षेऽपि वस्तुनि पूर्वसाधर्म्यादर्थक्रियाकारित्वनिश्चयः क्रियते, नित्यानित्यत्वनिश्चयो वा तल्लैङ्गिकम् । न चैवं दूरदेशादौ वस्तुन्यस्पष्टज्ञानमिति । तन्नेदं लक्षणं व्यापीत्याशङ्क्याह–**वैशद्यमिदन्त्वेनावभासनम्** इति । इदमो भावः **इदन्त्वम्**–साक्षात्कारित्वमित्यर्थः । तेनानुमानादेरसाक्षात्कारिणो निरासः ।

§ ४. इदानीं व्यक्तिभेदमाह । **त्रिधे**ति । त्रयो विधाः प्रकारा यस्य तत् त्रिविधम् । त्रैविध्यमेवाह–[2]**ऐन्द्रियमनिन्द्रियं** [3]**योगजं चे**ति इति ।

§ ५. तत्र इन्द्रियस्य इदम् **ऐन्द्रियम्** । तद्विपरीतम**निन्द्रियम्** । योगश्चित्तवृत्तिनिरोधो घातिकर्मक्षयहेतुः । तस्माज्जातं **योगजम्** । **चः** समुच्चये । **इतिः** अवधारणे । इयदेव प्रत्यक्षम् न मानसादि । [ १७ ]

§ १. अथ किमिदमिन्द्रियम्, तत्र विप्रतिपत्तिदर्शनात् । तथा हि–भौतिकानीन्द्रियाणि स्थापयितुं वैशेषिकः पूर्वपक्षमुत्थापयति । नन्वाहंकारिकत्वादि(कत्वमि)न्द्रियाणाम् । तथा हि–प्रकाशकत्वं सत्त्वधर्म इति सात्त्विकादहंकारादिन्द्रियाणामुदयः । किमत्र प्रमाणमिति चेत्; अप्राप्यकारित्वम् । तच्च शाखाचन्द्रमसोस्तुल्यकालग्रहणाद्विज्ञातम् । अन्यथा हि शाखासंबन्धोत्तरकालं चिरेण चन्द्रमसा संबन्धाद्युगपद्ग्रहणं न स्यात् । अस्ति चातोऽप्राप्यकारित्वम् । तच्च भौतिकेषु न संभवति । प्रदीपादिषु[4] अदर्शनात् इत्यभौतिकत्वमन्येषामपि प्रतिपत्तव्यम् चक्षुर्दृष्टान्तबलादेव । तथा, महदणुप्रकाशकत्वात् । भौतिकं हि यावत् परिमाणं तावत्येव क्रियां कुर्वद् दृष्टमिति । तथा हि–अल्पपरिमाणं वास्यादि महान्तं वटवृक्षं प्राप्य छिदां न करोति इति दृष्टम् । किं तर्हि खव्याप्त[5]प्रदेश एवेति । चक्षुरप्यल्पपरिमाणत्वात् न पर्वतादिपरिच्छेदकं स्यात् । तत्तु

इन्द्रियाणां आहंकारिकत्वपक्षः ।

१. च । अथ श्रुतं ब० । च । अथ त्रिधा अ० । २. °वाह इन्द्रियं तद्विपरीतम् मु० । ३. °मनिन्द्रियं तद्विपरीतम् क० । ४. असंभवात् मु० क० । ५. खव्याप्य अ० ।

दृष्टम्। अतो न भौतिकमिति। तथाऽनियतविषयत्वाच्च। यदि चक्षुस्तैजसं स्यात् रूपस्यैव तद्गुणत्वात्[1] ग्राहकं भवेत् न द्र[2]व्यसामान्यादेरिति। एवं शेषेष्व[3]पि नियमेन स्वगुण-ग्राहकत्वप्रसङ्गः। न चैतद् दृष्टम्। अतो न भौतिकत्वम्। इतश्च न भौतिकानीन्द्रियाणि, इन्द्रियत्वात्। यद्यत् इन्द्रियं तत्तत् अभौतिकं दृष्टम् यथा मनः तथा चेन्द्रियाणि अमूनि, तस्मान्न भौतिकानि इति।

इन्द्रियाणां भौतिकत्व-साधनम्।

§ २. यत्तावत् 'अप्राप्यकारित्वात्' इति साधनं तदसिद्धम्। व्यवहितार्थानुपलब्ध्या प्राप्तेरुपलम्भात्। अन्यथा हि व्यवहितस्याग्रहणम्, अन्तिके च ग्रहणं न स्याद् अप्राप्तेरुभयत्राविशेषात्। आवरणानुपपत्तिश्च प्राप्तिप्रतिषेध[4]कत्वात्। तथा च प्राप्तिप्रतिषेधं कुर्वदावरणमग्रहणाय क[5]ल्पते। दृष्टं चावरणसामर्थ्यम् दूरे च[6]ाप्रकाशकत्वम्। अतः प्रदीपस्येव प्राप्तार्थपरिच्छेदकत्वम्। तथा च चक्षुः प्राप्तार्थ-परिच्छेदकं व्यवहिताप्रकाशकत्वात्। यद्यद् व्यवहिताप्रकाशकं तत्तत् प्राप्तार्थपरिच्छे-दकम्। यथा प्रदीपः। तथा च व्यवहिताप्रकाशकं चक्षुः। तस्मात् प्राप्तार्थपरिच्छेदकमिति प्राप्तिसद्भावे प्रमाणोपपत्तेः। शाखाचन्द्रमसोः कालभेदेन संबन्धेऽप्याशुभावादुत्पलपत्रशत[7]-व्यतिभेदाभिमानवत् युगपद्ग्रहणाभिमानः।

§ ३. यच्च 'महदणुप्रकाश[8]कत्वम्' तदप्यन्यथासिद्धत्वात् असाधनम्। तथा हि। चक्षुर्ब-हिर्गतम् बाह्यालोकसंबन्धात् विषयपरिमाणमुत्पद्यते महदाद्यर्थप्रकाशनम्, न[9]ाभौतिक-त्वादिति। यच्चोक्तम्—'तैजसत्वाद् रूपस्यैव प्रकाशकं स्य[10]ात्' इत्येतत् असत्। प्रदीपेऽदर्शनात्। न[11] हि प्रदीपस्तैजसत्वात् रूपस्यैव प्रकाशको दृष्टः किं तर्हि रूपद्रव्यसामान्यादेरिति[12]। तावानेव च विषयश्चक्षुषः। अतस्तैजसत्वं न विरुध्यते इति।

§ ४. रूपादिषु मध्ये नियमेन रूपप्रकाशकत्वम् त[13]त्तैजसत्वे अनुमानमिति वक्ष्यामः। नियमेन गन्धादिषु गन्धस्यैव प्रकाशकत्वम् च[14] पार्थिवत्वात् घ्राणादेरिति। न चै[15]कप्रकृतिकत्वे विषयव्यवस्थोप[16]लब्धिरिति नानाप्रकृतिकत्वम्। तथा हि एकस्मात् कारणात् उपजाताः प्रदीप-भेदाः समानविषया इत्युपलब्धम्। तद्वदिन्द्रियेषु समानविषयत्वं स्यात्। दृष्टा तु घ्राणा-देर्गन्धादिषु व्यवस्थेति नानाप्रकृतिकत्वम्। तथा च नानाजात्युपादानानि इन्द्रियाणि, द्रव्यत्वे सति प्रतिनियतविषयत्वात्। यद्यत् द्रव्यत्वे सति प्रतिनियतविषयम्, तत्तत् नानाजात्यु-पादानं दृष्टम्, यथा व्यजनानिलप्रदीपकस्तूरिक[17]ादि। तथा चैतानि द्रव्यत्वे सति प्रतिनियत-विषयाणि। तस्मान्नानाजात्युपादानानि इति। तथा हि—ज्ञानशब्देष्वेकजात्यु[18]पादानत्वम्, प्रतिनियतविषयत्वं चेति व्यभिचारः। तदर्थं द्रव्यत्वे सतीति विशेषणम्। न चास्य पक्ष-धर्मत्व[19]ादिमतोऽप्रमाणत्वम[20]तिप्रसंगात्।

§ ५. य[21]च्चाभौतिकत्वेऽनुमानमिन्द्रियत्व[22]ादिति। अत्र भूतादभिनिर्वृत्तम् भौतिकम्। तत्प्रति-

---

१. तद्गुणकत्वात् क० मु०। २. द्रष्टव्यसा° अ० ब०। ३. शेषेष्वनियम° मु०। ४. °षेधवत्त्वात् अ० ब०। ५. कल्प्यते ब०। ६. दूरे प्रका° क० मु०। ७. °पत्रव्यति क०। ८. प्रकाशत्वम् अ०। ९. नालौकिक° अ०। १०. °शकं इत्ये° मु०। ११. तर्हि मु०। १२. °रिति न तावानेव विष° ब०। °रिति न च नैव विष° क० मु०। १३. °त्वम् तु तै° क० मु०। १४. °त्वम् पार्थि° अ० ब०। १५. नं चैकप्राकृतिकत्वे अ०। १६. °लब्धेरिति मु०। १७. रिकादेः मु०। १८. °जात्याद्युपा° अ०। १९. °त्वादिकमतो क०। २०. °त्वमिति प्र° मु०। २१. यथाभौति° क० मु०। २२. °यत्वमिति अ० ब०।

षेधेन च कारणान्तरप्रभवत्वम् । विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् इति साध्यविकलो दृष्टान्तः । तथा च मनसि न[1] भौतिकत्वम् नाप्यभौतिकत्वमिति । अथ भूतादुत्पत्तिप्रतिषेधेन नित्यत्वम् । तत्राप्यभ्युपगमव्याघातो मनस्यपि नित्यत्वानभ्युपगमात् । इन्द्रियत्वं च उक्त-विशेषणस्यापरोक्षज्ञानजनकत्वेन न[2] भूतादुत्पत्तिप्रतिषेधेनेत्यन्यथासिद्धम् ।

§६. निर्मूलं चेन्द्रियाणामहंकारप्रभवत्वम् । तत्सद्भावे प्रमाणासंभवात् । तथा हि—प्रधानसद्भावे[3] सत्येषा प्रक्रिया । तस्य चासत्त्वम् वक्ष्यमाणमिति । येषां चा[4]संसारमण्डल-व्यापीनीन्द्रियाणि तेषामशेषविषयग्रहणप्रसङ्गः । अथादृष्टवशात् नियतदेशा वृत्तिर्व्यज्यत इति चेत्; अत्र वृत्तीनां तादात्म्ये न किंचिदुक्तं स्यात् । व्यतिरेके तु तदेवेन्द्रियमिति संज्ञाभेदमात्रमेव ।

§७. अथ नियतविषयावबोधान्यथानुपपत्त्या तदाकारतैवेन्द्रियस्य परिनिश्चीयते । तन्न, अन्यथाप्यु[5]पलम्भात् । तथा हि । नियतार्थसन्निकर्षेऽप्युपलम्भो घटत एव । न च व्यापित्वं परस्यामीष्टतरमिति नेह प्रतन्यते इति[6] । इति विप्रतिपत्तीः प्रतीत्याह—**जीवांशात् कर्मनिर्मुक्तादि**ति ।

**जीवांशात् कर्मनिर्मुक्तादिन्द्रियाण्यधितिष्ठतः ।**
**जातमिन्द्रियजं ज्ञानं विनेन्द्रियमनिन्द्रियम् ॥ १८ ॥**

§८. जीवप्रदेश एव कर्मक्षयोपशमवा[7]न् इन्द्रियम्, नान्यत् । तथाहि—किं चक्षुराद्येव[8] रूपादि जानाति, किं वा प्रकाशयति ? । प्रथमपक्षे एकस्मिन् अपि शरीरे पञ्चात्मानः प्राप्नुवन्ति । अहंकार-भूतानामचेतनत्वात् तत्प्रकृतेरिन्द्रियस्य कथं द्रष्टृत्वमिति ? । अथ प्रकाशयति । किन्न तमसि ? । बिडालादेर्भूयस्तेजः प्रकाशयत्येव । किन्न मनुष्यस्य ? । स्वल्पत्वात् तेजस इति चेत्; बहूनामेकत्र दृष्टिनिपाते[9] किन्न प्रकाशयति ? ।

इन्द्रिय-स्वरूपम् ।

§९. अपि च तमः किं तेजोऽभावः किं वा वस्त्वन्तरमिति । अभावस्य नायनरश्म्या-वारकत्वायोगात् । वस्त्वन्तरमपि रूपमेव रूपस्यावरणम् । अन्यथा वाय्वादेरप्यावारकत्वं स्यात् । ततः तमसा रूपवता चक्षूरश्मीनां संयोगे तमोदर्शनमासज्येत । कृष्णं रूपं दृश्यत इति चेत्; न, तथाविधदर्शनस्य भिन्नाक्षेऽपि भावात् । तन्नेन्द्रियं भौतिकम् । किन्तु आत्मै-वेन्द्रियम् । तदुक्तम्—"लब्ध्युपयोगौ भा[10]वेन्द्रियमिति" [ तत्त्वार्थ० २.१८ ] लब्धिः कर्मक्ष-योपशमः । उपयोग आभिमुख्यम् ।

§१०. यद्येवम् इन्द्रियव्याघाते अन्धकारावरणादौ किन्न जानाति इत्याह—**इन्द्रिया-ण्यधितिष्ठत** इति । एतदुक्तं भवति—अनुपहतचक्षुरादिदेशेष्वे[11]वात्मनः कर्मक्षयोपशमः तेनास्थगितगवाक्षतुल्यानि चक्षुरादीनि उपकरणमात्राणि, आत्मनो ज्ञानोत्पत्तौ कर्मणो वैचित्र्याद् । अन्यथाऽऽत्मनो व्यापित्वात् मुक्तात्ममनःसंयोगजं प्रत्यक्षं किं नोत्पद्यते[12] ।

---

१. मनसि भौ° मु० । २. °कत्वेन भू° क० मु० । ३. प्रमाणसद्भा° क० मु० । ४. येषां वासं° मु० । ५. °थानुप° मु० । ६. °न्यते इति वि° क० मु० । ७. °मत्वात् इन्द्रि° मु० । ८. °रादिरेव अ० ब० । ९. दृष्टिपाते क० मु० । १०. भावेन्द्रियाण्य° मु० । ११. °देशेष्वेवात्मनः क० मु० । १२. नोपपद्यते क० मु० ।

§ ११. यच्च भौतिकत्वसिद्धौ शाखाचन्द्रमसोः स्फुटस्यापि युगपत्प्रतिभासस्य भ्रान्तत्वमाशुकारित्वादुक्तम् तदीश्वरज्ञानस्यापि युगपदनेकार्थग्राहिणो भ्रान्तत्वमापादयति । न च तत्क्रमवत्, अशेषाग्रहणप्रसंगात्, एकत्रैवानन्तपर्याये [1]उपक्षीणत्वात् । यच्च विषयमवाप्य विका[2]शित्वं चक्षुषः तत् साधनधर्ममनुकरोति । तदेवं फल्गुप्रायं परोदितमुपेक्षितमिति । लैङ्गिकत्वे[3]वद् [4]ऐन्द्रियत्वव्यपदेशः । तेन द्रव्येन्द्रियेण **विना** यत् प्रत्यक्षं तद**निन्द्रियम्** ।

§ १. तत्र ग्रन्थकारमतभेदान् दर्शयन्नाह – **स्मृत्यूहादिक**मित्यादि ।

**स्मृत्यूहादिकमित्येके प्रातिभं च तथाऽपरे ।**
**स्वप्नविज्ञानमित्यन्ये स्वसंवेदनमेव नः ॥ १९ ॥**

§ २. **स्मृति**श्च **ऊ**[5]हश्च वितर्कलक्षणः । **आदि**ग्रहणादवाय[6]ः । तद्रूपमनिन्द्रिय**मेके** अनन्तवीर्यादयः । प्रतिभया 'श्वो मे भ्राता आगमिष्यति' इत्येवंरूपया निर्मितम् **प्रातिभम्** च**ापरे** टीकाकृतः । स्वप्नविज्ञानं यत् स्पष्टमुत्पद्यते तदन्ये अनन्तकीर्त्यादयः । स्वसंवेदनमेव **नः** – अस्माकम् इति ।

अनिन्द्रिय-प्रत्यक्षम् ।

§ ३. एवं मन्यते वार्तिककारः – अर्थाविनाभाविन एव ज्ञानस्य प्रामाण्यमुचितं न स्मृतेः, अर्थमन्तरेणपि तस्या भावात् । प्रत्यक्षादेस्त्वव्यभिचारनिमित्ताभिधानात् कस्यचिद्व्यभिचारेऽपि न दोषः । नत्वेवं स्मृतेरव्यभिचारनिमित्तं अस्ति । अमूढस्मृतेस्तु पूर्वप्रत्यक्षफलत्वात् न पृथक्प्रामाण्यम् । ऊहस्तु संशयविशेष एव, कुतः तत्प्रामाण्यं स्यात् ? । अवायस्तु प्रत्यक्षानुमानफलत्वेन न ताभ्यां प्रमाणान्तरमिति । काकतालीयसंवादयोरपि प्रातिभ-स्वप्रविज्ञानयोः प्रमाणत्वे न किंचित् न प्रमाणं स्यात् । तस्मात् स्व[7]स्य ज्ञानात्मनो वेदनमेव प्रमाणमिति । [ १९ ]

§ १. मानसं तु मनोऽभावान्निरस्तम् । अथ मनोऽभावे योग्येऽपि विषये कथं युगपत् ज्ञानानुत्पत्तिः ? । उक्तमेतत् – 'उपयोग आभिमुख्यमिति' तद् यत्रात्मनः तन्न भवति तत्रानुत्पत्तिरिति । आभिमुख्ये तु युगपदपि । अथ [8]भ्रान्ताऽसौ । नैतदस्ति । एवं हि सौगतस्य क्षणिकत्वे सान्तरावभासप्रसङ्गदूषणम् सुदूरं निरस्तं स्यात् । तदुक्तम् ।

मनसः स्वरूपम् ।

"पञ्चभिर्व्यवधानेऽपि भात्यव्यवहिते च या ।
[9]सा क्षणध्वंसिनोऽर्थस्य नैरन्तर्यं न वेत्ति किम् ॥" [ प्रमाणवा० ३.१३६ ]

तस्मादात्मैव मनो नान्यदिति । तदेवाह ।

**मनःसंज्ञस्य जीवस्य ज्ञानावृतिशमक्षयौ ।**
**यतश्चित्रौ ततो ज्ञानयौगपद्यं न दुष्यति ॥ २० ॥** इति ।

§ २. **मन** इति **संज्ञा** [10]अस्य स एव मन इत्यर्थः । तस्य ज्ञानावरणक्षयोपशमौ **यतश्चित्रौ** ततो युगपज्ज्ञानमिति । [ २० ]

१. °र्याये क्षीण° क० मु० । २. विकासि° क० मु० । ३. लैङ्गिकवद क० मु० । ४. °वदिन्द्रियव्य° अ० मु० । ५. स्मृतिश्च वितर्कलक्षणा मु० । स्मृतिश्च वि° क० । ६. °दवायस्वरूपम° ब० । ७. स्वप्रस्य क० मु० । ८. भ्रान्तोऽसौ ब० क० । ९. सा मतिर्नामपर्यन्तक्षणिकज्ञानमिश्रणात्–प्रमाणवा० । १०. यस्य मु० ।

§ १. योगजं व्याख्यातुमाह—**जिनस्येत्यादि** ।

**जिनस्यांशेषु सर्वेषु कर्मणः प्रक्षयेऽक्रमम् ।**
**ज्ञानदर्शनमन्येषां न तथेत्यागमावधः ॥ २१ ॥**

§ २. रागादिजयात् **जिनः** । तस्यांसंख्येयात्मप्रदेशेषु ज्ञानावरणीयस्य प्रकर्षेण अवधि-

योगज-प्रत्यक्षम् । मनःपर्यायप्रत्यक्षापेक्षया क्षये । निमित्तसप्तमीयम् । तस्मान्निमित्तात् य उपयोगः सर्वत्राभिमुख्यलक्षणः आत्मस्वभावो दिनकरस्येव प्रकाशकस्वभावता न पुनः पश्यामीत्यस-दादेरिव मनःसंकल्पो मनोऽभावात् । तस्मादुपयोगात् **अक्रमं** युगपत् । **ज्ञानदर्शनमि**त्येकव-द्भावः एकत्वख्यापनाय । एकमेव सामान्यविशेषेषु योगिज्ञानम्, नान्येषामिति समनस्कत्वात् । अतो नागमस्य "जुगवं दो नत्थि उवओगा" [आव० नि० ९७९] एवंरूपस्य **वधः**—त्यागः सिद्धसेनार्कस्येत्यर्थः । तस्याऽजिनविषयत्वात् इति । केवलिग्रहणं सिद्धान्ते अतिशयख्याप-नार्थम् । केवलिनोऽपि युगपदुपयोगद्वयं नास्ति, यदि मनः स्यात् इत्यर्थः । [ २१ ]

§ १. एवं संख्या-लक्षणविप्रतिपत्तिं निराकृत्य सामान्येन विषयविप्रतिपत्तिं निराकर्तुमाह—**तत्रेत्यादि** ।

**तत्रेन्द्रियजमध्यक्षमेकांशव्यवसायकम् ।**
**वेदनं च परोक्षं च योगजं तु तदन्यथा ॥ २२ ॥**

§ २. तेषु प्रमाणेषु **इन्द्रियजम्** एकांशेन—असाकल्येन न त्वेकेनैव । तथा स्वसंवेदन-मपि । एतदुक्तं भवति—अनन्तधर्माध्यासितं वस्तु न योगिप्रत्यक्षवद् इन्द्रियजप्रत्यक्षं निश्चाययति । अत एव तद् व्यवहारप्रत्यक्षम् । योगजं तु साकल्येन निश्चाययति । तेन निश्चयप्रत्यक्षमिति । [ २२ ]

§ १. इदानीं विशेषेण विषयविप्रतिपत्तिं निराकर्तुमाह—**द्रव्यपर्यायेत्यादि** ।

**द्रव्यपर्यायसामान्यविशेषास्तस्य गोचराः ।**
**अविस्पष्टास्तथैव स्युरनध्यक्षस्य गोचराः ॥ २३ ॥**

§ २. तल्लक्षणस्य वक्ष्यमाणत्वात् **तस्य**—प्रत्यक्षस्य विषया इति ।

§ ३. संक्षेपार्थमिहैव परोक्षस्य विषयविप्रतिपत्तिं निराकुर्वन्नाह—**अविस्पष्टा** इति । अनिदन्तयाऽवभासमाना द्रव्यपर्यायसामान्यविशेषाः परोक्षस्य विषया इति । [ २३ ]

§ १. ननु बाह्यार्थाऽभावात् कथं द्रव्यादिना विषयवत् प्रत्यक्षादि ? । अत्रोच्यते । कथ-

बाह्यार्थ-सिद्धिः । मर्थाभावः ? । तत्साधकप्रमाणाभावादिति चेत्; विशदतरदर्शनमेव तत्साधकं प्रमाणम् । स्वप्नदर्शनवदपारमार्थिकमिति चेत्; ननु किमिदमपारमार्थिकत्वम् ? । अर्थशून्य-त्वमिति चेत्; इतरेतराश्रयत्वम् । तथाहि—अर्थशून्यत्वेऽपारमार्थिकत्वम्, अपारमार्थिक-त्वेऽर्थशून्यत्वमिति । येन चार्थो न दृष्टः स कथं ब्रूयाद् अर्थो नास्तीति । परप्रसिद्ध्या इति चेत्; न, परप्रसिद्धेरप्रमाणत्वात् । प्रमाणत्वे च कथं तन्निषेध इति ।

१. तस्याशेषेष्वात्म-ब० । २. °सप्तमी तस्मा° क० मु० । ३. नारामस्य मु० । ४. केवलग्र° क० मु० । ५. °लिनो युग° अ० ब० । ६. निश्चापयति मु० । ७. लक्षण° ब० । ८. -विषय इति क० मु० । ९. °त्वे वा कथं-क० मु० ।

§२. अपि च अनुभूयमानस्यापि स्वप्नदृष्टान्तेन यद्यर्थस्याभावो ज्ञानस्यापि अभावः स्यात् । स्वप्नानुभूतस्य[1] चार्थस्यासत्यत्वं किम् अप्रतिभासमानत्वात्, किं वा अर्थक्रियावैकल्यादिति । न तावदाद्यः पक्षः । तदानीं तस्यानुभूयमानत्वात् । उपलब्धेः[2] सत्त्वेति[3] चाभ्युपगमः । अथार्थक्रियावैकल्यात् । तर्हि अर्थक्रियाकारी जाग्रद्दशायामर्थः सत्यः स्यात् ।

§३. विसंवादादिति चेत् । कोऽयं विसंवादः ? । ज्ञानान्तरेणाग्रहणमिति चेत्; तर्हि जाग्रद्दशायां तदस्तीति सत्यता स्यात् । बाधितत्वमिति चेत् । किमिदं बाधितत्वम् ? । 'नेदम्' इति प्रत्ययोत्पत्तिरिति चेत्; जाग्रत्प्रत्ययेषु तदभावात् सत्यताऽस्तु । न हि सत्यस्तम्भप्रत्ययेषु कदाचिद्बाधकोत्पत्तिरस्ति ।

§४. अथ स्वप्नप्रत्ययेष्वप्यर्थक्रियाकारित्वं संवादो[4]ऽबाधितत्वमस्ति । न च तस्य[5] सत्यतोपगता अर्थवादिना, तेन न तत् सत्यत्वे निबन्धनमिति । नैतदस्ति । सर्वोऽपि भ्रान्तिर्[6]भ्रान्तिनिबन्धना । यथा मरीचिकासु जलभ्रान्तिः । तथा च स्वप्नप्रत्ययेषु[7] सत्यार्थक्रियानुभवपूर्वकं स्मरणमात्रकमेवं[8] । न तु तत्र किञ्चिदर्थक्रियादि, अन्यथा जाग्रदननुभूतस्य किं न कस्यचिदर्थस्य तत्रोपलम्भो भवति ।

§५. अपि च अर्थनिषेधः किं प्रमाणेन क्रियते, किं वा अप्रमाणेन ? । अप्रमाणेन कथं तन्निषेधः ? । प्रमाणमपि तन्निषेधकं किं वा विनाशकत्वेन, किं वा विपरीतार्थोपस्थापकत्वेन, किं वाऽग्राहकत्वेनेति । प्रथमपक्षे सिद्धोऽर्थः । न हि असिद्धस्य विनाशः संभवति । द्वितीयेऽपि पक्षे अर्थोऽर्थस्य बाधक इति कथं नार्थसिद्धिः । अग्राहकं तु संदेहकारि भवतु कथं तन्निषेधकम् ? । दृश्यस्य कथं नेति चेत्; ननु पूर्वदृष्टस्यैकज्ञानसंसर्गिण्युपलभ्यमाने आरोपाद् दृश्यत्वम् । न चायमत्यन्तादृष्टस्य प्रकारः संभवति । ज्ञानात्मन्युपलभ्यमाने अदृश्यस्यापि[9] तादात्म्येन निषेध इति चेत्; भवतु ज्ञानात्मनो, न भिन्नस्य । अथ भिन्नस्यानुपलम्भात् निषेधः । तत् किम् अयं नीलाद्याकारोऽनुभूयते न वेति ? । अथ अस्त्ययमाकारः किन्तु ज्ञानात्मैवं[10], जडस्य प्रकाशाऽयोगात् । तदेवाह—न जडस्येत्यादि ।

**न जडस्यावभासोऽस्ति भेदाभेदविकल्पनात् ।**
**न भिन्नविषयं ज्ञानं शून्यं वा यदि वा ततः ॥ २४ ॥**

§६. प्रकाशस्य भेदे जडस्य किमायातम् ? । अभेदे जडमेव न स्यात् । तेन न भिन्नविषयं ज्ञानम्, किन्तु आत्मविषयमेव । न हि अभिन्नप्रकाशतां दधानाः स्तम्भादयो जडा भवितुं युक्ताः ।

§७. अथ कोऽयं प्रकाशः ? । किं ज्ञानम्, अथ ज्ञानविषयता ? । प्रथमपक्षे स्यादिदम् । द्वितीये तु कथमर्थस्य ज्ञानता ? न हि प्रदीपेन प्रकाश्यमानाः स्तम्भादयः प्रदीपा भवन्ति । अथ तेऽपि प्रकाशस्वभावास्तदानीमेवोत्पद्यन्ते अन्यथा अन्धकारेऽपि प्रकाशेरन्[11] । अस्ति तावदन्धकारेऽपि स्तम्भादिः । प्रकाशपर्यायता तु प्रदीपादुत्पद्यते । तथा अर्थस्य प्रकाशपर्यायता ज्ञानाद्भवतु कथमर्थाभावः ? ।

---

१. स्वप्नानुभवस्य ब० । २. लब्धेः अ० । ३. सत्येति क० मु० । ४. संवादाबाधि° क० मु० । ५. न च॰सत्य° मु० । ६. °पि भ्रान्तिनिब° मु० । ७. प्रत्यये सत्यर्थं° मु० । स्वप्नप्रत्ययेषु सत्यर्थं क० । ८. °मेव च न तु अ० । ९. अदृष्टस्या° क० मु० । १०. ज्ञानात्मनैव मु० । ११. प्रकाश्येरन् मु० ।

§८. अथ पूर्वमर्थास्तित्वे किं प्रमाणम् ? । निषेधे किं प्रमाणम् ? । तर्हि अस्तु संशयः । नैतदस्ति । यतः किमेकमेव ज्ञानं क्षणस्थायित्वेन पूर्वापरयोः कालयोरर्थसत्तां न प्रतिपद्यते ?, किं वा अनेकानि परस्परकर्मतां न प्रतिपद्यन्ते, सर्वेषां वर्तमाननिष्ठत्वात्, तेन न[1] विदन्ति ? । प्रथमपक्षे क्षणादूर्ध्वं न किञ्चिदनुभूयेत[2] । तच्चा[3]सन्मरणपर्यन्तमनुभवस्या[4]बाधितस्योत्पत्तेः । द्वितीयेऽपि ज्ञानानां परस्परानुगमेऽपि आत्मना देशकालाकारा[5]विपर्यस्तस्यार्थस्यानुभूयमानत्वात् । एतेन सहोपलम्भनियमो निरस्तः । [6]सोदरे इव सहशब्दस्यैकत्ववाचित्वात् विज्ञानार्थयोश्च भेदस्य प्रतिपादितत्वात् इति ।

§९. अथ सर्वे प्रत्ययाः निरालम्बनाः, प्रत्ययत्वात्, स्वप्नप्रत्ययवत् इत्यर्थाभावः । तर्हि ज्ञानात्मवेदनमपि प्रत्ययः । सोऽपि निरालम्बनः स्यात् । इष्यते एवेति चेत्; तदेवाह – **शून्यं वा यदि वा ततः** प्रतिभासमानत्वादिति । [ २४ ]

§१. तदसत् । यतो ज्ञानशून्यवादिनो[7]ऽनुमानं किं गृहीतव्याप्तिकमुदेति, किं वाऽगृहीतव्याप्तिकम् ? । अगृहीतव्याप्तिकं कथम् अनुमानम् ? । व्याप्तिग्रहणं च न तेनैवेतरेतराश्रयत्वप्रसङ्गात् । ज्ञानान्तरेण चेत् । कथम् अद्वैतं शून्यं वा ? । तन्न किञ्चित् साधनम् अर्थनिरासे ज्ञानशून्यवादिनः । तदेवाह । **ज्ञानशून्यवत** इत्यादि ।

**ज्ञानशून्यवतो नास्ति निरासेऽर्थस्य साधनम् ।**
**संवित्सिद्धप्रतिक्षेपे कथं स्यात् तद्व्यवस्थितिः ॥ २५ ॥**

§२. अनुभवसिद्धस्य चार्थक्रियाकारिणः सकलजन्तुसाधारणस्यार्थस्य निषेधे ज्ञानशून्ययोरपि कथं स्याद् व्यवस्थितिरिति । तदेवाह । **संवित्सिद्धे**[8]त्यादि ।

§३. अथायमर्थः किम् अवयविरूपः किं वा परमाणुस्वरूप इति । तत्रावयविनो भवद्भिरेव निरस्तत्वात्, परमाणूनां अप्रतिभासनात् न बाह्योऽयमाकारः । किन्तु ज्ञानाकार एव तथा प्रतिभातीति । ननु ज्ञानाकारेऽप्येष प्रसंगो दुर्निवारः । तथाहि – तद्देशत्वातद्देशत्वं-नीलत्वादिको[9] विरोधः चित्राद्वैतेऽपि समानः । न च ज्ञानं परमाणुमात्रं चकास्ति । अथ यथा बाह्यस्यैकावयवावरणेऽपि अवयवान्तरप्रतिभासलक्षणो विरोधः नैवं ज्ञानाकारस्य । मा भूदयं नीलानीलादिकः केन निवार्यः ? । यथा चायमर्थः तथा सविकल्पकसिद्धौ प्रतिपादयिष्यति इति । अत्र बहुवक्तव्यम्, तच्च नोच्यते ग्रन्थविस्तरभयादिति । [ २५ ]

§१. तदेवं बाह्यमर्थं व्यवस्थाप्य इदानीं द्रव्यादीनां लक्षणमाह – **पर्ययस्न्तीत्या**[10]दि ।

**पर्ययस्यन्ति पर्याया द्रव्यं द्रवति सर्वदा ।**

§२. पर्ययस्यन्ति क्षणिकत्वाद् व्यावर्तन्त इति **पर्याया** इति । उपलक्षणं चैतत् सहभाविनां गुणानां रूपादीनामिति । द्रवति गच्छति तांस्तान् पर्यायान् परिणामनित्यत्वादिति **द्रव्य**मिति । [ २६[1] ]

§१. परपरिकल्पितं सामान्यं पूर्वमेव निरस्तम् । इदानीं स्वाभिमतं सामान्यं व्यवस्थापयन्नाह – **सदृशः परिणाम** इत्यादि ।

---

१. तेन विद° क० मु० । २. °भूयते मु० । ३. तथासन्म क० मु० । ४. °भवस्य बाधि° मु० । ५. °लाकारविपर्ययस्या° मु० । ६. सादरे क० मु० । ७. °वादिनोरनु° अ० ब० । ८. °त्सिद्धस्येत्यादि मु० । ९. °शत्वानीलानीलत्वा° क० । १०. पर्ययस° अ० मु० क० ।

**सदृशः परिणामो यः तत् सामान्यं द्विधा स्थितम् ॥ २६ ॥**

§२. इह भावानां सदृशपरिणतिः सामान्यम् । समाना एव सामान्यमिति न्यायात् ।

सामान्यस्य स्वरूपम् । अन्यथा स्वरूपसामान्यमन्तरेण अन्यसामान्ययोगेऽपि समानरूपता आकाशस्य इव नोपपद्यते । यदि चासमानानामपि सामान्ययोगात् समानरूपता भवति किं न महिषाश्वयोः, पराभ्युपगतस्य सामान्यस्य तत्रापि भावात् । विजातीयत्वान्नेति चेत्; इतरेतराश्रयत्वम् । तथाहि विजातीयत्वे सामान्यायोगः, सामान्यायोगे च विजातीयत्वमिति ।

§३. अपि च, सामान्येन[1] समानानां यदि समानरूपता जन्यते—

"तदा स्वकारणादेव सा तेषामलमन्यतः ।
तत्पश्चादपि[2] कुर्वत्या शिशवो लघवः परम् ॥"

तस्माद्वस्तुस्वरूपमेव समानपरिणामं सामान्यं नान्यत् । नाप्यवस्तु तस्य निषेत्स्यमानत्वाद् । इति । तत् च ऊर्ध्वतारूपं तिर्यग्रूपं च । तदेवाह—द्विधेति । [ २६ ]

§१. एवं सामान्यस्य[3] लक्षणमभिधाय इदानीं विशेषस्वरूपमाह—**विपरीत** इति ।

**विपरीतो विशेषश्च**

§२. साधारणाद्विपरीतः सकलसजातीय[4]विजातीयेभ्यो व्यावृत्तोऽसाधारणो[5] वस्तुस्वभावो **विशेष** इति । [२७¹]

§१. इदानीं विषयद्वारेणैव सविकल्पकसिद्धिमाह—**तान् युगपदि**ति ।

**तान्युगपद् व्यवस्यति ।**
**तेन तत् कल्पनाज्ञानं न तु शब्दार्थयोजनात् ॥ २७ ॥**

§२. **युगपदे**ककालं द्रव्यादीन् **व्यवस्यति** निश्चाययति[6] यतः **तेन तत्** प्रत्यक्षं **कल्पनाज्ञानं** सविकल्पकमित्यर्थः ।

§३. ननु अभिलापसंसर्ग[7]योग्यप्रतिभासा प्रतीतिः कल्पना । तथाहि—कल्पना योजना ।

सविकल्पकप्रत्यक्षनिषेधः । सा च न वस्तुनो रूपं निरंशत्वाद्वस्तुनः । किन्तु शब्दनिर्मितैव[8] । अत एव जात्यादियोजनाऽपि शब्दयोजनानिराकरणादेव निराक्रियते । ततो न तावद् द्रव्यादिकं किञ्चिदस्ति । भवतु वा । तथापि घटपटवदवभासमानं न स्वग्राहिणि कल्पनात्वमारोपयति । पारतन्त्र्येण प्रतिभासमानं कथं नेति चेत्; किमिदं पारतन्त्र्यम् ? । विशेषणविशेष्यभाव इति चेत्; नैतदस्ति । नहि जात्या नीलादिवद् विशेषणादि किंचिदस्ति, विशेष्यस्यापि विशेषणत्वेन दर्शनात् ।

§४. किञ्च, विशेषणविशेष्ययोः किम् एकज्ञानावभासित्वम्, उतानेकज्ञानावभासित्वमिति । तत्रैकज्ञानावभासित्वे न ज्ञायते किञ्चिद्विशेषणं किञ्चिद्विशेष्यमिति । न हि अनयोरुपरि नामास्ति । प्रधानोपसर्जनत्वमिति चेत्; किमिदं प्राधान्यादि ? । उपकार्योपकारकत्वमिति चेत्; न जन्यजनकभावादन्य उपकार्यादिभावः । न च कार्यकारणभावः समानकाल-

---

१. °न्येनासमा° क० मु० । २. तं पश्चा° क० । ३. °न्यलक्ष° मु० । ४. सकलजा° अ० ब० । ५. °धारणवस्तु क० मु० । ६. निश्चीयति क० । निश्चीयते मु० । ७. संसर्गायो° क० मु० । ८. °निर्मिता अत° मु० ।

योरिति। आधाराधेयभाव इति चेत्; न, तस्य पूर्वमेव निषेधात्। न हि उपर्यधोभावेन स्थितपदार्थद्वयव्यतिरिक्तः कश्चिदाधाराधेयभावः। न च तथा प्रतिभासे किञ्चित्पारतन्त्र्यमिति। भिन्नज्ञानावभासित्वे का नाम कल्पना?। अथ भिन्नदर्शनेन विशेषणविशेष्येऽनुभूय पश्चात्स्मरणं तयोस्तद्भावं प्रत्येति। तदेतद् इष्यत एव। शब्दोल्लेखिज्ञानं वस्तु योजयति। न तु तथा वस्तुरूपमिति।

§५. अथ शब्दयोजितं वस्तु भविष्यतीति। तन्न। न हि अर्थे शब्दाः सन्ति, तदात्मानो वेत्याशङ्क्याह—**न तु शब्दार्थयोजनादि**ति।

§६. शब्दश्च अर्थश्च तयोर्योजना न संभवति। [२७]

§१. तत्र हि अनवस्थां प्रतिपादयति[1]। तथाहि—नास्मृतेन वाचकशब्देन अर्थो योज्यते। शब्दस्यापि स्मरणं तद्वाचकशब्दस्मृतेः। तस्यापि स्ववाचकशब्दस्मृतेरित्यनवस्था। नच कल्पना ज्ञानाकार एवेति वाच्यम्, आकारवादप्रतिषेधात्। तस्माद्वस्त्वेव स्थूलं सावयवम् अनुभूयमानम्, केवलानामणूनामननुभवात् प्रत्यक्षं कल्पनायुक्तम् अवस्थापयति। किमत्रान्येन प्रमाणेनेति?। एतदेवाह—**निरंशे**त्यादि।

**निरंशपरमाणूनामभासे स्थौल्यवेदने।**
**प्रत्यक्षं कल्पनायुक्तं प्रत्यक्षेणैव सिध्यति॥ २८॥** [२८]

§१. ननु किमिदं स्थौल्यम्?। किं परमाण्वात्मकम्, किं वा परमाणुजन्यमिति?। न तावत् परमाण्वात्मकम्। तद्धि पूर्वापरादिदिग्भेद[2]मुपलभ्यते। न चैकस्य परमाणोरसावस्ति। बहूनां भविष्यतीति चेत्; नैतदस्ति। नहि निरंशपरमाणोः कश्चित् परमाणुः पूर्वः कश्चित् पश्चिमः उत्तरो दक्षिणो वा संभवति। तथाहि—यस्यावधिरूपस्यांशस्य प्रत्यासन्नः एकः परमाणुः पूर्वो दृष्टः तस्यैवावधिरूपस्य अपरोऽपि प्रत्यासन्नः। ततः तदवधिरूपया प्रत्यासत्त्या यद्येकः पूर्वोऽपरोऽपि पूर्वः स्यात्। एवं शेषेष्वपि वाच्यम्। तन्न परमाण्वात्मकं स्थौल्यमिति।

§२. नापि परमाणुजन्यम्। यतः परमाणुभिः किं संयुक्तैर्जन्यते[3] किंवा असंयुक्तैरिति?। तत्र यदि संयुक्तैः, तदा "पिण्डः स्यादणुमात्रकः" [विज्ञ० विं० १२] तथाहि—परमाण्वन्तरेण संयोगः किम् एकदेशेन, किंवा सर्वात्मनेति?। तत्र न तावत् प्रथमः पक्षः, [4]निर्देशत्वात् परमाणूनाम्। द्वितीयपक्षे तु सर्वपरमाणूनामेकस्मिन् परमाणौ प्रवेशः स्यादिति।

§३. अथासंयुक्ता योग्यदेशव्यवस्थिताः स्थौल्यं जनयन्ति। प्रतिभासं[5] किं न जनयन्ति?। तत्र[6] बाधकस्य[7] प्रतिपादनात् वरं प्रतिभासधर्मः। अस्ति हि कश्चित् वस्तुधर्मो[8] नीलत्वादिलक्षणः। कश्चित् प्रतिभासधर्मः यो बहुषु प्रतिभासमानेषु प्रतिभाति, यथा केशकलाप इति। तस्मान्न स्थौल्यम् वस्तु यत् सावयवं प्रतीयेतेति। एतदेवाह—**नासंयुक्तैरि**त्यादि।

---

१. °यंतीति क०। २. °परादिग्भे मु०। ३. किं संयुक्तैरिति क०। किं संयुक्तैरुत संयुक्तैरिति मु०। ४. अनिर्दे° क० मु०। ५. °भासं जन° क० मु०। ६. तत्र साध° मु० क०। ७. °कस्याप्रति° क०। ८. कश्चित् धर्मो मु० क०।

**नासंयुक्तैर्न संयुक्तैर्निरंशैः क्रियते महत्।**
**अयोगे प्रतिभासोऽपि संयोगेऽप्यणुमात्रकम्॥ २९॥ [२९]**

§१. अथ कोऽयं प्रतिभासधर्मः?। किं वस्तु, किं वा अवस्तु?। यदि वस्तु तदा अवयविदूषणम्। अथावस्तु तदा कथमभ्रान्तं प्रत्यक्षं प्रचयावभासि?। नैतदस्ति। यतो न किंचित् स्थौल्यं परमाणुभ्योऽन्यत्। किन्तु विततदेशाः परमाणवः तथा प्रतिभासन्त इति। कथं नान्तरावभास इति चेत्; किमिदम् अन्तरम्? किम् आकाशम्, किं वा विजातीयाणवः, किं वा रूपभेदः, देशभेदो वेति? तत्राकाशविजातीयपरमाणुप्रतिभासाभावो न दोषाय। नहि रसपरमाण्वप्रतिभासः चाक्षुषे[1] अतीन्द्रियाकाशाप्रतिभासो वा दोषमावहति। भिन्नरूपता तु प्रतिभासत एव। अन्यथा परमाणुमात्रप्रतिभासः स्यात्। देशोऽपि न स्वरूपादन्यः। सोऽपि स्वरूपेणैव व्याख्यातः। अन्यथा भिन्नस्वरूपपरमाण्वप्रतिभासे न किंचित् प्रतिभासेत, अन्धमूकं जगत्स्यादित्येतदेवाह—**भिन्नदेशस्वरूपाणाम्** इत्यादि।

**भिन्नदेशस्वरूपाणामणूनामग्रहे सति।**
**तत्स्थौल्यं यदि कल्पेत नावभासेत किंचन॥ ३०॥ [३०]**

§१. इह [2]हि किं स्थौल्यमात्रं प्रतिभाति, किं वा स्थौल्यविशेष इति। तत्र यदि स्थौल्यमात्रम्, तदा नीलार्थी पीतेऽपि [3]प्रवर्तेत। यद्वा न कुत्रचिदपि [4]विशेषानवधारणात्। अथ विशेषः। स नीलपरमाणुप्रतिभासे सति 'नीलस्येदं न पीतस्येति' प्रतिभासेते[5]। तेषां च[6] भिन्नस्वरूपाणां प्रतिभासा[7]नभ्युपगमे 'तेषां स्थौल्यम्' इति न प्रतिभासेते[8]। न चैवम्[9]। अतः परमाणव एव विततदेशाः तथाऽवभान्ति इति नान्यत् किंचिदिति यत् प्रत्यक्षे कल्पनात्वमादधीतेत्याशङ्क्याह—**नैतदस्ति** इति।

**नैतदस्ति यतो नास्ति स्थौल्यमेकान्ततस्ततः।**
**भिन्नमस्ति समानं तु रूपमंशेन केनचित्॥ ३१॥**

§२. यत् प्रत्यपादि परमाणवः प्रतिभान्तीति **एतन्नास्ति**। न हि शपथशतैरपि 'निरंशाः परमाणवः प्रत्यक्षे [10]प्रतिभान्ति' इति कश्चित् प्रत्येति। तदभावाद् अनुमानमपि 'यत् स्थूलं तत् सूक्ष्मपूर्वकम्' इति न तत्[11]सत्तां साधयति। नापि स्थौल्यं परमाणुभ्यो भिन्नम्। न हि परमाणवो भिन्नाः स्थौल्यं भिन्नं किञ्चिदाभाति। एतदेवाह—**यत** इत्यादि। किं तर्हि अस्ति? [12]इत्याह—**अस्ति** इत्यादि। **समानम्** इति एकपरिणामपरिणतम्। **रूपमिति**—द्रव्यमिति। न तु तस्यामवस्थायां केचिदणवः सन्ति।

§३. नन्वेवं द्रव्यमेव स्यात् इत्याशङ्क्याह—**केनचिद्** इति। एतदुक्तं भवति—[13]**केनचिदेव अंशेन** एकः परिणामः न सर्वात्मनेति। ततः पर्यायात्मकं द्रव्यमाभाति न पुनः परमाणुसमूह इति। तत् कथं न प्रत्यक्षं सविकल्पमिति। [३१]

---

१. चक्षुषेण मु० क०। २. इह कि मु०। ३. °पि वर्तेत अ० ब०। ४. °दपि शेषा° मु० क०। ५. प्रतिभासेन् क० मु०। ६. चाभिन्न° मु०। ७. °भासनाभ्यु° मु०। ८ °ल्यमपि न क० मु०। ९. प्रतिभासते क०। १०. °क्षे सति भान्ति मु०। ११. न तत्संसा° क० मु०। १२. किं तर्हि, अस्ति इत्यादि अ०। १३. भवति तत् कथं मु०।

§ १. पुनरपि विशेषमभिधातुं परमाशङ्कते—अथास्तु इत्यादि ।

**अथास्तु युगपद्भासो द्रव्य-पर्याययोः स्फुटम् ।**
**तथापि कल्पना नैषा शब्दोल्लेखविवर्जिता ॥ ३२ ॥**

§ २. उक्तमेतत् घटपटवदेकज्ञानावभासित्वेऽपि शब्दोल्लेखरहिता नेयं कल्पना इति । [३२]

§ १. उक्तमेतत् न पुनर्युक्तमित्याह—चकास्ति इत्यादि ।

**चकास्ति योजितं यत्र सोपाधिकमनेकधा ।**
**वस्तु तत् कल्पनाज्ञानं निरंशाप्रतिभासने ॥ ३३ ॥**

§ २. यत्र ज्ञाने **योजितं वस्तु** प्रतिभाति । कथं योजितमित्याह । **सोपाधिक**मिति । होपाधिना वर्तते सोपाधिकम् । ननु विशेषणविशेष्यभावस्य निराकरणात् कथमेतदित्याह—**नेकधे**ति चतुरश्र(स्र)त्वादिना । नहि अनुभवसिद्धं युक्तिशतेनापि निराक्रियते तज्ज्ञानं विकल्पकम् । विपर्यये बाधकमाह—**निरंशाप्रतिभासन** इति । निरंशस्य परमाणोरप्रतिभासने तीत्यर्थः । तस्मात् प्रथमाक्षसन्निपात एव दीर्घह्रस्ववर्तुलादि वस्तु प्रत्यक्षे प्रतिभातीति । न तत् सविकल्पकमिति स्थितम् । [ ३३ ]

§ १. एवं तिर्यक्सामान्यमवस्थाप्येदानीम् ऊर्ध्वतासामान्यमवस्थापयितुमाह—**भेद-ज्ञानादि**त्यादि ।

**भेदज्ञानात् प्रतीयन्ते यथा भेदाः परिस्फुटम् ।**
**तथैवाभेदविज्ञानादभेदस्य व्यवस्थितिः ॥ ३४ ॥**

§ २. तथाहि—यद् यथा प्रतिभाति तत् तथा सद्व्यवहृतिमवतरति । यथा कुवलयं नीलरूपतया विराजत्[२] तेनैव रूपेण अस्ति । क्षणपरिगतेनैव[३] रूपेण सकलाः पदार्थमात्राः प्रतिभान्ति न पूर्वापरकालपरिगतेनात्मनेति[४] स्वभावहेतुः प्रत्यक्षसिद्धे व्यवहारप्रवर्तन-फल इति ।

§ ३. तथा, यत् सत् तत् सर्वं[५] क्षणिकमित्यादयः भेदज्ञानहेतवः । एतस्माद्भेदज्ञानाद् यथा भेदाः[६] पर्यायाः क्षणिकाः **प्रतीयन्ते, तथा अभेदज्ञानादनुगताकाराद् अभेदस्य** द्रव्यस्य व्यवस्थितिरिति ।

§ ४. अथेदमनुगतं ज्ञानं निर्विषयत्वादप्रमाणम् । तथाहि—

"किं दृष्टे प्रत्यभिज्ञानमुतस्विन्मध्यवर्तिनि ।
किं वा[७] दृष्टिपथप्राप्ते[८] प्रमाणं वस्तुनीष्यते ॥
तत्र पूर्वोत्तराध्यक्षे पूर्वोत्तरग्रहक्षमे[९] ।
मध्ये नेन्द्रियवृत्तिः स्यात् कथं तत्र प्रवर्तते ॥
न चावस्थात्रयव्यापि किंचिदेकं प्रतीयते ।
प्रत्यक्षेण तथाभावे जन्ममृत्युगतिर्भवेत् ॥

१. अथास्तीत्यादि अ० । २. विराजते ब० । ३. °नैव च रूपे° मु० । ४. परिगतेनेति अ० । ५. °तेनहेतुफल अ० । ६. भेदपर्यायाः मु० क० । ७. वाऽदृष्टि ब० । ८. °पथं प्रा° मु० । ९. °महे क्ष° मु० ।

किञ्च किं दृष्टतां वेत्ति किं वा कालादियोगिताम्।
दृष्टत्वं दृश्यमानत्वं किमैक्येन प्रपद्यते॥
किं वा भेदेन पूर्वस्मिन्नन्योन्यानुप्रवेशनात्।
स इत्ययमिति वा स्यात् सोऽयं नेति मतिर्भवेत्॥
द्वितीयेऽपि यदा सोऽयं द्वयं भाति विरोधवत्।
सामानाधिकरण्यं हि विरुद्धज्ञानयोः कुतः?॥
अथ प्रत्ययभेदेऽपि प्रतिभास्यं न भिद्यते।
स्वतन्त्रं प्रतिभास्यं स्यात् ज्ञानमात्रं तदा भवेत्॥
अथानुस्यूततया भाति यदा वस्तु पुरःस्थितम्।
तदैकत्वग्रहोऽध्यक्षे कथं नास्ति विपश्चिताम्?॥
अनुस्यूतरूपता केयं किं पूर्वस्य प्रकाशनम्।
किं वा तत्तुल्यरूपस्य यदि वा सान्तराग्रहः?॥
तत्र पूर्वग्रहे न स्याद्वर्तमानग्रहः सदा।
पूर्वपूर्वग्रहे वा स्यात् जन्मादिप्रतिभासनम्॥
यदि तत्तुल्यता भाति सिद्धमेव प्रसाध्यते[2]।
अन्तराग्रहणं त्वा[3]शुकारित्वादुल्मुके न किम्?॥
पूर्वकालादियोगित्वे यद्यध्यक्षं न युक्तिमत्।
पूर्वकालाद्यभावे हि तद्विशिष्टग्रहः कथम्?॥
भावे तु पूर्वकालादेर्वर्तमानत्वमापतेत्।
त[4]था च न नित्यत्वं स्याद्वर्तमानग्रहे सति॥
अथ स्मृत्युपनीतेन तेन तस्य विशेषणम्।
स्मरणेनोपनीतं हि न वस्त्वध्यक्षगोचरः॥
न हि नीलोत्पलज्ञानं गन्धे स्मृत्युपढौकिते।
वर्तते जातुचित् तस्मात् न तत्कालविशिष्टता॥
सविकल्पकमध्यक्षं प्रत्यभिज्ञा न चेद्भवेत्।
अक्षान्नियमतो न स्यादिति चेत् तन्न युक्तिमत्॥
पूर्वकालविशिष्टे न संदृशोऽर्थेऽवलोकिते।
सहचारितया ज्ञानं स्मार्तं चन्दनगन्धवत्॥
तथाहि चान्दने गन्धे रूपेण सहचारिणि।
रूपदृष्टेः स्मृतिर्यद्वत् तद्वत् पूर्वविशेषणे॥
दृश्यमानार्थतुल्येन वस्तुना सहचारि यत्।
पूर्वकालादि तत्स्मृतं वर्तमानविशेषणम्॥
तत् स्थितं स्मरणाध्यक्षात् कल्पनाज्ञानमीदृशम्।
यत् स एवायमित्यस्य नापूर्वार्थग्रहस्थितिः॥
निश्चितत्वं दृढत्वं वा सविकल्पकताऽपि वा[6]।
दृढत्वमप्यनाशित्वं किं वाऽबाध्यत्वमुच्यते॥
सर्वासां क्षणिकत्वेन नाऽनाशित्वं हि संविदाम्।
अबाध्यताऽपि नैवास्ति यस्मादग्रे व[7]दिष्यते॥
अनुमानादृते नान्यत्कल्पनाज्ञानमिष्यते।
प्रमाणं प्रत्यभिज्ञाया न च लिङ्गमि[8]हास्ति वः॥

१. पूर्वस्मिन् स इत्य° क० मु० ब०। २. प्रसाध्यति मु० क०। ३. °णं चाशु° ब०। ४. यथा मु०। ५. सदृश्यर्थे ब०। ६. या क० मु०। ७. गदिष्यते मु० क०। ८. °मिहोच्यते। तस्माप्य° अ०।

प्रत्यभिज्ञायमानत्वं यदि लिङ्गमिहोच्यते ।
तस्याप्यध्यक्षतो व्याप्तिर्नकत्वेन सह क्वचित् ॥
यद्यनुमानतो व्याप्तिरनवस्था[1]ऽऽपतेत् तव ।
न ताभ्यां मानमस्त्यन्यत् यस्माद् व्याप्तिग्रहो भवेत् ॥
कल्पनापोढमध्यक्षं निर्विकल्पकसिद्धितः ।
ज्ञातव्यं प्रत्यभिज्ञाऽतो नाध्यक्षं कल्पनायुता ॥
नाक्रमात् क्रमिणो भावा[2] नाप्यपेक्षाऽविशेषिणः।
क्रमोद्भवा सती सा तु स्वयमेकत्वबाधिका ॥
तेनाबाध्यत्वमप्यस्या नानुमानाच्च बाधनात् ।
न चानयापि बाध्यत्वादनुमानमबाधकम् ॥
अप्रामाण्येन युक्तायाः कुतो बाधकतास्थितिः ।
अप्रामाण्याच्च नैवास्याः अनुमानं प्रमेष्यते ॥
अन्योन्याश्रयदोषोऽपि तेन नास्ति विपश्चिताम् ।
स्वसाध्यप्रतिबन्धाद्धि प्रमाणमनुमेष्यते ॥
क्रमाक्रमक्रियाऽभावात् बाधकात् प्रतिबन्धवित् ।
बाधकं साध्यमाकर्षेल्लिङ्गमालिङ्ग्य धारयेत्[3] ॥
निरुच्छ्वासतया हंत ! भावानां दुःखमापतेत् ।
तदबाध्याऽनुमा बाध्या प्रत्यभिज्ञा न[4] चाक्षजम् ॥
अनुमानेन नो बाध्यमिति वाच्यं विपश्चिता ।
सूर्यादिवस्तुनोऽध्यक्षमनुमानेन बाधितम् ॥
अर्थस्यासंभवे भावात् न विशेषो द्वयोरपि ।
बीजत्वाच्छालिबीजं च यवाङ्कुरकरं यथा ॥
अनुमा[5] बाध्यतेऽध्यक्षात् प्रत्यभिज्ञापि ते तथा ।
जनकत्वं यदन्त्यस्य स[6] इत्यंशे यदा नयेत् ॥
एकत्वात् प्रत्यभिज्ञानं तदा[7] ह्यध्यक्षबाधितम् ।
तदेवं प्रत्यभिज्ञाया नाऽबाध्यत्वमिहास्ति वः ॥[8]
कारणादुष्टताप्यस्याः भ्रान्तेरिव कुतो भवेत् ।
नचैतस्याः प्रमाणत्वादन्योन्याश्रयदोषतः ॥
प्रत्यक्षतोऽपि नाक्षाणामत्यक्षाणामदुष्टता ।
तस्याः प्रत्यक्षतायां स्यात् प्रतिबन्धस्य हानितः ॥
अनुमानत्वेऽपि नैवास्याः कारणस्य[9] विशुद्धता ।
तदेवं प्रत्यभिज्ञाया न प्रामाण्यमिति स्थितम् ॥"

§५. अत्रोच्यते—[10]"किमिदमिन्द्रियान्वयव्यतिरेकानुविधायि स्थिरस्थूरवस्तुग्राहि प्रत्यक्षं नानुभूयते ? किं वा अनुभूयमानमपि निशीथिनीनाथद्वयावलम्बिप्रत्यक्षवद् भ्रान्तमिति ? । तत्र[11] नानुभूयत इति ब्रुवाणोऽनुभवेनैव निराक्रियते । द्वितीयेऽपि किं कदाचित् कुमुदिनीनाथै[12]क्यग्राहिप्रत्यक्षवत् कस्यचित् क्षणिकग्राहि[13] प्रत्यक्षमुत्पन्नम् ?, येनैतद् भ्रान्तं स्यादिति ।

§७. यच्चानुमानं क्षणिकत्वग्राहि तत् प्रत्यक्षबाधितत्वात् 'अश्रावणः शब्दः' इत्यनु-

१. °स्यापद्यते तव ब० । २. भावो क० । ३. वारयेत् ब० क० मु० । ४. नचाक्ष° क० मु० । ५. अनुमानं अ० क० मु० । ६. °स्य इत्यं° क० । ७. °ज्ञानं ह्य° क० । ८. न बाध्य° क० मु० ब० । ९. कारणस्याविरुद्धता अ० । १०. किमिदानीमि° अ० । ११. तत्रानुभू° क० । १२. °नाथैक्यग्राही अ० क० मु० । १३. °ग्राहि न च प्रत्य° ब० ।

मानवदप्रमाणत्वात् अबाधकमिति । किञ्च, सत्त्वादेर्लिङ्गस्य व्याप्तिग्रहणं न प्रत्यक्षेण, परोक्षत्वात् क्षणिकत्वस्य । अनुमानेन ग्रहणेऽनवस्था इतरेतराश्रयत्वं च प्रतिपादयन्ति । तदितरेतराश्रयपरिहारार्थं "प्रत्यभिज्ञानिरपेक्षं स्वप्रतिबन्धबलादनुमानं प्रमाणम्" इति यदुक्तम्, तदयुक्तमिति ।

§८. अथ सत्त्वमर्थक्रियाकारित्वेन व्याप्तम् । अर्थक्रियाकारित्वं च क्रमयौगपद्येनेति । तयोश्च व्याप्तिः प्रत्यक्षेणैव प्रतीयत इति नानवस्थेति । तथाहि—क्रमेणाङ्कुरादिकं कार्यमुत्पद्यमानमुपलभ्यते । तदभावे यौगपद्येन उभयनिषेधे केवलभूतलग्राहि प्रत्यक्षं प्रकारान्तराभावं निश्चाययति । तेन क्रमयौगपद्याभ्यामर्थक्रियाकारित्वस्य व्याप्तिं प्रतिपद्यत इति । ततो नित्यात् क्रमयौगपद्यं निवर्तमानमर्थक्रियाकारित्वलक्षणं सत्त्वमादाय निवर्तमानं क्षणिकेष्वेवावतिष्ठत इति व्याप्तिग्रहणं प्रत्यक्षमूलमिति ।

§९. भवत्वेकान्तनित्यात् क्रमयौगपद्यनिवृत्तिनिबन्धनार्थक्रियाव्यावृत्तिः, तथापि न सा क्षणिकेष्वेवावतिष्ठते । यथैकान्तनित्येष्वर्थक्रिया न संभवति, तथैकान्तक्षणिकेष्वपीति । एतच्च पश्चात् प्रतिपादयिष्यते । तन्न गृहीतव्याप्तिकं क्षणिकानुमानं प्रत्यभिज्ञाबाधकमिति । प्रतिपादयिष्यते च प्रत्यभिज्ञायाः प्रामाण्यमिति । तस्मादनुगतव्यावृत्ताकारा बुद्धिर्द्व्यात्मकं वस्तु व्यवस्थापयति । [ ३४ ]

§१. एतदेवाह—घटमौलिसुवर्णेष्विति ।

**घटमौलिसुवर्णेषु बुद्धिर्भेदावभासिनी ।**
**संविन्निष्ठा हि भावानां स्थितिः काऽत्र विरुद्धता ॥ ३५ ॥**

§२. भेदावभासिनीति । भेदमनुगतव्यावृत्तरूपमवभासितुं शीलं यस्याः सा तथा । तथाहि—सुवर्णम् सुवर्णम् इति अनुगताकारा बुद्धिः । घटश्च मुकुटं चेति व्यावृत्ताकारा चानुभूयत इति । न चैतद्वाच्यम्—'विरोधादेकं वस्तु नोभयरूपम्' इति । यत आह—संविन्निष्ठा हीति यस्मादन्यत्रापि नीलपीतव्यवस्था संवेदननिबन्धनैव । तदिहापि विरोधेऽपि संवेदनमेव प्रमाणमिति ।

अनुगतव्यावृत्ताकारं वस्तु ।

§३. एवं प्रत्यक्षेणोभयात्मकं वस्त्वनुभूयमानमपि यो मोहात् न प्रतिपद्यते तं प्रत्यनुमानमुपन्यस्यते—सत्त्वान्यथानुपपत्तेः सर्वं नित्यानित्यात्मकम् यथा घटः, एकान्तनित्येऽनित्ये वाऽर्थक्रियाविरोधात् । सन्ति च सप्त पदार्थाः । न तावद्विशदतरदर्शनावसेयस्य सत्त्वस्य ज्ञानवादिमताश्रयणेनासिद्धत्वमुद्भावनीयम्, विज्ञानस्याप्यभावप्रसक्तेः । नापि सर्वशून्यवादिमताश्रयणेन, वादे तस्यानधिकारात् । 'सर्वाऽभावे हि कस्मै किं केन प्रतिपादयेत्' इत्यादेरुक्तत्वात् । नापि प्रतिज्ञार्थैकदेशत्वेनासिद्धत्वम्, धर्मभेदस्याप्यभ्युपगमात् । नापि विकल्पकल्पितो धर्मभेदः । तदा हि खरतुरगविषाणयोरपि गम्यगमकभावः स्यात् । कल्पिताच्च हेतोः कल्पितसाध्यसिद्धिप्रसक्तेः । नाप्येकान्तेन भेदः संबन्धासिद्धेः, समवायादिसंबन्धनिरासात् । न चात्र भेदाभेदपक्षभावी दोषो गुडनागरसंज्ञितवस्त्वभ्युपगमात् । तदुक्तम्—

१. °मुत्पाद्य° क० । २. निश्चापयति मु० क० । ३. °लक्ष्या° ब० । ४. °भासिनीति क० मु० । ५. तया मु० । ६. मुकुटश्चेति मु० । ७. सत्त्वाद्यथा मु० क० । ८. धर्म्यभेदः अ० । ९. °साध्यप्रसक्तेः मु० क० । १०. °कान्तेनाभेदः अ० । ११. °बन्धस्य क० ।

"गुडश्चेत् कफहेतुः स्यात् नागरं पित्तकारणम् ।
तन्मूलमन्यदेवेदं गुडनागरसंज्ञितम् ॥
मधुरं न हि सर्वं स्यात् कफहेतुर्यथा मधु ।
तीक्ष्णं वा पित्तजनकं यथा मागधिका[1] मता ॥"

तदेवं भिन्नाभिन्ने वस्तुनि नासिद्धो हेतुः ।

§४. नापि विरुद्धः सपक्षे सद्भावात् । नापि विरोधाक्रान्तत्वात् नित्यानित्यात्मकत्वं[2] घटस्यासिद्धमिति वाच्यम् । तथाप्रतिभासनात् । संविन्निष्ठा हि विषयव्यवस्थितयः । तथा च छायातपयोरपि यद्येकत्रावभासनं स्यात् विरोधेपि, केन नानुमन्येत तथावस्थानम् । तथाहि—मृद्रूपस्य ध्रौव्यसंज्ञितस्य सर्वावस्थानुयायिनो नित्यस्य अनित्येनोत्पादव्ययसंज्ञितेनै-[3]क्यात्मतया प्रतीतेः । अन्यथा एकान्तभेदे मृत्संस्थानयोरपरस्परात्मतया प्रतिभासनं स्यात् । नाप्येकान्तेनैकत्वम्[4] अनुगतव्यावृत्तत्वेन[5] द्विरूपाया बुद्धेरुत्पादात् । तदुक्तम् ।

"घटमौलिसुवर्णार्थी[6] नाशोत्पादस्थितिष्वयम् ।
शोकप्रमोदमाध्यस्थ्यं[7] जनो याति सहेतुकम् ॥" [ आप्तमी० ५९ ]

न चात्रानुगताकारा बुद्धिः सविकल्पकत्वादप्रमाणमिति वाच्यम् । व्यवसायरूपत्वात् प्रमाणस्य इति उक्तत्वात् ।

§५. तदेवं देशकालस्वभावाभेदेऽपि संख्या-संज्ञा-लक्षण-कार्यभेदात् नरसिंहाकारमेव वस्तु । तदुक्तम्—

"न नरः सिंहरूपत्वात् न सिंहो नररूपतः ।
संज्ञा-विज्ञान-कार्याणां भेदात् जात्यन्तरं हि तत् ॥"
"नान्वयो भेदरूपत्वात् न भेदोऽन्वयरूपतः ।
मृद्भेदद्वयसंसर्गवृत्तिर्जात्यन्तरं[8] घटः ॥"

अन्यथा एकान्तकूटस्थनित्यतायां[9] न कश्चित् क्वचित् प्रवर्तते इत्यप्रवृत्तिनिमित्तकं[10] जगत् स्यात् । अन्यथा परिणामित्वमेव स्यात् । एकान्तक्षणिकत्वेऽपि प्रतिसंधानप्रत्यभिज्ञाद्यभावेन स्वगृहेप्यागमनं न स्यात् । तस्मादनेकान्तात्मन्येव वस्तुनि व्यवहारोपि घटते । तदेवमुभयात्मकं वस्तु सिद्धम् ।

§६. ननूक्तं विरोधाक्रान्तत्वात् कथमेतदिति । सत्यम्, उक्तम् किन्तु अयुक्तमुक्तम् । तथाहि—विरोधो द्विधा सहानवस्थानलक्षणः परस्परपरिहारलक्षणश्च व्यावर्ण्यते । तत्र किं ययोर्न कदाचिदेकत्रावस्थानं तयोः सहानवस्थानम्, उत कियत्कालावस्थानेऽपि पश्चादनवस्थानेनेति । आद्ये पक्षे अहिनकुलादीनां न विरोधः स्यात् । अन्यथा त्रैलोक्येऽप्युरगादीनामभावः । द्वितीयेऽपि[11] न कस्यचिन्नरवनितादेर्विरोधो न स्यात् तयोरपि किञ्चित्कालमेकत्र स्थित्वाऽपगमात् । किञ्च, वडवानलजलधि[जल]योर्विद्युदम्भोदाम्भसोश्चिरतरमेकत्रावस्थाने[12] कथमयं विरोधः ? ।

---

१. माराधिका मु० क० । २. °त्मत्वं क० । ३. अनित्यत्वेनो° ब० मु० क० । ४. °तेनैकात्म° क० । ५. °वृत्तेन मु० । ६. र्णार्थिना सोत्पा° मु० । ७. °स्थं ज° क० । ८. वृत्तिर्जात्य° क० । ९. कूटस्थो न मु० । कूटस्थ न कश्चित् क० । १०. निमित्तिकं° मु० क० । ११. द्वितीये न अ० क० । १२. त्रावस्थातः ब० ।

§७. अथ बलवता[1] द्वितीयस्य निवर्तने तथाभावः न स्वयं, विश्लेषे किलाविकलकारणस्य भवतोऽन्यभावेऽभावाद्[2] विरोधव्यवस्था[3]। यथा शीतोष्णयोः। तदसत्। यतो बलवता किं क्षणिकस्य[4] निवर्तनम्, उत अक्षणिकस्य[5]?। क्षणिकस्यापि किम् अतीतानागतलक्षणस्य उत वर्तमानक्षणस्येति?। तत्रातीतानागतयोरविद्यमानत्वादेव कस्य केन निवर्तनम्?। दैवरक्ता हि किंशुकाः। नाप्येकक्षणावस्थायिनो[6] वर्तमानस्य केनचिन्निवर्तनम्, धारणं[7] वा संभवति।

§८. अथ विरोधिनाऽसामर्थ्योत्पादनेन मन्दतरतमादिकार्योत्पत्तौ त्रिचतुरेषु क्षणेषु निवर्तनम्[8]। ननु सामर्थ्यविनाशने[9] निर्हेतुविनाशवादो[10] निरर्थकः स्यात्। अथ सहकारित्वमेव सामर्थ्यविनाशनम्। ननु क्षणस्यानुपकार्यत्वात् कथमसौ सहकारी?। एककार्यकरणादिति चेत्; तर्हि कार्यकारणभावमात्रमेव स्यात् न[11] कश्चित् निवर्त्यनिवर्तकभावः। सहकारिणो विरोधव्यवस्थायां न कस्यचिदयं न स्यात्। तन्न क्षणिकस्य निवर्तने[12] सहानवस्थानविरोधः।

§९. अथाक्षणिकस्य। तस्यापि निवृत्तिः किम्—भिन्ना स्याद्, अभिन्ना वा?। अभिन्ननिवृत्तिकरणे स एव कृतः स्यात्। तथा च कारणमेव स्यात्, न विरोधः[13]। भिन्ना चेत्; तस्या एव[14] कारणं स्यात्। न कस्यचित्[15] निवर्तको नाम।

§१०. किञ्च, भवतु कथञ्चिच्छीतोष्णादीनां विरोधः, तथापि अयं नित्यानित्य[त्व]योर्न[16] संभवति। तथा हि—किमविकलकारणं नित्यत्वं अनित्यत्वेन व्यावर्त्यते, उतानित्यत्वं नित्यत्वेनेति?। न तावदाद्यः पक्षः। यतः कारणवत्त्वे नित्यत्वमेव न स्यात्। अथाविकलकारणमविचलितस्वरूपम्; तस्यापि न केनचित् निवर्तनम्। निवर्तने वा नित्यतैव[17] न स्यात्। नापि क्षणिकत्वं तस्य[18] स्वत एव नाशात् किं नित्यत्वं कुर्यात्। किंच प्रतिक्षणं विशरारुषु भावेषु तदेव किञ्चिन्नित्यत्वं नास्ति, येन क्षणिकत्वं व्यावर्त्यते। सद्भावे वा कथं सहावस्थितिविरोध[19] इति।

§११. अथ परस्परपरिहारस्थितिलक्षणो नित्यत्वानित्यत्वयोर्विरोधः। स हि किल स्वरूपनिष्ठो व्यावर्ण्यते 'नैकं वस्तु द्विरूपं संभवति' इति। तदसत्[20]। यत एकस्यापि प्रस्तरादेः शीतस्पर्शस्य सतः कालान्तरेणोष्णस्पर्शस्य दर्शनात्[21]। न च तद्वस्तु भिन्नम्। विरुद्धोभयपर्यायात्मतया प्रत्यभिज्ञायमानत्वात्। अथैकदा[22] विरुद्धोभयरूपता[23] नोपलभ्यते। तदप्यसत्[24]। वह्नेरेकस्याप्युष्णानुष्णस्वभावस्य दर्शनात्। तथा हि[25] स्पर्शरूपतया वह्निरुष्णो न रूपरूपतया[26]। अन्यथा तदवलोकने जननयनदहनमापनीपद्येत[27]।

---

१. अथ धवलता द्वि° क० मु०। २. भवताऽन्य° क०। ३. विरोधाव्यव° अ०। ४. °क्षणकस्य क० मु०। ५. °क्षणिकस्य मु०। ६. अप्ये° क० मु०। ७. वारणं मु० क०। ८. निवर्तते मु०। ९. विनाशे मु०। १०. निर्हेतुकं वि° मु०। ११. स्यात् निव° मु०। १२. निवर्तते मु०। १३. विरोधी अ०। १४. एवं अ०। १५. कश्चित् क०। १६. स भवति मु०। १७. नित्यत्वमेव मु० क०। १८. क्षणिकत्वं किञ्च मु० क०। १९. सद्भावस्थि° ब०। २०. तदसत् एक अ०। २१. दर्शनात् तथाहि स्पर्शरूपतया वह्निरुष्णो न रूपरूपतया न च° अ०। २२. अथ वि° मु०। २३. विरोधोभय मु० क०। २४. °भ्यते वह्ने-मु० क०। २५. तथापि क०। २६. न रूपतया मु०। २७. °मापद्येत मु०।

§१२. न च स्पर्श-रूपपरमाणूनां परस्परपरिहारेणावस्थानात् नैकमुभयरूपमिति वक्तव्यम्। यतः तथापरिणते[1] वह्निद्रव्ये न केचनापरे परमाणवो विद्यन्ते। न[2] चेन्द्रियान्तरकल्पनावैफल्यदोषो वाच्यः। कथञ्चिद्भेदस्याप्यभ्युपगमात्।

§१३. किञ्चैकस्मिन्नात्मनि विरुद्धधर्माधर्मयोरेकसंबन्धेना[3]वस्थाने कथमयं विरोधः?। अथ कर्मरूपतया तयोरेकत्वात् तथावस्थानेऽपि न युगपद्विरुद्धफलजनकत्वम्। तदप्यसत्। तस्यापि दर्शनात्। तथा हि–पादादौ[4] व्रणच्छेदकर्मणि दुःखोत्पादेऽपि सुखे कर्पूरादिना सुखोत्पादस्यापि दर्शनात्।

§१४. किञ्च, अयं नित्यानित्यत्वयोः[5] सामान्यलक्षणयोः सतोर्विरोधः, उत सामान्यलक्षणस्वलक्षणयोः, आहोस्वित् स्वलक्षणयोः, किम् आरोपितयोः, अथारोपितानारोपितयोरिति?। न तावदाद्यः पक्षः। एकत्रैवानेकसामान्यसद्भावाभ्युपगमात्। नापि द्वितीयः। यतः।

"निर्विशेषं न सामान्यं भवेच्छशविषाणवत्।
[6]विशेषोऽपि च नैवास्ति सामान्येन विना कृतः॥" [श्लोकवा० आकृति १०]

नापि तृतीयः। रूपरसादीनामेकत्र सद्भावदर्शनात्। चतुर्थे तु खरतुरगविषाणयोरिव को नाम विरोधः?। अथ आरोपितानारोपितयोर्भावाभावयोः परस्परपरिहारस्थितिलक्षणो विरोधः। तथा हि–नित्यत्वनिवृत्तिस्तुच्छरूपा अनित्यत्वम्। अनित्यत्वनिवृत्तिश्च नित्यत्वम्। तयोः कथं न विरोधः?। तदप्यसत्। यतो न तुच्छरूपोऽभावः प्रमाणगोचरचारीति प्रबन्धेन प्रतिपादितम्। कथं तर्हि भावाभावात्मकं वस्तु?। नैतदस्ति। यस्मात् परदेशाद्यपेक्षया भाव एवाभावः। नापि प्रागभावप्रध्वंसाभावविशेषणसत्तासमवायात्मकः, सत्तया[7] सह संबन्धासिद्धेः[8]। स हि समवायलक्षणोऽभ्युपगम्यते। तस्य च[9] पूर्वमेव निरस्तत्वादिति।

§१५. किञ्च सत्तासमवायादनित्यतायाम् आत्मादिष्वपि अनित्यत्वप्रसङ्गः। यथा च[10] समवायोऽन्यद्वा एकान्तनित्यं वस्तु न संभवति तथाऽग्रे प्रतिपादयिष्यामः। तन्न कश्चिद्भावव्यतिरिक्तोऽभावोऽस्ति येन विरोधः स्यात्। ततः सिद्धो नित्यानित्यात्मको घटः। तत्सिद्धौ च न विरुद्धो हेतुः।

§१६. नाप्यनैकान्तिकः। विपर्यये बाधकप्रमाणसद्भावात्। तथा हि–इदं सत्त्वम् अर्थक्रियाकारित्वेन व्याप्तम्। सा च कूटस्थनित्यादनित्याच्च व्यावर्तमाना सत्त्वमादायैव निवर्तते। तेन उत्पादव्ययध्रौव्यवत्येव वस्तुनि सत्त्वमवतिष्ठते।

§१७. न च सत्तासंबंधेन सत्त्वं वाच्यम्, सत्तादीनामसत्त्वप्रसंगात्। अपरसत्ताभ्यु[11]पगमे वाऽनवस्था। तदव्यापि लक्षणम्। अतिव्यापि च शशविषाणादीनामपि सत्त्वप्रसङ्गात्। तेषां सकलशक्तिरहितत्वात् न सत्तासंबन्ध इति चेत्। तर्हि शक्तिरेव सत्त्व[12]लक्षणम्, किं सत्तासंबन्धेन?। इतरेतराश्रयत्वं च स्यात्। तथा हि–सति सत्तासंबन्धे सत्त्वं वा[13]च्यम्, सति सत्त्वे सत्तासंबन्धः।

१. °णतवह्नि° ब०। २. न लिन्द्रि° अ०। ३. °बन्धिना° अ०। ४. पादे क० मु०। ५. °नित्ययोः ब० मु० क०। ६. "सामान्यरहितत्वाच्च विशेषास्तद्वदेव हि"–श्लोकवा०। ७. सत्ताया अ०। ८. संबंधोऽसिद्धः अ० ब०। ९. तस्य पू° अ०। १०. यथा सम° ब०। ११. अपरसत्त्वाभ्यु° ब०। १२. सत्त्वे ल° मु०। १३. सत्त्वं सति मु० क०।

§ १८. सा च कूटस्थस्य न विद्यते । तथा हि—त[1]न्नित्यं क्रमेण वा शक्तिमत्स्यात् यौगपद्येन वा ? । न तावत् क्रमेण । सकलसामर्थ्योपपन्नस्य एकक्षण एव समस्तकार्यकरणप्रसङ्गात् । सहकार्यपेक्षा च समर्थस्य न विद्यते । असामर्थ्ये वा पूर्वमसमर्थस्य सहकारि[2]सांन्निध्येन सामर्थ्योत्पत्तौ परिणामित्वप्रसंगः । सहकारिणा सामर्थ्यमुत्पाद्यमानं ततो भिन्नमभिन्नं वा स्यात् ? । अभेदपक्षे कूटस्थनित्यताहानिः । भिन्नकरणे तस्मादेव कार्योत्पत्तिः स्यात्, न नित्यात् । इत्यादि सौगतैरेवात्र विजृम्भितं तदिह नोच्यते विस्तरभयात् । तन्न क्रमेण कर्तृत्वम् ।

एकान्तनित्ये सत्त्वनिषेधः ।

§ १९. नापि यौगपद्येन प्रथम एव क्षणे कृतत्वात् द्वितीयादिषु न किञ्चित् कर्तव्यमस्तीति [3]सर्वसामर्थ्यरहितस्य व्योमोत्पलस्येवासत्त्वं स्यात् । पुनः करणे वा क्रमपक्ष एव स्यात् । तत्र चोक्तो दोषः । न च कृतकरणमस्ति । तन्न यौगपद्येनापि करोति । न [4]चापरं क्रमाक्रमरूपं प्रकारान्तरमुपेयते, अस्मन्मतानुप्रवेशप्रसंगात् । तन्न कूटस्थनित्यं किंचित् करोति ।

§ २०. नाप्येकान्तक्षणिकम् । तदपि हि क्रमेण वा कुर्यात् यौगपद्येन वा ? । न तावत् क्रमेण । स हि देशक्रमो वा स्यात् पिपीलिकानामिव, कालक्रमो वा पत्रनालादीनामिव । तत्र नैकस्मिन्देशे कार्यं कृत्वा देशान्तरे क्षणिकं वस्तु करोति । तत्रैव तस्य ध्वस्तत्वात् । नाप्येकस्मिन् क्षणे कृत्वा द्वितीये विदधाति, क्षणिकत्वहानिप्रसंगात् ।

एकान्तक्षणिके सत्त्वनिषेधः ।

§ २१. अथ नायं क्रमः सौगतैरुपेयते । किं तर्हि ? । कार्यान्तरासाहित्यं कैवल्यम् अङ्कुरादेः । यौगपद्यमपि कार्यान्तरसाहित्यम् । तथा हि—लोको वदति क्रमेण यवाङ्कुरा उत्पन्ना यौगपद्येन वा इति । ननु कल्पनामात्रमेतत् वस्तु[5]तः पुनः सौगतानां द्विविधं कारणं सामग्रीलक्षणम् सहकारिलक्षणं च । तत्र यदि सामग्रीलक्षणं कारणमाश्रित्य क्रमयौगपद्यमिष्यते । तन्न संभवति । तत्र यौ[6]गपद्याभावात् । एकमेव हि कार्यं सामग्री जनयति । नापरम् । तन्न कार्यान्तरसाहित्यलक्षणं यौगपद्यं तत्रास्ति । [7]नापि सहकारिकारणमभ्युपगम्य तथाभावव्यवस्था । तत्र हि यौगपद्यस्यैव संभव इति । तथा हि तानि स्वं स्वमुपादेयकार्यम् उपादानभावेन परस्परकार्यं च सहकारिभावेन जनयन्तीति कुतः क्रमः । तत् परापेक्षया कल्पित एव क्रमयौगपद्यभावः । [8]न हि निरंशं वस्त्वनेककार्यजनकं संभवति सांशताप्रसंगात् । न चोपादानसहकारिभावः संभवति । तथा हि—द्वितीय[9]स्वभावाभावादेकमेव जनयेत् । न चैकं जनक[10]मुपेयते । तन्न क्षणिकपक्षेऽपि क्रमयौगपद्यक्रियासंभवः ।

§ २२ किंच क्षणिकं वस्तु सव्यापारं वा कार्यं कुर्यात् निर्व्यापारं वा ? । निर्व्यापारस्य करणे खपुष्प[11]स्यापि कार्यक्रिया स्यात् । व्यापारवत्त्वे प्रथमे क्षणे उत्पद्यते द्वितीये व्याप्रियते इति क्षणिकत्वहानिः । अथ प्राक्कालभावित्वमेव व्यापारः नापरः । तर्हि तत्क्षणभाविनां जगत्क्षणानामपि कारणत्वं स्यात् । तथा च सूत्ररूपताऽपि घटस्य स्यात् । न चोपे[12]योर्थिनां नियतकारणोपादानम् स्यात् । न चानन्तरक्षणविनष्टे चिरतरविनष्टे वा कश्चिद्विशेषोऽस्तीति

१. सन्नि अ० ब० । २. °कारिसन्निधौ मु० क० । ३. सत्त्वसा° मु० क० । ४. न वा मु० । ५. वस्तुनः मु० क० । ६. तत्र क्रमयौग° अ० ब० । ७. तत्रास्ति नापि क्रम इति । नापि सह° अ० ब० । ८. न च निरं° क० मु० । ९. द्वितीयांशभा° क० मु० । १०. °कमुपपद्यते ब० । ११. °स्य कार्य० अ० मु० । १२. न चोपेये यार्थि° ब० अ० ।

चिरतरविनष्टमपि कुर्यात् । इति मृतेन कुक्कुटेन वासितव्यम् । ततो घटरूपतया परिणमनमेव मृत्पिण्डस्य[1] कारणत्वं न प्राग्भावः । न चानुसन्धातारमात्मानमन्तरेण कार्यकारणभावप्रतीतिः । तथा हि—कारणविषयेण प्रत्यक्षेण कारणमेव प्रतिपन्नम्, न कार्यम् । कार्यविषयेणापि कार्यमेव न कारणम् । अथ निर्विकल्पकदर्शनद्वयानन्तरं 'इदमस्मादुत्पन्नम्' इत्येवमाकारं स्मरणज्ञानमुदेति तेन तथाभावग्रहः । तदप्यसत् । स्मरणं हि अनुभवानुसार्येवोत्पद्यते । न चानुभवद्वयेन कार्यकारणभावोऽनुभूतः येन तथास्मरणं स्यात् । आत्मनश्चाभावे कस्य तत् स्मरणं स्यात् ? । तन्न क्षणिकपक्षेऽपि कार्यकारणभावप्रतीतिः ।

§ २३. किञ्च कार्यं सदुत्पद्यते, उतासत्[2], आहोस्वित् सदसत् ? । यदि सत् । किमुत्पद्यते ? । अथासत् । किं न व्योमोत्पलम् ? । अथ प्रागभावाभावात्[3] न व्योमोत्पलस्य उत्पत्तिः । ननु प्रागभावोऽपि[4] तस्य किमिति नास्ति ? । उत्तरकालमभावादिति चेत्; इतरेतराश्रयत्वम् । तथा हि—यस्योत्तरकालमुत्पत्तिः तस्य प्रागभावः । यस्य प्रागभावः तस्योत्पत्तिरिति । सद्[5]सच्चेत्; हन्त ! अस्मन्मतानुप्रवेशः ।

§ २४. तन्नैकान्तनित्येऽनित्ये वा अर्थक्रिया समस्तीति[6] नित्यानित्यात्मन्येवार्थक्रियाकारित्वेन सत्त्वम् । तथा हि—स एव मृत्पिण्डो घटरूपतया परिणमते इति प्रतीतिः । यद्रूपं हि कारणमुपलभ्यते तद्रूपमेव कार्यमपि । तदेव द्रव्यं तेन[7] तेन पर्यायेण परिणमदुपलभ्यते । नात्यन्तभिन्नमभिन्नं वा घटादिकार्यं प्रतीयते । तदुक्तम्—द्रवति गच्छति तांस्तान् पर्यायानिति द्रव्यम्[8] । तेन द्रव्यमेव अन्तरङ्गम्, बहिरङ्गाः पर्यायाः ।

§ २५. ननु द्रव्यस्य कुतः सत्त्वसिद्धिः ? । प्रत्यभिज्ञाप्रत्यक्षादिति ब्रूमः । तथा हि—

द्रव्यस्य सत्त्वसिद्धिः ।

यदबाधितबोधगोचरचारि तत् सद् यथा स्तम्भकुम्भादि । अबाधितप्रत्यभिज्ञाप्रत्यक्षगोचरचारि च[9] पूर्वोत्तरपर्यायव्यापि द्रव्यम् । भेददर्शनमपि हि[10] भेदवादिभिरिन्द्रियान्वयव्यतिरेकानुविधायितया[11] प्रत्यक्षमुपेयते तथा[12] अभेदाध्यवसायिन्यपि पूर्वदर्शनाहितसंस्कारप्रबोधप्रभवस्मरणसहायेन्द्रियान्वयव्यतिरेकानुविधायिनी प्रत्यभिज्ञा कथं न प्रत्यक्षम् ? ।

§ २६. न[13] च 'अक्षं वर्तमानकालभाविनि प्रत्यासीदति, अतः तदनुसारिणी धीस्तत्रैव प्रवर्तितुम् उत्सहते, न पूर्वत्र[14]' इति वाच्यम् । एवं हि विशददर्शनावसेयाः स्तम्भादयोऽपि न प्रत्यक्षाः स्युः । तथा हि—अर्वाचीनावयवसंबन्धे(द्धे)न्द्रियजनितप्रत्यक्षावसेयं[15] मध्यपरावयवादिव्यापि स्तम्भादिद्रव्यम् । तच्चार्वाचीनावयवमात्रपर्यवसिते[16][17] प्रत्यक्षे न स्यात् । परमाणुरूपावयवानां चाप्रत्यक्षत्वात्[18] । ततः सकलप्रमाणशून्या[19] ग्राह्यताऽऽपद्येत ।

§ २७. अथ विततदेशव्यवस्थिताः परमाणवः प्रतिभासविषयाः । तदसत् । सान्तराणां

---

१. °ण्डस्यैव का° अ० । २. उताऽसद्यदि क० मु० । ३. प्रागभावभावात् क० । ४. प्रागभावेऽपि मु० । ५. °रिति तन्नैका° मु० क० । ६. °क्रियात्वमस्तीति मु० । ७. द्रव्यं तेन पर्या° मु० । ८. °निति द्रव्यमेव मु० । ९. °चारि पूर्वो° मु० क० । १०. °मपि भेद° क० मु० । ११. °रेकविधा° ब० । १२. °यते अतः अभे° मु० । १३. प्रत्यक्षं वर्त° ब० । १४. पूर्वञ्च इति मु० । १५. अर्थाधीनाव° मु० क० । १६. तच्चार्थाधीना° मु० क० । १७. °सितप्रत्यक्षे मु० । १८. वाप्रत्य° मु० । १९. °शून्यमा° अ० ब० मु० ।

तेषां अप्रतिभासनात् । संयोगात् तथाभासनमिति चेत्; ननु तेषां संयोगः किम् एकदेशेन सर्वात्मना वा ? । न[1] तावदेकदेशेन निर्देशत्वात् परमाणूनाम् । नापि सर्वात्मना पिण्डस्य अणुमात्रत्वप्रसंगात् । तन्न परमाणवः प्रतिभासविषयाः[2] । किन्तु एकपरिणामपरिणतं स्तम्भादिद्रव्यं प्रतिभासगोचरचारि । तद्यथा—अर्वाचीना[3]वयवसंबद्धेन्द्रियजनितप्रत्यक्षेण विभिन्नदेशव्यवस्थितपरोक्षावयवव्यापि पुरोव्यवस्थितं वस्तु प्रतीयते, तथा वर्तमानपर्याय-संबद्धे[4]न्द्रियात् स्मृतिसहायात् उत्पन्नेन प्रत्यभिज्ञाप्रत्यक्षेण अतीतदेशकालादिव्यवस्थितानेक-पर्यायव्याप्येकं प्रत्येष्यतीति[5] न कश्चिद्दोषः ।

§२८. न च क्षणिकानुमानबाधितत्वात् प्रत्यभिज्ञानं भ्रान्तमिति वाच्यम् । अन्यथा विशददर्शनं हिमांशुधवलिमानं परिच्छिन्दद्[6]उत्पद्यमानं—'नीलं निशीथिनीनाथबिम्बं सत्त्वात् नीलोत्पलवद्' इत्यनुमानबाध[7]मनुभवदप्रमाणं स्यात् । अथास्य प्रत्यक्षबाधितत्वात् न प्रामाण्यं । क्षणिकानुमानस्यापि प्रत्यभिज्ञाप्रत्यक्षबाधायां समानम् । अथ प्रत्यभिज्ञानस्य भ्रान्तत्वात् क्षणिकानुमानस्य प्रमाणता । तर्हि इतरेतराश्रयत्वम्—सति हि प्रत्यभिज्ञानस्य भ्रान्तत्वे अस्य प्रामाण्यम् । सत्यस्य प्रामाण्ये प्रत्यभिज्ञान[8]भ्रान्ततेति । न च प्रत्यक्षम् अनुमानेन बाध्यते । तत्पूर्वकत्वात् अनुमानस्य । अन्यथाऽनुमानपूर्वकत्वेऽनवस्था स्यात् । ततः सिद्धमबाधितं प्रत्यभिज्ञाप्रत्यक्षं ।

§२९. किञ्च, यदि नियतव्यक्तिसंबद्धेन्द्रिय[9]जनितं प्रत्यक्षं[10] नातीतादिपर्यायात्मकद्रव्य-ग्राहि स्यात्, तदा[11] यदेतत् सुप्रसिद्धं वह्न्यनुमानं तदपि न स्यात् । तद्धि महानसादिव्य-वस्थितधूम[12]धूमध्वजसंबद्धे[13]न्द्रियजनितप्रत्यक्षेण अशेषत्रैलोक्योदरविवरवर्तिधूमवह्निविशेष-व्यवस्थिततिर्यक्सामान्ययोर्व्याप्तिग्रहणे सति प्रवर्तते[14] । तच्चेन्द्रियसंबद्धवस्तुमात्रविषयप्रत्य-क्षतायां न स्यात् । तस्माद् यथा प्रत्यक्षं व्याप्तिग्राहकम् अशेषविशेषात्मकतिर्यक्सामान्यग्राहि तथा प्रत्यभिज्ञाप्रत्यक्षं ऊर्ध्वतासामान्यग्राहीति । न च लूनपुनर्जातकेशादिष्वेकत्वमन्त-रेणोत्पद्यमानं भ्रान्तमिति वाच्यम् । तत्रापि सामान्यस्य सद्भावात्[15] । न चैकत्र भ्रान्तं प्रत्यक्षं सर्वत्र भ्रान्तमिति वाच्यम् । तस्मात् सिद्धं नित्यानित्यात्मकं वस्तु । तत्सिद्धौ च सदसदात्मकं सामान्यविशेषात्मकं उत्पादव्ययध्रौव्यात्मकं च सिद्धम्, विशेषोत्पाद-विनाशानामनित्यत्वेऽन्तर्भावात्, अन्येषां नित्यत्वे इति ।

§३०. न चैतद्वाच्यम्—

"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ।
चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥" [प्रमाणवा० ३.१८१,१८२]

पर्यायनयस्याप्यभ्युपगमात् । अत एव सप्तभङ्गी सिद्ध्यति । तथा हि—यदा द्रव्यस्य प्राधान्यं[16] विवक्ष्यते तदा 'स्यादस्ति' इति कथ्यते । यदा पर्यायाणां तदा 'स्यान्नास्ति'

---

१. नैकदे मु० क० । २. °णवः किन्तु° ब० । ३. अर्थाधीना° मु० क० । ४. संबन्धेन्द्रि° मु० क० । ५. प्रत्यक्षतीति क० । प्रत्यक्षमिति मु० । ६. परिच्छिदद्दुत्प° मु० क० । ७. °मानमनु° मु० । °मानबाधामनु° क० । ८. °भिज्ञाभ्रान्ततेति क० । ९. संबन्धेन्द्रि° मु० । १०. °जनितप्र° क० । ११. तद्यते-तत् मु० क० । १२. °स्थितधूमध्व° मु० क० । १३. संबन्धेन्द्रि° मु० क० । १४. सति वर्तते मु० क० । १५. सत्त्वात् मु० । १६. प्राधान्यविवक्षा तदा क० । प्रधानविपक्षा तदा मु० ।

इति। यदा युगपदुभयप्राधान्यप्रतिपादनं[1] विवक्ष्यते तदा 'अवक्तव्यम्'। एते सकलादेशाः[2]। तत्संयोग एवापरे चत्वारो भङ्गा भवन्ति। ते च स्वावयवापेक्षया विकलादेशाः। तद्यथा—अस्ति च नास्ति च। अस्ति चावक्तव्यं च। नास्ति चावक्तव्यं च। अस्ति च नास्ति चावक्तव्यं च इति नापरभङ्गसम्भवः। [३५]

§ १. एवं संख्या-लक्षण-गोचरविप्रतिपत्तिं निराकृत्येदानीं फलविप्रतिपत्तिं निराकुर्वन्नाह—प्रतीतेस्तु फलमिति।

**प्रतीतेस्तु फलं नान्यत् प्रमाणं न ततः परम्।**
**अताद्रूप्येऽपि योग्यत्वान्नियतार्थस्य वेदनम्॥ ३६॥**

§ २. 'तु' पुनरर्थे। फलं पुनः प्रमाणस्यार्थाधिगतिरेव नान्यदिति, [3]तद्धि ज्ञानान्तरं वा स्यात् प्रवृत्तिर्वा अर्थक्रियाप्राप्तिर्वेति?। तत्र न तावत् ज्ञानान्तरम्[4]। तद्धि प्रमाणाद्भिन्नविषयं वा स्यात्, अभिन्नविषयं वा?। यदि भिन्नविषयं तदा[5] किं केन संगतम्?। एवं हि घटज्ञानस्यापि[6] पटज्ञानं फलं स्यात्। अथाभिन्नविषयम्। तदा साधितक्रिये कर्मणि अविशेषाधायि किं कुर्वत् साधनं स्यात्?। निश्चयमिति चेत्; न, प्रमाणस्यैव निश्चयात्मकत्वात्[7]। अथानिश्चयात्मकं प्रमाणं तर्हि निश्चय एव प्रमाणमस्तु। किं तेन निश्चयकरणात्?। तदपि चेत्; चक्षुरादिकमस्तु। न[8] चानिश्चयात्मकप्रमाणवादिभिरपि निश्चयः फलमिष्यते। तन्न ज्ञानान्तरं फलमिति।

प्रमाण-फलस्य व्यवस्था।

§ ३. नापि प्रवृत्तिप्राप्ती, तयोः पुरुषसाध्यत्वात्। उक्तं च शास्त्रकारैः—"नहि प्रमाणं गले गृहीत्वा पुरुषं प्रवर्तयति नाप्यर्थमुत्पाद्य अर्पयति[9] किन्तु अर्थपरिच्छेदकत्वमेव प्रवर्तकत्वं[10] प्रापकत्वं च" इति। तस्मादर्थाधिगतिरेव फलम्।

§ ४. प्रमाणमपि न ततः प्रतीतेः[11] परं, किन्तु प्रतीयतेऽनेनेति[12] प्रमाणं प्रतीतिरेव[13]। एतदुक्तं भवति—नात्मनः परमार्थेन प्रमाणं भिद्यते किन्तु[14] आत्मैव ज्ञानावरणक्षयोपशमवान्[15] प्रमाणं, स एव प्रतीतिरूपत्वात्[16] फलमिति।

§ ५. आकारः प्रमाणमिति चेत्; न, अर्थाकारतायां ज्ञानस्य जडता स्यात्। अथ नीलाद्याकारतैव अर्थाद्भवति न[17] जडता। यदि नीलपरमाणुरूपता तदा कथं न जडता?। अथापरमाण्वात्मके विज्ञाने नील[18]प्रतिबिम्बमात्रमेव भवति। यथाऽनीलात्मके स्फटिके नीलादिति। तदसत्। यतो न स्फटिकस्यापि नीलपरमाणुपरिणतेरन्यत् प्रतिबिम्बमिति।

§ ६. किञ्च, कारणत्वाद् यथा अर्थाकारो[19] भवति तथा चक्षुरादेरपि स्यात्। अयोग्यत्वात् न इति चेत्; तर्हि योग्यतैवास्तु किमाकारेण?। तेन यदुक्तम्—"आकारमन्तरेण[20]

---

१. °पादनविवक्षा मु० क०। २. सकलदिशाः मु०। ३. तद्विज्ञा मु० क०। ४. ज्ञानान्तरप्रमाणान्तरम्। तद्धि प्रमा° क०। ५. तर्तिक मु०। ६. °स्यापि पटज्ञानस्यापि पटज्ञानं फलं क०। ७. निश्चयात्मकं प्रमाणं मु० क०। ८. °मस्तु निश्चया° मु० क०। ९. अर्थयति मु०। १०. °कत्वं च प्राप° क०। ११. प्रतीतेऽपरं मु०। १२. प्रतीयन्ते अ० ब०। १३. प्रतीतेरेव मु० क०। १४. किञ्चात्मैव मु०। १५. पसंभवात् मु०। १६. °रूपः फलं ब० क०। °रूपफलं मु०। १७. °वति जडता मु० क०। १८. नीलात् प्रतिबन्धमात्रमेव अ० ब०। १९. अर्थादाकारो क०। २०. °न्तरे प्रति° मु०।

प्रतिकर्मव्यवस्था न स्यात्" इति तन्निरस्तम्। ज्ञानमेव हि नियतार्थग्रहणे योग्यमस्तु किमाकारेणेति। एतदेवाह—अताद्रूप्येपीत्यादि[1]।

§७. यस्मादाकारवादिनापि वस्तुस्वाभाव्यं आकारग्रहणे[2] ज्ञानस्याभ्युपगतम्। तस्मात् तदेव नियतार्थग्रहणे ज्ञानस्यास्तु किं व्यवधिना?। न च स्वाभाव्यमहेतुकम्। किन्तु कर्मणः क्षयोपशमवैचित्र्याद् आत्मैव नियतार्थज्ञानाकारतया[3] परिणमंस्तांस्तानर्थान्[4] प्रतिपद्यते इति स्थितम्।

> इत्यन्यलक्षणतमःपटलं निरस्य प्रत्यक्षमक्षिसमसुज्ज्वलदर्शनाय।
> श्रीसिद्धसेनघटितस्फुटगीःशलाकां शुद्धामवाप्य विमलं विहितं मयैतत्॥ [३६]

॥ इति श्रीशान्त्याचार्यविरचितायां[5] वार्तिकवृत्तौ प्रत्यक्षपरिच्छेदः॥

## ३. अनुमानपरिच्छेदः।

§१. एवं प्रत्यक्षस्य संख्या-लक्षण-गोचर-फलविप्रतिपत्तिं निराकृत्य इदानीं परोक्षस्य तां निराकर्तुमाह—पूर्वमेव परोक्षस्य इत्यादिना।

**पूर्वमेव परोक्षस्य विषयः प्रतिपादितः।**

§२. अनुमान-शाब्दलक्षणस्य[6] परोक्षस्य 'अ[वि]स्पष्टास्त एव स्युः' [का० २३] इत्यादिना विषयोऽस्पष्टादिरूपः प्रतिपादितः न सामान्यम्, नाप्यन्यापोह इत्यर्थः। तथा हि—सामान्येऽर्थक्रियाशून्येऽनुमानादेः प्रतीयमानेऽपि नार्थक्रियार्थी ततः प्रवर्तेत[7]।

§३. अथ कामर्थक्रियां सामान्यं न करोति?। यद्यन्यसाध्याम्, तदा अन्योऽप्यर्थक्रियाकारी न स्यात्। न हि नीलमपि पीतसाध्याम् अर्थक्रियां करोति। अथ स्वसाध्यां तदा अभिन्नज्ञानाभिधानलक्षणां करोत्येव। कथमर्थक्रियाशून्यं सामान्यमिति?। यद्येवं सुतरां न प्रवर्तेत, तत्प्रतीतिकाल एव तदर्थक्रियायाः सिद्धत्वादिति। न चाभिन्नज्ञानाभिधाने सामान्यसाध्ये, तयोरसामान्यदर्शिनोऽपि छात्रविकल्पेषु भावात्। न चैकान्तनित्यस्य स्वविषयज्ञानोत्पत्तावपि सामर्थ्यमस्तीत्युक्तम्।

§४. अथ तत्प्रतीयमानं विशेषेषु प्रवर्तयति। तदसत्। न हि अन्यस्मिन् प्रतीयमाने अन्यत्र प्रवृत्तिर्युक्ता, अतिप्रसंगात्। संबन्धात् प्रवृत्तिरिति चेत्। नैतदस्ति। न ह्येकभ्रातृप्रतीतौ द्वितीयप्रवृत्तिर्दृश्यते। अथ सामान्यं विशेषैर्विना न संभवति तेन तेषु प्रवर्तयति। ननु सामान्यं किम् अविशिष्टं प्रतीयमानं विशेषेषु प्रवर्तयति किं वा विशिष्टमिति?। यद्यविशिष्टं तदा तत् सामान्यं प्रतीयमानं विशेषमन्तरेणानुपपद्यमानं सलिलादावपि प्रवर्तयेत्।

§५. अथ विशिष्टं तदा वैशिष्ट्यं वक्तव्यम्। किं तत्र समवायः, किं वा 'तस्येदम्' इति प्रतीतिरिति?। न समवायः, तस्य निरस्तत्वात्। साधारणस्य च समवायस्य न विशेषकारित्व-

---

१. अतद्रूपेपी° मु०। अताद्रूपोऽपि क०। २. °ग्रहणाज्ञा° मु०। ग्रहणात् ज्ञा° क०। ३. °कारः तथापरि° मु०। ४. परिणतस्तांस्तान्° ब०। ५. श्री अ० ब० क०। ६. शब्दल° ब० मु० क०। ७. प्रवर्तते अ०।

मिति। द्वितीये तु पक्षे इतरेतराश्रयत्वम्। तथा हि – विशिष्टसामान्यप्रतीतौ विशेषप्रतीतिः, तत्प्रतीतौ विशिष्टसामान्यप्रतीतिरिति। किं च 'तस्येदम्' इति प्रतीतावपि नियतदेशविशेषाप्रतीतौ नानुमानादेः प्रवर्तेत। व्याप्तिग्रहणकाले च वह्न्यादिसामान्यस्य सिद्धत्वात् गृहीतग्राहित्वेन च प्रामाण्यं न स्यात् इति। विशेषोऽपि सामान्येन प्रतीयत इति चेत्; सामान्येन इति कोऽर्थः?। किं सामान्यमेव सामान्यं प्रतीत्य प्रतीयते किं वा विशेष इति?। यदि सामान्यं तदा तेनापि पुनरन्यत् सामान्यं ततोऽप्यन्यदिति अनवस्था। नापि विशेषः, क्रमाननुभवात्।

§६. अथ नास्ति लक्षणा किन्तु युगपदुभयं प्रतीयते। नैतस्ति, उभयाप्रतीतेः। न हि एकं दण्डायमानं सामान्यम्, अपरो विशेषः तत्र लक्ष्यते। उक्तञ्च।

"दोहिं वि णएहिं नीयं सत्थमुलूएण तह वि मिच्छत्तं।
जं सविसयप्पहाणत्तणेण अन्नोन्ननिरवेक्खा॥" [सन्मति ३.४९]

अथाभिन्नसामान्यप्रतीतौ नियतदेशविशेषप्रतीतिः। एवं हि अशेषविशेषप्रतीतिरपि स्यात्। तथा हि – यद् यस्मादभिन्नस्वरूपं तत् तस्मिन् प्रतीयमाने प्रतीयते। यथैकव्यक्तिसामान्यप्रतीतौ व्यक्त्यन्तरसामान्यम्। अभिन्नस्वरूपं च व्यक्त्यन्तरमिति। कृष्णादेर्विशेषणस्याप्रतीतिरिति चेत्; न, विशेषणानामभेदे प्रतीतिः स्यात्। भेदेऽप्युपाधिमति निश्चीयमानेऽशेषोपाधीनामपि निश्चयः स्यात्। तस्मादभिन्नसामान्यप्रतीतौ अशेषव्यक्तिप्रतीतिर्भवेदिति।

§७. किञ्च, –

"कस्मात् सास्नादिमत्स्वेव गोत्वं यस्मात् तदात्मकम्।
तादात्म्यमस्य कस्माच्चेत् स्वभावादिति गम्यताम्॥" [श्लोकवा० आकृ० ४७]

एवमभ्युपगममुपदर्श्य दूषयति –

"व्यक्तिजन्मन्यजाता चेद् आगतानाश्रयान्तरात्।
प्रागासीन्न च तद्देशे सा तया संगता कथम्॥
व्यक्तिनाशे न चेन्नष्टा गता व्यक्त्यन्तरं न च।
तच्छून्ये न स्थिता देशे सा जातिः क्वेति कथ्यताम्॥
न याति न च तत्रासीत् अस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाधारम् अहो व्यसनसंततिः॥"

एवं तादात्म्यपक्षोपि न युक्तः। तस्माद्विशेषा एव समानपरिणामवन्तोऽस्पष्टाः परोक्षस्य विषया इति। ननु विशेषविषयत्वेऽनुमानादेः कथं न तार्णादेः प्रतीतिः?। न, दूरप्रत्यक्षेऽपि तस्याऽप्रतीतेः। तदेवं न सामान्यं विषयः।

§८. नाप्यन्यापोहः। स हि पर्युदासरूपो वा स्यात् प्रसज्यरूपो वा?। प्रथमपक्षे वस्त्वन्तरमेव स्यात्। तच्च सामान्यं वा विशेषो वेति विधिरेव शब्दार्थः स्यात्। द्वितीये तु निषेधमात्रमेव प्रतिपाद्यते। तस्य च शब्दाद्यर्थत्वमयुक्तम्, अप्रतीतेः।

अपोहनिरासः।

---

१. वृक्षादि° अ० ब०। २. °वस्था अथ मु० क०। ३. लक्षणं मु० क०। ४. अविशेषविशे° क०। ५. °ममेदप्र° ब० मु० क०। ६. दूषयन्ति मु० क०। ७. सामान्यपरि° क०। ८. विषय इति क०।

तथाहि—परप्रतिपादनार्थं तस्य प्रयोगः। परस्तु नीलाद्यर्थी नानीलनिषेधमात्रं जिज्ञासति। प्रतिपादकोऽपि तथैव प्रतिपादयति। अजिज्ञासितं प्रतिपादयन्न प्रेक्षा[1]पूर्वकारी स्यात्।

§ ९. अथ 'किम् आनयामि' इति जिज्ञासायाम् अनीलमपि जिज्ञासितं नीलमित्युक्ते निषिध्यते[2]। नैव[3] प्रतिपाद्यस्य विधावेव जिज्ञासा न [4]निषेधमात्रे। प्रतिपादकोऽपि तथैव प्रतिपादयति। सामर्थ्यादन्यप्रतिपत्तिरिति। नैतदस्ति, प्रतिपाद्यस्य सामान्येन विधावेव जिज्ञासा न प्रतिषेधमात्रे। [5]विधिप्रतिपत्तौ सामर्थ्यादन्यप्रतिषेध इति।

§ १०. किञ्च, अयमपोहो भावे भावस्य वा प्रतीयते[6] केवलो वा?। प्रथमपक्षे भावयोः प्रतीतिः किं तेनैवानुमानादिना, किं वा प्रमाणान्तरेण?। यदि तेनैव तदा किं भावौ प्रतीत्य प्रतीयते किं वाऽपोहं[7] प्रतीत्य ताविति?। न तावत् प्रथम[8]पक्षः। नहि नीलशब्देन अनीलं प्रतीयते। प्रतीयमानत्वे वा कथं तन्निषेध इति?। नीलं च[9] प्रतीत्य अनीलापोहं[10]प्रतीतौ स्खलन्ती[11] प्रतीतिः स्यात्। अथ नील[12]मेव अनीलापोहात्मकं प्रतीयमानमुभयव्यवहारं रचयति; तर्हि आयातोऽस्मत् पथमिति। नापि द्वितीयः पक्षः। नहि केवलोऽपोहः प्रतीयते पश्चात्ताविति, अननुभवात्। नापि प्रमाणान्तरं किंचित् तत्र अनीलप्रत्यायकमस्ति, येन तदपोहः प्रतीयेत। न चाभावेन भावस्य कश्चित्संबन्धः संभवति इत्युक्तम्। तस्मान्न भावसंबन्धित्वेनापोहस्य प्रतीतिरिति। केवलस्य च तस्य[13] प्रतीतौ सर्वशब्दानां पर्यायता स्यात्, लिङ्गलिङ्गिनोरभावश्च भवेत्। तथाहि—यदेव लिङ्गशब्दवाच्यम् तदेव लिङ्गिशब्दस्यापि। तथा विशेषण-विशेष्यभावोऽपि न स्यात्। असत्त्वं[14] च जगति[15] न किंचिदस्ति यदपोहेन[16] सत्त्वाख्यं साधनं भवेत्।

§ ११. अथासत्यपि बाह्ये वासनानां नानात्वात् तज्जनितानां ध्वनीनां न पर्यायतेति। तन्न, वासनानामपि नानात्वानुपपत्तेः। ता हि अनुभवनिबन्धनाः। एकरूपस्य चापोहस्य[17] प्रतीतौ कथं वासनानाम[18]पि नानात्वमिति। तथा, अकाला[19]पोहस्यैकरूपत्वादतीतानागतवर्तमानताव्यपदेशा नोपपद्येरन्निति। अक्रियानिषेधस्य वा[20] भावैकरसस्य सद्भावे अकार्षीत् करोति करिष्यतीति च व्यपदेशानुपपत्तिरिति। वचनलिङ्गभेदश्च न स्यात्। तथा, सर्व-प्रमेया[21]दिशब्दानामसर्वादेर्[22]भावात् अपोह्याभावेन अपोहवाचकत्वं न स्यात्। अपि च, अपोहः किम् आश्रितः, अनाश्रितो वा?। अनाश्रितत्वे न कस्यापि। आश्रितत्वे गुणो वा स्यात् सामान्यं वा भवेत्। तथा हि—यदि प्रतिव्यक्त्यनेकस्तदा गुणः। अथैकः तदा सामान्यमिति।

§ १२. अथा[23]पोह्यते अनेन इति ज्ञानाकारः, अपोह्यतेऽस्मिन्निति स्वलक्षणम्। अपोहनमपोह इति अन्यनिषेधः। तदेवं विधिरूपापोहाभ्युपगमात् निषेधमात्रे यद्दूषणं तदसदिति।

---

१. प्रेक्षाकारी ब० मु० क०। २. निषेध्यते मु०। ३. नैवं क०। ४. न प्रतिषेध° मु० क०। ५. विप्रति° अ०। ६. प्रतीयेत मु० क०। ७. °पोहप्रतीताविति क०। ८. प्रथमः पक्षः क०। ९. नीलं वा प्रती° मु० क०। १०. पोहे प्रती° अ०। ११. संवल° मु०। १२. नीलत्वमेव° मु० क०। १३. च प्रतीतौ मु० क०। १४. स्यात्। अथासत्त्वं अ०। १५. च न किं° मु० क०। १६. यदापो° अ०। १७. चापोहप्र° मु० क०। १८. °नानां नानात्व° क०। १९. तथाकारापोह° क०। २०. °स्य चाभा° ब० मु०। २१. °यातिश° अ०। २२. देव भावात् क०। २३. °मिति। अपोह्यते अनेन, अथापोह्यतेऽस्मि° अ०।

तथाहि—न तावत् सामान्यं शब्दादिविषयः, अविद्यमानत्वात्। नापि स्वलक्षणम्, प्रत्यक्षवच्छाब्देऽप्रतिभासनात्। तदुक्तम्।

"शब्देनाव्यापृताक्षस्य बुद्धावप्रतिभासनात्।
अर्थस्य दृष्टाविव तच्छब्दाः कल्पितगोचराः॥"

इति। नापि ज्ञानम्, तस्यापि स्वलक्षणत्वात्। नापि ज्ञानाकारः। किन्तु स एव दृश्यविकल्प्यावेकीकृत्य बहीरूपतयाऽध्यस्तोऽर्ध[1]पञ्चमाकारः। वैभाषिकाणां तु आकाराभावा[ज्]ज्ञानमेव बहीरूपतयाऽध्यस्तमर्धचतुर्थाकारोऽपोह इति न निषेधमात्रः केवलः, तस्य विधिरूपतया वस्तुनि प्रतीयमाने सामर्थ्यात् प्रतीतेरिति[2]। कल्पिताकल्पिततया स्वपरदर्शनयोर्भेद इति। अतश्च—

"सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः।
स्वभावपरभावाभ्याम् य[3]स्माद् व्यावृत्तिभागिनः॥" [प्रमाणवा० ३.३९]
"त[4]स्माद्यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः॥
त[5]स्माद्यो येन शब्देन विशेषः संप्रतीयते।
न स शक्यस्ततोऽन्येन तेन भिन्ना व्यवस्थितिः॥"
[प्रमाणवा० ३.४०,४१] इति

§ १३. तेन न स[6]र्वशब्दानां पर्यायता। नापि लिङ्गलिङ्गिनोरभावः। विशेषणविशेष्याभावो वा। तथा हि—स्वकारणादेव भावाः सकलसजातीयविजातीयव्यावृत्ता जायन्ते। तेनानेकव्यावृत्त्यात्मकेषु भा[7]वेषु एकव्यावृत्त्या निश्चयेपि व्यावृत्त्यन्तरेणाऽनिश्चिताः। तन्निश्चयाय शब्दलिङ्गप्रयोगो न पर्यायतामाप्नोति। वस्तुभूते चोपाधौ प्रवर्तमानः शब्दः उपाधिमन्तमशेषोपाध्युपकारकं नि[8]श्चाययन्नशेषोपाधीनां निश्चयात् पर्यायतां शब्दान्तराणामापादयेदित्यादयो दोषा वास्तवे शब्दार्थे ग्रन्थकारैः प्रतिपादिताः। तस्माद् अपोहपक्षो ज्यायानिति।

§ १४. अत्रोच्यते—य[9]त्तावदुक्तम् 'दृश्यविकल्प्ययोरेकीकरणमपोहो न तुच्छरूपः' इति। तदेकीकरणं किं तेनैव ज्ञा[10]नेन किं वा ज्ञानान्तरेणेति?। न तावत् तदेव विज्ञानं स्वाकारं दृश्यं च पृथक् प्रतिप[11]द्य ऐक्यं प्रतिपद्यतेऽप्रतीतेः, क्षणिकत्वाच्च। नापि ज्ञानान्तरम्। तद्विभिन्नं[12] वा स्यात्, एकं वा भवेदिति?। भिन्नं कथम् [13]ऐक्यं प्रत्येति?। स्वसंवेदनं हि ज्ञानविषयं, दर्शनं तु दृश्यविषयमिति। एकं तु यदि द्वयं प्रत्येति कथमैक्यं। अथैक्यं प्रत्येति। कथं द्वयोरैक्यमिति?।

§ १५. अथ वासना[14]प्रतिबोधात् विकल्पविज्ञानं सकल[स]जातीयसाधारणम् उत्पद्यते इत्येकत्वग्रहणमुच्यते। न, व[15]स्तुभूतसमानपरिणाममन्तरेण स[16]जाती[17]यविभागानुपपत्तेरिति। एकार्थक्रियाकारित्वात् सजातीयत्वमिति चेत्; क्रियायाः किम् अन्यक्रियैक्यादैक्यम्, किं

१. °स्तोर्ध्वपञ्चप्राकारा वै° क०। °स्तोर्ध्वं पञ्च° मु०। २. प्रतीतिरिति क० मु०। ३. °भ्यां व्यावृत्तिभागिनो यतः—प्रमाणवा०। ४. यतो यतो क० मु० ब०। ५. तस्माद्विशेषो यो येन धर्मेण सं° प्रमाणवा०। ६. न शब्दा° अ०। ७. °केषु एकव्या° मु० क०। ८. निश्चित्याशे° मु० क०। ९. यथावदु मु० क०। १०. तेनैव ज्ञानान्त° क० मु०। ११. प्रतिपाद्य क०। १२. अनेकं अ-टि०। १३. एकम् मु०। १४. वासनाप्रबो° मु० क०। १५. न च वस्तु° क०। १६. सहज्ञा° अ०। १७. °जातीयावि° क०।

वा स्वरूपेणेति?। प्रथमपक्षे अनवस्था। द्वितीये त एव अर्थक्रियाकारिणः किं नैकीभवन्ति?। अभ्युपेतहानिश्चेति। तदेवमत्र बहुवक्तव्यम्। तच्च नोच्यते विस्तरभयादिति। तन्नापोहोऽपि परोक्षस्य विषय इति। [३७[१]]

§१. एवं विषयविप्रतिपत्तिं निराकृत्य इदानीं फलविप्रतिपत्तिं निराकर्तुमाह–**प्रमाणफलसद्भाव** इति।

**प्रमाणफलसद्भावो ज्ञेयः प्रत्यक्षवद्बुधैः॥ ३७॥**

§२. यथैव हि प्रत्यक्षस्य प्रमाणमेव फलम् अर्थाधिगतिरूपं, तदेव च प्रमाणं परिच्छेदकत्वात्, तथा परोक्षस्यापि [२]विज्ञेयमिति। [३७]

§१. संख्याविप्रतिपत्तिं निराकुर्वन्नाह–**परोक्षं द्विविधम्** इति।

**परोक्षं द्विविधं प्राहुर्लिङ्ग-शब्दसमुद्भवम्।**
**लैङ्गिकात् प्रत्यभिज्ञादि भिन्नमन्ये प्रचक्षते॥ ३८॥**

§२. अक्षाणां परं **परोक्षम्**। [३]पारस्करादित्वात् सुडागमः। द्वौ विधौ प्रकारावस्येति **द्विविधम्**। द्वैविध्यमेवाह–**लिङ्गशब्दसमुद्भवम्** इति। लिङ्गजनितं, शब्दजनितमेव परोक्षार्थनिश्चायकं नान्यदिति।

§३. नन्वन्यदपि प्रत्यभिज्ञादिकं परोक्षं मन्यन्ते। तदेवाह–**लैङ्गिकात् प्रत्यभिज्ञादि भिन्नमन्ये प्रचक्षते**–समानतन्त्राः, "परोक्षं प्रत्यभिज्ञादि त्रिधा श्रुतमविप्लवमिति" वचनात् इति। तदयुक्तम्। यतः श्रौतं त्रिविधं भवति। न त्वविप्लवम्। तथा हि–प्रत्यक्षेण परोपदेशसहायेन यज्जन्यते ज्ञानं तच्छ्रौतम् प्रत्यक्षपूर्वकम्। तथा लिङ्गेन परोपदे[४]शसंहितेन जनितं श्रौतं लिङ्गपूर्वकम्। परोपदेशेन तु केवलेन जनितम् [५]शब्दपूर्वमिति। एवं त्रिविधं भवति श्रौतम्। न त्वविप्लवं प्रमाणमित्यर्थः। प्रत्यक्षे हि परोपदेशस्यानर्थकत्वात्। अथ तत्रापि किंचित् परोक्षम्। तर्हि तत्रानुमानमेव स्यात् तथा हि–परोक्षं [६]हि वस्तु न साक्षात् प्रतीयते किन्तु अन्यदर्शनात्। अन्यस्माच्च यदि अनियतात् प्रतीयेत तदा यतः कुतश्चित् सर्वं प्रतीयेत। नियताच्च प्रतीतौ [७]लैङ्गिकमेव। तत्र [८]यदक्षानुसारि प्रत्यभिज्ञानं तत् प्रत्यक्षमेव। न श्रौतम्। यत्तु प्रत्यक्षानिश्चितम् दृष्टसाधर्म्याद् अर्थक्रियाकारित्वं निश्चीयते तल्लैङ्गिकमेवेति कुतस्त्रिविधं परोक्षमिति? [३८]।

(अकलङ्कमतस्य निरासः।)

§१. अथायमपि वह्निर्दाहादिसमर्थ इति सामर्थ्यविषयं प्रत्यभिज्ञानं न प्रत्यक्षम्, सामर्थ्यस्य परोक्षत्वात्। नाप्यनुमानम्, व्याप्तिस्मरणाद्यननुभवात्। तस्मात् प्रमाणान्तरमिति। तदयुक्तम्। यस्मात् न सामर्थ्यं वह्नेरन्यत्। ततः प्रत्यक्षेण तत्स्वरूपनिश्चयादेव सामर्थ्यस्य निश्चयात्। यो हि[९] दाहिकां शक्तिं न जानाति स वह्निमपि। तत् स्वरूपापहारे भिन्नं सामर्थ्यमिति चेत्; न, मन्त्रादेः तथाभूतस्यैव वह्निस्वरूपस्य पर्यायस्योत्[१०]पत्तेरिति। [११]भवतु वा सामर्थ्यम्। तन्निश्चयो मूढस्य दृष्टसाधर्म्यादनुमानमेव

(प्रत्यभिज्ञाविचारः।)

१. तदेव प्रमाणं अ० ब०। २. विज्ञानमिति अ० क०। ३. पारस्क° मु०। ४. °देशरहि° मु०। ५. शब्दपूर्वकमिति मु०। ६. परोक्षं वस्तु अ० ब०। ७. प्रतीतिर्लैङ्गिकमेव ब० मु०। प्रतीतिर्लौकिकमेव क०। ८. यदाक्षा° क०। ९. यो दाहि° क०। १०. °त्पत्तिरिति क०। ११. भवतु साम° क० म०।

इत्युक्तम् । व्याप्त्यस्मरणं तु क्वचिदकस्माद् धूमदर्शनात् वह्निप्रतिपत्तौ अपि दृष्टम् । अथ अर्थित्वात् पूर्वमेव सर्वस्य कृतत्वात्[1] तथा प्रतिपत्तिः । अत्रापि समानम् ।

§ २. किञ्च, किं तत् प्रमाणान्तरम् ? । श्रौतमिति चेत्; किमिदं श्रौतम् ? किं शब्दविषयम्, किं वा शब्दोल्लेखीति ? । प्रथमपक्षे श्रोत्रेन्द्रियज्ञानं सकलमेव श्रौतम् स्यात् । तच्चागमविरोधीति । तथा हि–अष्टाविंशतिभेदमतिज्ञानाभिधायी जिनागमः । स चैवं त्यक्तः स्यात् । अथ शब्दोल्लेखि । एवमपि मतिज्ञानम् श्रौतं स्यात् । सविकल्पकं च सकलं प्रमाणं प्रसज्येत[2] । तन्नेदं श्रौतस्य लक्षणम् । किं तर्हीत्याह–**परोपदेशजं श्रौतम्** इति ।

**परोपदेशजं श्रौतं मतिं शेषं जगुर्जिनाः ।**
**परोक्षं प्रत्यभिज्ञादि त्रिधा श्रौतं न युक्तिमत् ॥ ३९ ॥**

§ ३. परस्मै परस्मादुपदेशः **परोपदेशः**[3] । तस्माज्जातं यत् ज्ञानं तत् **श्रौतं जगुर्जिनाः** । तथा चागमः ।

"सुयकारणं जओ सो सुयं च तक्कारणं तउ[4] तम्मि ।
कीरइ सुओवयारो सुयं तु परमत्थओ जीवो ॥" [ विशेषा० ९९ ]

अस्यायमर्थः–श्रौतस्य ज्ञानस्य कारणं यतः स इति शब्दः । श्रौतं वा तत्कारणं तस्य शब्दस्य हेतुः । ततः तस्मिन् शब्दे क्रियते श्रुतोपचारः । कारणे कार्योपचारात्[5] कार्ये वा कारणोपचारादिति । परमार्थतस्तु[6] जीव एव[7] श्रुतमिति । ज्ञानस्य जीवात् कथंचिदभिन्नत्वादिति ।

§ ४. नन्वनेन शब्दस्य जन्यं[8] जनकं वा ज्ञानं श्रुतमभिहितम्, न तु सकलमेव परोपदेशजम्, शरीरचेष्टालक्षणेन उपदेशेन जनितस्यासंग्रहात् । न, शब्दस्योपलक्षणत्वात् । यद्वा सापि शब्द एव इत्याह ।

"सो[9] च्चिय सद्दत्थो च्चिय जं तंमि कयंमि पच्चओ होति ।
कत्ता वि हु तदभावे[10] तदभिप्पाओ कुणति[11] चेट्ठं ॥" [ विशेषा० १७५ ]

अयमर्थः । सापि[12] च हस्तादिसंज्ञा परबोधनाय क्रियमाणा[13] शब्दस्थाने प्रयुक्तत्वात् शब्दार्था । शब्दस्य अर्थो यस्याः सा शब्दार्था । शब्द एवेत्यर्थः । कुत एतदित्याह–यत् तस्यां कृतायां प्रत्ययो भवति प्रतिपाद्यस्य । चेष्टायाः स्त्रीलिङ्गत्वेऽपि प्राकृतत्वात् लिङ्गव्यत्ययः । एतदेव समर्थयति–कर्तापि चेष्टायाः । हुरिति यस्मादर्थे । यस्मात् कर्ताऽपि तदभावे[14] शब्दाभावे मूकत्वात् । तदभिप्रायः शब्दार्थप्रतिपादनाभिप्रायः । करोति चेष्टाम्[15] हस्तादिलक्षणाम्[16] इत्यर्थः । तस्मात् परोपदेशजं श्रौतमिति । तेन[17] क्वचित् शब्दाभावेऽपि श्रौतम् । सत्यपि च शब्दे शब्दोल्लेख्यपि कश्चिन्न[18] श्रौतमिति । अत एव आह । **मतिं** [19]**शेषमिति** । अपरोपदेशशब्द[20]जनितां मतिं प्रतिपादयन्ति स्म । "श्रुतनिःसृता च" इति वचनात् ।

---

१. कृतकत्वात् अ० ब० मु० । २. प्रसज्यते अ० ब० । ३. °दुपदेशः तस्मा° मु० । ४. °रणं वितो तम्मि–विशेषा० । ५. कार्योपचारादिति अ० ब० । ६. °मार्थतः जीव° मु० क० । ७. जीवः श्रौतमिति मु० क० । ८. जनकत्वं जन्यं वा । ९. सा वा सद्दत्थो च्चिय तया वि जं तम्मि पच्चओ होइ विशेषा० । १०. तदभावेपि तद° क० । ११. कुणइ चिट्ठं विशेषा० । १२. सा च मु० क० । १३. °माणश° मु० । १४. तदाभावे अ० । १५. चेष्टा ह° मु० क० । १६. °क्षणा इत्यर्थः मु० क० । १७. तन्न क्व° अ० । तेन शब्दा° मु० । १८. कश्चिन्नाश्रौ अ० ब० मु० । १९. शेषामिति अ० ब० क० । २०. °पदेशजनितां अ० ।

§५. तस्मात् यदि प्रत्यभिज्ञा आप्तोपदेशजनिता तदा प्रत्यक्षार्थविषयत्वात् न प्रमाणान्तरम्। अथानाप्तजनिता तदा च्छात्रविकल्पवत् न प्रमाणमिति निगमयन्नाह–**परोक्षं प्रत्यभिज्ञादि** इति। प्रमाणभूतं श्रौतं [1]त्रिधेति न युक्तियुक्तमिति। [३९]

§१. आगमबाधामाह–**अन्यथेहादिकम्**िति।

**अन्यथेहादिकं सर्वं श्रौतमेवं प्रसज्यते।**
**यच्चोक्तं नागमापेक्षं मानं तज्जाड्यजृम्भितम्॥ ४०॥**

§२. यदि सविकल्पकं सकलमेव श्रौतं तदा **ईहादि** आदिग्रहणात्[2] अवायोहादिपरिग्रह इति। सकलमेव शब्दोल्लेखित्वात् **श्रौतं** स्यादिति।

§३. अथ क्वचिदागमत्यागोऽपि, यथा इन्द्रियै[3]ज्ञानं परोक्षमपि प्रत्यक्षं प्रत्यपादीति। तदयुक्तम् इत्याह–**यच्चे**[4]त्यादि। तद् दिगम्बराणां जाड्यविलसितम्। तथा हि–सकलवस्तुज्ञानापेक्षया परोक्षमिन्द्रियज्ञानमुक्तम्। न त्वेकस्मिन्नंश इति। तत् स्थितम् द्विधा श्रौतमिति। [४०]

§१. एवं द्वैविध्यं व्यवस्थाप्य इदानीं लैङ्गिकं परोक्षं व्याख्यातुमाह–**लिङ्गाल्लिङ्गिनि** इत्यादि।

**लिङ्गाल्लिङ्गिनि यज् ज्ञानमनुमानं तदेकधा।**
**प्रत्येति हि यथा वादी प्रतिवाद्यपि तत् तथा॥ ४१॥**

§२. **लिङ्गात्** लिङ्गविषयमपि ज्ञानं भवति इति लिङ्गिग्रहणम्। **लिङ्गि**न्यपि तद्देशस्थितस्य

अनुमाननिरूपणम्।

प्रत्यक्षं भवतीति लिङ्गग्रहणम्। ननु तस्य तल्लिङ्गि[5]न्येव न भवति, यस्य तु लिङ्गि तस्य न[6] लिङ्गमन्तरेण तत्र ज्ञानमिति किं लिङ्गग्रहणेन?। ये लिङ्गमेवानुमानं मन्यन्ते तन्निरासार्थं लिङ्गग्रहणमिति। **लिङ्गात् यत् लिङ्गिनि ज्ञानं तदनुमानं** न लिङ्गमेवेत्यर्थः। यद्येवं तदा लिङ्गिनि ज्ञान[7]मित्येवास्तु। अनेन हि तत् सुनिरस्तं भवति। न, एवं हि प्रतिपत्तिगौरवं स्यात् इति लिङ्गग्रहणमिति।

§३. स्वार्थपरार्थभेदेन द्वैविध्यं प्रतिपन्नाः तन्निरासार्थमाह–**तदेकधे**ति। एकप्रकारैव परोक्षार्थस्य प्रतिपत्तिरिति। तदेवाह–**प्रत्येति हि यथा वादी प्रतिवाद्यपि तत् तथा**–इति। **हि**र्यस्मादर्थः। यस्मादन्यथानुपपन्नाल्लिङ्गात् **यथा** स्वयं **वादी** परोक्षं वस्तु **प्रत्येति प्रतिवाद्यपि तथैव तत्** स्वयं निश्चितात् लिङ्गात् प्रत्येति न परवचनादिति। तथा हि–परवचनं यदि प्रमाणं तदा किं त्रिरूपवचनेन?, प्रतिज्ञामात्रेणैवार्थसिद्धेः[8]। अथाप्रमाणं तदा कथं ततो लिङ्गप्रतिपत्तिर[9]पि?। अथ प्रत्यक्षमेव तत्र प्रमाणं 'पश्य मृगो धावति' इतिवत्[10] संमुखीकरणादनुमानत्वम्। न, अक्षिनिकोचादेरपि स्यात्। [४१]

§१. अथ शब्दस्य सर्वथाऽप्रमाणत्वात् अनुमानोपचारात् प्रामाण्यं नान्यथेति ख्यापनार्थमित्याह–**उपचारेण चेत् तत् स्यादि**ति।

---

१. त्रिविधेति अ० ब०। २. °णादपोहादिपरि° ब० मु० क०। ३. इन्द्रियजं ज्ञानं मु०। ४. यथेत्यादि मु० क०। ५. तल्लिङ्गमेव मु०। ६. तस्य लिङ्गमन्तरेण न तत्र अ०। ७. °मित्यवस्तु क० मु०। ८. सिद्धिः क०। ९. °रिति अ० ब० मु०। १०. इति तत्सं° अ० क० मु०।

**उपचारेण चेत् तत् स्यादनवस्था प्रसज्यते ।**

§२. यद्यनुमानोपचार[1]मात्रेण अनुमानत्वं वचनस्य तदा पुरुषादेरपि स्यादित्याह– **अनवस्थैवं प्रसज्यत** इति । **उपचारेण** प्रामाण्ये यत्किंचिदिति दधिभक्षणादिकमपि अनुमानं स्यादिति । शब्दस्य चाप्तप्रणीतत्वेन प्रामाण्यस्य प्रतिपादयिष्यमाणत्वादिति । तस्मादे[2]कैधैवानुमानमिति । [ ४२[१] ]

§१. इदानीं अवयवान्तरनिरासेन यस्यावयवस्य साधनाङ्गत्वं तदाह–**अन्यस्ये**त्यादि ।

**अन्यस्यासाधनादाह लक्षणे(णं) हेतु-साध्ययोः ॥ ४२ ॥**

§२. अन्यस्योपनयनिगमनादे[3]रसाधनादिति असाधनाङ्गत्वादित्यर्थः, **हेतुसाध्ययोरेव लक्षणमाह** ।

§३. ननु प्रतिज्ञामन्तरेणापि पक्षधर्मसंबंधस्मरणादेव साध्यसिद्धेः किं तल्लक्षणकथनेन ?।

प्रतिज्ञायाः साधनाङ्गत्वम् ।

तथा हि–साध्यवचनं यदि प्रमाणं तदा किं हेतूपन्यासेन ? । अथाप्रमाणं तदा किं तद्वचनेनेति ? । अथ प्रतिज्ञामन्तरेण 'यत् कृतकं तदनित्यम्' इति उक्ते न ज्ञायते किमयं साधर्म्यवान् प्रयोगः किं वा वैधर्म्यवानिति ? । तत्र 'अनित्यः शब्दः' इत्युक्ते[4] साधर्म्यवान् प्रतीयते। 'अकृतकः शब्दः' इति तु वैधर्म्यवानिति । नैतदस्ति । पक्षधर्मवचनाद्धि तन्निश्चयात् । तथा हि–'यत् कृतकं तदनित्यम्' इत्यभिधाय न कश्चिदास्ते साधनन्यूनताभिधानादेव तस्य निरासात्, किन्तु पक्षधर्मोपसंहारं करोति । तत्र 'कृतकश्च शब्दः' इति यद्यभिधत्ते तदा साधर्म्यवान् प्रतीयते । यदि तु 'नित्यः शब्दः' इति तदा वैधर्म्यवानिति ।

§४. अथ सर्व एव काष्ठादिविषयं व्यवस्थाप्य कुठारादिसाधनं व्यापारयति । तदत्रापि विषयव्यवस्थापनार्थं प्रतिज्ञाप्रयोग इति । न, पक्षधर्मसंबन्धवचनादेव तदर्थस्य गतत्वात् किं प्रतिज्ञाप्रयोगेण ? । किञ्च, स्वार्थानुमाने कोऽसौ साध्यं व्यवस्थापयति ? । अथार्थित्वात् प्रस्तावात् पक्षधर्माद्वा तद्व्यवस्था; परार्थानुमाने तथैवास्तु । एवमसाधनाङ्गत्वात् प्रतिज्ञां साधनान्निरस्यन्ति[5] ।

§५. अत्रोच्यते–यदुक्तम् 'प्रतिज्ञा किं प्रमाण[6]मुताप्रमाणम्' इति तत्र प्रमाणमिति ब्रूमः । तर्हि किं हेतूपन्यासेन ? । आप्तत्वसंदेहे तदुपयोगः । तन्निश्चये[7] तु प्रतिज्ञामात्रादेव साध्यसिद्धेः[8] हेतूपन्यासोऽपि न युक्तः, किं पुनः त्रैरूप्यवचनमिति ? । [ ४२ ]

§१. एतदेव दर्शयितुमाह–**अन्यथानुपपन्नत्वमि**त्यादि ।

**'अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ।**
**नान्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥' ४३ ॥**

§२. एतदुक्तं भवति–आप्तत्वसंदेहे अन्यथानुपपन्नादेव हेतुमात्रात् साध्यसिद्धेः किं

हेतोस्त्रैरूप्यनिरासः ।

त्रिरूपवचनेनेति ? । तथा हि–उपनयनिगमने तावत् सौगतैरेव निराकृते । दृष्टान्ते दृष्टसामर्थ्यस्य हि हेतोः पुनर्धर्मिणि वचनमुपनयं[9] वर्णयन्ति । तच्चा-

१. °नोपकार° क० । २. देकमेवा° अ० । ३. 'गमनादेरस्य अथार्थित्वात् ( पं० २० ) मु० । गमनादेरथार्थित्वात् ( पं० २० ) क० । ४. इत्युक्तसा° ब० । ५. °रस्यति मु० क० । ६. प्रमाणमिति मु० अ० । ७. तन्निश्चये हेतुप्र° ब० । ८. सिद्धिः मु० क० । ९. °नेनेति तच्चायुक्तम् ( पं० २२ ) क० ।

युक्तम् । पक्षधर्मवचनादेव तदर्थस्य गतत्वात् । अथानेन दृष्टसामर्थ्यस्य हेतोः ख्यापनं क्रियते । तन्न, व्याप्तिवचनादेव सामर्थ्यसिद्धेः[2] । यदि चानेन समर्थहेतुख्यापनं क्रियते तर्हि इदमेवाऽस्तु, किं हेतुवचनेन ? । तदेवम् उपनयं निरस्यन्ति । निगमनमपि अयुक्तम् । तथा हि—गृहीतव्याप्तिकस्य हेतोर्धर्मिण्युपसंहारादेव निगमनार्थस्य गतत्वात् किं तेन ? । तदेवं त्रिरूप एव हेतुरिति ।

§ ३. एतद्[3]दूषयन्ति—**यत्र** हेतौ साध्येन विनाऽ**नुपपन्नत्वं** तत्र किं त्रैरूप्येण ? । तदभावे 'स श्यामः, तत्पुत्रत्वात्[4]' इत्यादौ सत्यपि त्रैरूप्येऽगमकत्वादित्याह—**नान्यथेत्यादि** । तथा हि । नित्यानित्यात्मकं सर्वं सत्त्वान्यथानुपपत्तेरिति उक्ते भवत्येवं[5] साध्ये प्रतीतिः । अथ सर्वं नित्यं सत्त्वान्यथानुपपत्तेरित्यपि किं न भवति ? । न[6], व्याप्तेरग्रहणात् ।

§ ४. अथ[7] व्याप्तेर्दृष्टान्ते ग्रहणे सति कथं न त्रैरूप्यम् ? । ननु दृष्टान्ते व्याप्तिग्रहणम् यद्यसाकल्येन तदा बहि[8]र्व्याप्तिग्रहणेऽपि न साध्यधर्मिणि हेतोर्गमकत्वं स्यात् । अथ साकल्येन[9] तदाऽनुमानं गृहीतग्राहित्वादप्रमाणं स्यात् । अथ देशविशेषप्रतीत्यर्थमनुमानम् । तन्न । यत्र यत्र साधनं तत्र तत्र साध्यमिति आधारान्तर्भावेनैव व्याप्तेर्ग्रहणात् कथं न देश[10]विशेषप्रतीतिः ? । अथ आधारसामान्य[11]स्यैव प्रतीतिर्नाधारविशेषस्य । किमिदं सामान्यम् ? किं विवक्षितसाध्यविशिष्टम्, किं वाऽविशिष्टमिति ? । यदि साध्यविशिष्टं तदा कथं न साध्यप्रतीतिः ? । अथाविशिष्टं तदा न तत्र व्याप्तिरिति ।

§ ५. अथ विवक्षितदेशमन्तरेणापि व्याप्तेरखण्डनात्[12]तद्विशेषप्रतीतिरनुमानादिति । ननु स विशेषः व्याप्तिग्राहिणा प्रमाणेन प्रतिपन्नः, किं वा नेति ? । यदि प्रतिपन्नः तदा किमनुमानेन ? । अथ न[13] गृहीतस्तदा न तस्य व्याप्तावन्तर्भाव इति । तदेवं[14] व्याप्तिग्राहिणा प्रमाणेनान्यथानुपपत्तौ गृहीतायां न किंचित् त्रैरूप्येण ।

§ ६. अथ यदि व्याप्तिग्राहिणा प्रमाणेन साकल्येन व्याप्तिग्रहणं तदा किं हेतूपन्यासेन ?, साध्यस्य सिद्धत्वादिति । सत्यम्[15], प्रतिपाद्यार्थं हि तदुपन्यासः । तथा हि—द्विविधः प्रतिपाद्यः गृहीतव्याप्तिकोऽगृहीतव्याप्तिकश्च । तत्रागृहीतव्याप्तिकस्य व्याप्तिग्राहकप्रमाणोपदर्शनमेव नोपपद्येत प्रथमं हेतूपन्यासमन्तरेण । तच्च सपक्षाद्यनपेक्षं प्रवर्तमानं[16] त्रैरूप्यं व्यपोहति । गृहीतव्याप्तिकस्य तु हेतोरुपदर्शनमात्रमेव क्रियते । एतत् तैरप्युक्तम्, "**विदुषां वाच्यो हेतुरेव हि केवलः**" [प्रमाणवा० ३.२६] इति । तदेवं सति नियमे न किंचित् त्रैरूप्येण ? । **[४३]**

§ १. "**कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।**
**अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥**" [प्रमाणवा० ३.३०]

इति चेत्—न दर्शनादर्शनाभ्यां नियमं मन्यते । किन्तु तर्कादभ्यूहापरनाम्नः । तथा हि प्रमाणात् तादात्म्यतदुत्पत्ती यथा निश्चीयेते तथा नियमोऽपि निश्चीयतां किं व्यवधिना ? । एतदेवाह—**कार्यकारणसद्भाव** इत्यादि ।

---

१. तदा मु० । २. सिद्धिः मु० । ३. रिति यत्र मु० क० । ४. तत्पुत्रत्वादौ अ० मु० । त्वत्पुत्रत्वादौ क० । ५. °त्येवं अ० । ६. भवति व्या° मु० । ७. अत्र क० । ८. तदा व्या° मु० क० । ९. अथ साकल्यं न मु० क० । १०. न विशेष° मु० क० । ११. साम्यस्यैव मु० । १२. °ण्डना तद्वि मु० अ० व० । १३. अथ गृही° क० । १४. तदेव मु० क० । १५. असत्यम् मु० क० । १६. °मानं व्यापो° अ० ब० ।

**कार्यकारणसद्भावस्तादात्म्यं चेत् प्रतीयते ।**
**प्रत्यक्षपूर्वकात् तर्कात् कथं नानुपपन्नता ॥ ४४ ॥**

§ २. ननु[1] न तर्कात् कार्यकारणत्वादि परस्य निश्चीयते किन्तु बाधकप्रमाणात्[2] । तत् कथमेतदिति ? । अत्रेदमुच्यते । किमिदं बाधकं प्रमाणम् ? प्रत्यक्षम् उतानुमानमिति ? । तत्र यद्यनुमानम्, तदाऽनवस्था । नापि प्रत्यक्षम् । तद्धि निर्विकल्पकत्वात् पुरो व्यवस्थितयोरपि वह्निधूमयोः कार्यकारणभावं प्रत्येतुं न शक्नोति, किमङ्ग पुनः साकल्येनेति ? । तस्माद् यदि धूमस्यान्यत् किमपि कारणं स्यात् तदा अयमपि धूमो न वह्नेरुत्पद्यमान[3] उपलभ्येत । ततो अभ्यूह्यते सकलमेवैतद्रूपं सर्वत्रैवंविधरूपमन्तरेण नोपपद्यत इति । तच्च तर्काख्यं प्रमाणं केचित् प्रत्यक्षं मन्यन्ते । अपरे अनुमानम् । अन्ये प्रमाणान्तरमिति । तदेवमन्यथानुपपन्नत्वमेव गमकत्वे निबन्धनं न त्रैरूप्यमिति । [ ४४ ]

तर्कात् व्याप्ति-निर्णयः ।

§ १. अथ अन्यथानुपपत्तिर्व्यतिरेकः । स च[4] नान्वयमन्तरेण घटते । तथाभूतश्च हेतुः क्वचिद्धर्मिण्युपसंहर्तव्यः, अन्यथा सर्वत्र प्रतीतिं जनयेत्, न वा क्वचिदपीति । तत् कथं न त्रैरूप्यमित्येतदाशंक्याह — व्यतिरेको[5]ऽनुपपत्तिश्चेदित्यादि ।

**व्यतिरेकोऽनुपपत्तिश्चेदन्वयनिबन्धनम् ।**
**कथं सत्त्वं विना तेन क्षणिकत्वप्रसाधकम् ॥ ४५ ॥**

§ २. नैतदस्ति । न हि सर्वत्रान्वयाविनाभूतो व्यतिरेकः परैरभ्युपगम्यते । तदुक्तम् — "यो हि सकलपदार्थव्यापिनीं क्षणिकतां इच्छति तं प्रति दृष्टान्तस्यैवाभावादिति" । एतदेवाह । कथमित्यादि । [ ४५ ]

§ १. इदानीं स्वसिद्धान्तं[6]माह — विनाप्यन्वयमात्मादावित्यादि ।

**विनाप्यन्वयमात्मादौ प्राणादिः साधनं यदा ।**
**तदा स्यान्नान्वयापेक्षा हेतोः साध्यस्य साधने ॥ ४६ ॥**

§ २. 'नेदं निरात्मकं जीवच्छरीरम्[7] अप्राणादिमत्त्वप्रसंगात्' इत्यस्मिन् प्रयोगे केवलोऽपि व्यतिरेको गमकत्वे निबन्धनं[8]मिति वर्णयन्ति ।

§ ३. अथात्मानमन्तरेण प्राणादिमत्त्व[9]स्य अनुपपत्तिः कथं निश्चिता ? । स्तम्भादिषु नैरात्म्यस्य अप्राणादिमत्त्वेन व्याप्तेरिति चेत्; ननु[10] स्तम्भादिषु नैरात्म्यं कथं निश्चितम् ? । न तावत् प्रत्यक्षेण । परोक्षत्वादात्मनः । तदभावात् नानुमानेन । पराभ्युपगमेन तु तन्निश्चये काल्पनिकत्वं हेतोः स्यादिति ।

§ ४. अत्रोच्यते । नित्यं सत्त्वादिप्रसंगान्न प्राणादयोऽहेतवः । हेतुस्तेषां[11] यद्यचेतनः, तदा स्तम्भादिष्वपि प्रसज्येरन् । सचेतनोऽपि किं नित्यः किं वा क्षणिक इति ? । न तावन्नित्यः । अप्रच्युतानुत्पन्नस्थिरैकरूपस्य न कदाचित्क्रियाविरामः स्यात् । यद्वा कदाचिन्न भवेदित्युक्तम् ।

---

१. ननु च न अ० । ननु च तर्कात् मु० । २. °णात् कथ° क० अ० । ३. °रुत्पाद्य° क० । ४. स नान्व° अ० ब० मु० । ५. °रेकाऽनु° मु० । ६. स्वसिद्ध्याह—अ० ब० । स्वसिद्धाह क० । ७. जीवशरीरं मु० । ८. निबन्धन इति मु० क० । ९. प्राणादिसत्त्व° क० मु० । १०. चेत् स्तम्भा° ब० । ११. हेतवश्चैषां मु० क० ।

क्षणिकमपि किं विद्यमानं[1] कार्यं करोति, किं वाऽविद्यमानम् ? । प्रथमपक्षे सर्वकार्यक्षणानामेककालताप्रसङ्गः । द्वितीये तु पूर्वमेव कार्यमुत्पद्यते कारणाभावाऽविशेषात्[2] । अथ प्राक्कालभावित्वं कारणत्वम् । उत्तरक्षणभावित्वं किं न भवति ? । को हि पूर्वोत्तरक्षणयोर्विशेषः ?, सन्निधानस्याविशिष्टत्वात्, अपरस्य च कर्तृत्वस्यानभ्युपगमात् । अथ पूर्वमेव कार्यस्य सद्भावे किं कारणेन ? । उत्तरमपि कार्यस्य सद्भावे किं कारणेन ? । तस्मिन् सति उत्तरस्य भावादिति चेत्; पूर्वस्यापि समानम् । अथैवमस्तु, तथापि क्षणिकस्य कर्तृत्वं सिद्धमिति चेत्; न सिद्धम्, सत्तामात्रेण कर्तृत्वे सर्वकार्यकर्तृत्वं स्यात् । स्वसन्तानमेव कार्यं करोति नान्यसन्तानमिति चेत्; न, इतरेतराश्रयप्रसंगात् । तथा हि—कार्यत्वात् एकसन्तानत्वम्, एकसन्तानत्वात् [3]कर्तृत्वमिति । तन्न क्षणिकस्यापि कर्तृत्वम् । तस्मात्कथंचिदजहत्पूर्वरूपस्य द्रव्यस्यैवोत्तरोत्तरेषु कार्येषु परिणमतः कर्तृत्वं नान्यस्येति । तन्न[4] प्राणादिरात्मानमन्तरेणोपपद्यते इति विपक्षव्यावृत्तिरेव अन्वयमन्तरेणापि गमिकेति । [ ४६ ]

§ १. ननु संबन्धमन्तरेण कथमन्यथानुपपन्नत्वमित्याशङ्क्याह—**संबन्धिभ्याम्** इत्यादि ।

**संबन्धिभ्यां विभिन्नश्चेत् संबन्धः स्यान्न लोष्टवत् ।**
**अनवस्था प्रसज्येत तदन्यपरिकल्पने ॥ ४७ ॥**

§ २. तथा [5]हि—संबन्धिभ्यां संबन्धः भिन्नः स्याद्, अभिन्नो वा ? । यद्यभिन्नः, तदा संबन्धो वा स्यात् संबंधिनौ वा । अथ भिन्नः, तदा लोष्टकल्पो न तयोरसाविति । अथ संबन्धान्तरेण तयोरसाविति । तस्याप्यभेदे पूर्वः प्रसंगः । भेदेऽनवस्था स्यादिति ।

§ ३. किञ्च, संबन्धेन[6] किं[7] संबद्धयोः संबन्धः क्रियते, यद्वा असंबद्धयोरिति ? । यद्यसंबद्धयोरिति, तदा सह्यविन्ध्ययोः क्रियेत । अथ संबद्धयोः, तदा किं संबन्धेन ?, स्वत एव संबद्धत्वादिति । तस्मादनुपपत्तिरेव गमकत्वे निबन्धनम्, न संबन्धान्तरमिति । [ ४७ ]

§ १. तदेवमन्वयं निरस्य पक्षधर्मत्वं निरस्यन्नाह—**कृत्तिकोदयपूरादे**रित्यादि ।

**कृत्तिकोदयपूरादेः कालादिपरिकल्पनात् ।**
**यदि स्यात् पक्षधर्मत्वं चाक्षुषत्वं न किं ध्वनौ ॥ ४८ ॥**

§ २. **कृत्तिकोदय**श्च नदीपूरश्च । आदिग्रहणात् चन्द्रोदयादिः समुद्रवृद्ध्यनुमाने । तथा हि—

पक्षधर्मत्वाभावेऽपि हेतुत्वम् ।

कृत्तिकोदयाद् रोहिण्युदयानुमाने कालो धर्मी परिकल्प्यते । उपरि वृष्ट्यनुमाने[8] नदीपूराद् देशविशेष इति । तथा समुद्रवृद्धावपि । पिपीलिकोत्सरणमत्स्यविकारादेर्वृष्ट्यनुमाने भूत[9]विशेष इति । एवं यदि यत्किंचित् कल्पयित्वा पक्षधर्मत्वं व्यवस्थाप्यते तदा ध्वनौ अनित्यत्वे साध्ये चाक्षुषत्वं पक्षधर्मः स्यात्, तत्रापि जगतो धर्मित्वेन कल्पनादिति । तथा हि—जगद्धर्मी अनित्यशब्दवान्[10] भवति इति साध्यो धर्मः [11]चाक्षुषघटवत्त्वाद् इति । तन्न पक्षधर्मत्वमपि गमकत्वे निबन्धनमिति । [ ४८ ]

---

१. विद्यमानं करोति क० । २. °विशेषत्वात् अ० । ३. °त्वात् तत्कर्तृ° क० । ४. °स्येति । तेन सिद्धं न प्राणा° मु० क० । ५. तथा संबन्धि° अ० ब० मु० । ६. संबन्धिनः किं अ० । ७. किं संबन्धः क्रियते संबंधयोः किं वा असंबन्धयोरिति क० । ८. वृष्टानु क० मु० । ९. भूत इति क० मु० । १०. °वान्न भवति मु० । ११. चाक्षुषत्वात् घटवदिति तन्न अ० । चाक्षुषत्वादिति तन्न ब० । चाक्षुषघटत्वादिति मु० ।

§ १. "विशेषेऽनुगमाभावात् सामान्ये सिद्धसाध्यता" इति अनुमानदूषणं परिहर्तुमाह— **समानपरिणामस्ये**त्यादि ।

**समानपरिणामस्य द्वयस्य नियमग्रहे ।**
**नाशक्तिर्न च वैफल्यं साधनस्य प्रसज्यते ॥ ४९ ॥**

§ २. तुल्यपरिणामयो[1]र्द्वयोर्लिङ्गसाध्ययोर्नियमग्रहेऽन्यथानुपपन्नत्वग्रहे सति **नाशक्तिः,** अननुगमात्, नापि सामान्यमात्रसाधनात् सिद्धसाध्यतादोषः । किन्तु विशेषा एव समानपरिणामिनः साध्यन्त इति । [ ४९ ]

§ १. एवं हेतुलक्षणमभिधाय इदानीं पक्षलक्षणमाह— **इष्टं साधयितुं शक्यम्** इत्यादि ।

**इष्टं साधयितुं शक्यं वादिना साध्यमन्यथा ।**
**साध्याभासमशक्यत्वात् साधनागोचरत्वतः ॥ ५० ॥**

§ २. सिद्धं प्रत्यक्षादिबाधितं वादिना साधयितुं न शक्यते । तथा, इष्टमपि साधनविषयीकृतं साध्यम् । नोक्तमेव । **अन्यथेति** उक्तविपरीतं **साध्याभासम्**[2] । कुत इत्याह । **अ[3]शक्यत्वाद्** इति । सि[4]द्धस्य साधयितुम् अशक्यत्वात् । तथा हि— य[5]था पू[6]र्वं प्रमाणेन सिद्धमपि साधनमपेक्षते तथाऽनेनैव सिद्धमन्यदपेक्ष्येत । तथा, ततोऽप्यन्यदिति न स्यात् साधननिष्ठेति । एवं सिद्धस्य साधयितुमशक्यत्वमिति ।

पक्षस्य लक्षणम् ।

§ ३. बाधितस्य च सा[7]धनागोचरत्वादित्याह— **साधनागोचरत्वतः** इति । प्रत्यक्षादिबाधितं प्रतिपाद्यमा[8]नं न साधनमपेक्षते इति ।

§ ४. यद्वा सिद्धं बाधितं च साधयितुं न शक्यते । ततो हेतोः सा[9]धनगोचरचारि न भवतीति । [ ५० ]

§ १. एवं पक्षलक्षणमभिधाय इदानीं बाधितोदाहरणान्याह— **यथा सर्वगम्** इत्यादि ।

**यथा सर्वगमध्यक्षं बहिरन्तरनात्मकम् ।**
**नित्यमेकान्ततः सत्त्वात् धर्मः प्रेत्यासुखप्रदः ॥ ५१ ॥**

§ २. **सर्वगतं** सामान्यं प्रत्यक्षं प्रतिज्ञायमानं प्रत्यक्षबाधितम् । एकान्तेन नित्यं शब्दादि प्रतिज्ञायमानम् अनुमानबाधितम् । **प्रेत्य** परलोके **धर्मः** सुखप्रदो न भवतीति प्रतिज्ञां कुर्वत आगमबाधा । समानतन्त्रैः प्रत्यक्षपूर्वकं श्रौतमभ्युपगतम् । तदपेक्षयोदाहरणम्— **बहिरन्तरनात्मकं** सर्वमिति । आत्मा परिणामि द्रव्यम् तदभावस्य प्रतिज्ञायमानस्य प्रत्यभिज्ञाप्रत्यक्षेण अनुमानेन वा अन्यथा बाधनान्न पृथगुदाहरणं युक्तं स्यादिति [ ५१ ]

बाधितोदाहरणानि

§ १. एवं हेतु-पक्षलक्षणमभिधाय इदानीं हेत्वाभासानभिधातुमाह— **रूपाद्यसिद्धित** इत्यादि ।

१. °मयोर्लिङ्ग° क० । २. °भासम् अ° मु० क० । ३. अशक्यादिति ब० । असत्यत्वात् मु० क० । ४. सिद्धश्चासा° मु० क० । ५. तथा हि पूर्वं प्रमा° क० मु० । ६. पूर्वप्रमा° अ० ब० । ७. च साधनागोचरत्वतः इति प्रत्य° ब० । ८. °मानो मु० क० । ९. ततो हेतोः साधनागोचरत्वादित्याह साधनगो° ब० ।

**रूपाद्यसिद्धितोऽसिद्धो विरुद्धोऽनुपपत्तिमान्।**
**साध्याभावं विना हेतुः व्यभिचारी विपक्षगः॥ ५२॥**

§२. स्वरूपासिद्धः — अनित्यः शब्दः, चाक्षुषत्वात्। सन्दिग्धासिद्धः — वह्निसिद्धावुपादीयमानो धूमरूपतया सन्दिह्यमानो बाष्पादिसंघातः। भागासिद्धो यथा — सर्वमनित्यम् प्रयत्नानन्तरीयकत्वात्। वाद्यसिद्धः सांख्यस्य सुखादीनामचैतन्यं साधयतः। यथा अचेतनाः सुखादयः अनित्यत्वादिति। प्रतिवाद्यसिद्धो वैशेषिकस्य जैनं प्रति द्रव्यादीनां सत्त्वं साधयतः। यथा सन्ति द्रव्यादीनि सत्त्वादिसंबन्धादिति[1]। आश्रयासिद्धो यथा — ईश्वरः सर्वज्ञः सर्वकर्तृत्वादिति। संदिग्धाश्रयो यथा — इह निकुञ्जे मयूरः केकायितादित्यादयः आदिग्रहणेन गृह्यन्ते।

हेत्वाभासाः।

§३. विरुद्धमभिधातुमाह — **विरुद्ध** इत्यादि। साध्याभावाव्यभिचारी विरुद्धः। यथा —। नित्यः शब्दः कृतकत्वादिति।

§४. इदानीमनैकान्तिकमाह — **व्यभिचारीति**। सपक्षविपक्षगामी अनैकान्तिक इति। [५२]

§१. अथवा एकान्तवादिनां सर्व एव हेतुस्त्रयीं दोषजातिं नातिक्रामतीत्याह — **असिद्धः सिद्धसेनस्ये**त्यादि।

**असिद्धः सिद्धसेनस्य विरुद्धो मल्लवादिनः।**
**द्वेधा समन्तभद्रस्य हेतुरेकान्तसाधने॥ ५३॥**

§२. सिद्धसेनस्य सूत्रकर्तुः साकल्येनासिद्धत्वात् सकल एव हेतुः असिद्ध इति। तथाहि — सामान्यं वा हेतुः स्यात् विशेषो वा?। अपोहस्य च पूर्वमेव निरासात् तत्र सामान्यं सकलव्यापि सकलस्वाश्रयव्यापि वा हेतुत्वेनोपादीयमानं प्रत्यक्षसिद्धं वा स्यात् अनुमानसिद्धं वा[2]। न तावत् प्रत्यक्षसिद्धम्। तद्धि अक्षानुसारितया प्रवर्तते। अक्षं च विनियतदेशादिनैव संनिकृष्यते[3]। अतः तदनुसारिज्ञानं तत्रैव प्रवर्तितुमुत्सहते न सकलदेशकालव्यापिनि। अथ नियतदेशस्वरूपाव्यतिरेकात् तन्निश्चये तस्यापि निश्चय इति। ननु[4] नियतदेशस्वरूपाव्यतिरेके नियतदेशतैव स्यात् न व्यापिता। तन्न व्यापिसामान्यरूपो हेतुः प्रत्यक्षसिद्धः। अनुमानसिद्धतायां अनवस्थां प्रतिपादयन्ति[5]। तदुक्तम्।

"सामान्यं नानुमानेन विना यस्य प्रतीयते।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते॥
असामान्यस्य लिङ्गत्वं न च केनचिदिष्यते।
न चानवगतं[6] लिङ्गं किंचिदस्ति प्रकाशकम्॥
तस्य चाप्यनुमानेन स्यादन्येन गतिः पुनः[7]।
अनुमानान्तरादेव ज्ञातेनैवं[8] च कल्पने॥

---

१. संबन्धत्वादिति क०। २. वा भवेत् मु० क०। ३. संनिरूप्यते मु० क०। ४. इति तन्नियत° क०। ५. प्रतिपादयति मु०। ६. न वान° क०। ७. इतः परं श्लोकवर्तिके—"तदुत्पत्तिश्च लिङ्गात् स्यात् सामान्यज्ञानसंहतात्। तस्य चाप्यनुमानत्वात् भवेल्लिङ्गेन चोद्भवः" इति पद्यं वर्तते तत् तु नोद्धृतं ग्रन्थकारेण— सं०। ८. ज्ञानेनैवं—श्लोकवा०।

लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ॥" [ श्लोकवा० अनुमा० १४९–१५३ ]

अपि च । अशेषव्यक्त्याधेय[1]स्वरूपं प्रत्यक्षानुमानाभ्यां सामान्यं निश्चीयमानं स्वाधारनिश्चयमु[2]त्पादयेत् । तन्निश्चयोऽपि स्वाधारनिश्चयमिति सकलः सकलज्ञः प्रसज्येत । तन्नैकान्तसामान्यरूपो हेतुः साकल्येन सिद्धः ।

§ ३. नापि विशेषरूपः । स[3] हि एकान्तेन विशेषः परमाणुरूपः स्यात् । तस्य च न प्रत्यक्षानुमानाभ्यां सिद्धिरित्युक्तम् । न चानन्वितस्य हेतुत्वं सिद्धम् ।

§ ४. विरुद्धानैकान्तिकावपि साध्यान्यथानुपपन्नत्वेन न सिद्धौ ।

§ ५. यदि वा असिद्धत्वादेव तौ निरस्तौ । तथाहि — पक्षधर्मत्वे सति तौ स्याताम् । तदभावे तावप्यसिद्धाविति सकल एवैकान्तवादिनो हेतुर्न सिद्ध इति ।

§ ६. मल्लवादिनस्तु नयचक्रविधातुर्मतेन सकल एवैकान्तसाधनो हेतुर्विरुद्ध इति । अनेकान्तात्मकवस्तुविपर्ययसाधनादिति ।

§ ७. अनेका[4]न्तिकासिद्धावपि साध्यनिश्चयविपर्ययसाधनाद्विरुद्धाविति । तथाहि — निश्चयेन सहाप्रतिपत्ति-संदेहावपि विरुद्धावेव । तदविनाभूतौ चा[5]सिद्धानैकान्तिकाविति सकल एव हेतुर्विरुद्ध इति ।

§ ८. द्वेधा समन्तभद्रस्येति । स हि प्रतिबन्धविकलानां सर्वेषामेव हेतूनां व्यभिचारित्वं मन्यते । न चैकान्तसामान्ययोर्विशेषयोर्वा प्रतिबन्ध उपपद्यते । तथाहि — सामान्ययोरेकान्तेन नित्ययोः परस्परमनुपकार्योपकारकभूतयोः कः प्रतिबन्धः ? । विशेषयोस्तु नियतदेशकालयोः प्रतिबन्धग्रहेऽपि तत्रैव तयोर्ध्वंसात् साध्यधर्मिण्यगृहीतप्रतिबन्ध एवान्यो विशेषो[6] हेतुत्वेनोपादीयमानः कथं नानैकान्तिक इति ? । तस्मात् समानपरिणामस्यैव सामान्यविशेषात्मनो हेतोरनैकान्तात्मनि साध्ये गमकत्वम् । नैकान्तसाधन इति स्थितम् । [ ५३ ]

सर्वज्ञसाधनविधौ परलोकसिद्धौ
आत्मादि यच्च निरुपद्रवसौख्यहेतुः ।
तत्रोपयुक्तमुभयात्मकवस्तुनिष्ठम्
व्युत्पादितं[7] विशदमेतदिहानुमानम् ॥

॥ इति श्रीशान्त्याचार्यविरचितायां वार्तिकवृत्तौ अनुमानपरिच्छेदः ॥

---

१. °क्त्याधिय अ० ब० । २. °निश्चयानुत्पा° अ० । ३. °रूपः हि मु० क० । ४. अनेकान्ति° मु० क० । ५. °भूतौ वासि° अ० क० मु० । ६. विशेषहे° मु० । ७. व्युत्पादिते मु० ।

# ४. आगमपरिच्छेदः ।

§१. एवं प्रत्यक्षानुमाने व्याख्याय इदानीं शाब्दं[1] प्रमाणं व्याख्यातुमाह—ननु शब्दस्य संकेतवृत्तेरवस्तुविषयत्वात् कुतः प्रामाण्यमिति ? । तथाहि—ये यत्राकृतसंकेताः शब्दाः ते तमर्थं नाभिदधति । यथा गोशब्दादयोऽश्वादिकम् । अकृतसंकेताश्च सर्व एव शब्दाः परमार्थवस्तुनीति व्यापकानुपलब्धिः । अशक्यक्रियत्ववैफल्याभ्यां न तावदयमसिद्धो हेतुः । तथाहि—समुत्पन्ने वा वस्तुनि संकेतः क्रियेत[2] अनुत्पन्ने वा ? । न तावदनुत्पन्ने । न हि अनुत्पन्नं वस्तु शब्दस्यान्यस्य वा विषयतामुपयाति । शब्दो वा अनुत्पन्नविषये नियोज्यमानो न कल्पितगोचरतामतिक्रामेत्[3] शशविषाणादिशब्द इव । तन्नानुत्पन्नं संकेतभूमिः । उत्पन्नमपि किं गृहीतम् अगृहीतं वा ? । न तावदगृहीतं वस्तु संकेतगोचरः, अतिप्रसंगात् । गृहीतमपि क्षणिकत्वेन नष्टत्वात् न शब्दविषयः । तथाहि—वस्तुनो ग्रहणम् । ततो निश्चयः । तदनन्तरं शब्दस्मरणम् । ततो नियोग इति । एवं त्रिचतुरक्षणेषु सुदूरमुत्सन्नत्वात् न शब्दगोचरता । अथ तत्समानजातीयक्षणस्य विद्यमानत्वात् कथं न शब्दविषयता ? । तदसत् । न हि अगृहीतं विद्यमानमपि शब्दविषयतामुपयाति । यथा अश्वाद्यगृहीतं विद्यमानमपि गोशब्दस्य । पूर्वापरैकीकरणप्रक्रमेण नियोज्यमानः शब्दः कल्पितविषय एव नियोजितः स्यात् । तन्न वस्तु शब्दनियोगगोचरः ।

पूर्वपक्षिणा शाब्दस्याप्रामाण्यस्थापनम्

§२. किं च, वस्तुनि संबंधकरणं प्रत्यक्षेण वा स्यादनुमानेन वा ?, न तावत् प्रत्यक्षेण । तेन पुरोऽव्यवस्थितै[4]रूपमात्रस्य प्रकाशनात् शब्दस्य च । न च तयोर्वाच्यवाचकसंबन्धोऽपरः कर्तुं शक्यते । अथेन्द्रियज्ञानारूढ एव रूपे[5] संबन्धव्युत्पत्तिर्दृश्यते—इदमेव तच्छब्दवाच्यम्, अस्येदमभिधानमिति । असदेतत् । तथाहि—अस्येदं वाचकमिति कोर्थः ? । किं प्रतिपादकं, यदि वा कार्यं कारणं वेति ? । तत्र यदि प्रतिपादकं तत् किम् अधुनैव ? [6]अथान्यदा ? । तत्र यद्यधुना शब्दरूपम् अर्थस्य प्रतिपादकं विशदेन रूपेणेति; तदयुक्तम् । अक्षव्यापारेणैव तथा नीलादेरवभासनात् न तत्र शब्दव्यापारस्योपयोगः । अथान्यदा लोचनपरिस्पन्दाभावे[7] शब्दोऽर्थानुद्भासयेत् । तदपि किं विशदेनाकारेण [8]आकारान्तरेण वा ? । यदि विशदेन तदा चक्षुरादीनां वैफल्यमासज्येत । प्रवृत्तिश्च न स्यात् । सर्वथा वस्तुनः प्रतिपन्नत्वात् । नहि प्रतिपन्न एव तावन्मात्रप्रयोजनां[9] प्रवृत्तिर्युक्ता, प्रवृत्तेरविरामप्रसंगात् । अथ किंचिदप्रतिपन्नं रूपमस्ति तदर्थं प्रवर्तनम् । ननु [10]यदप्रतिपन्नं व्यक्तिरूपं प्रवृत्तिविषयः [ तत् ] तर्हि न शब्दार्थः तदेव[11] च पारमार्थिकम्, ततोऽर्थक्रियादर्शनात् । नान्यत्, तस्य अर्थक्रियाविरहात् ।

अथ कालान्तरे [12]स्फुटेतरेणाकारेण तानसाववभासयेत् । नन्वसौ आकारस्तदा संबन्ध-

---

१. शब्दं मु० । २. क्रियन्ताम् मु० । ३. °क्रमेत् मु० । ४. °स्थितशब्दरूप° मु० क० । ५. रूढेः संब° अ० । रूप्यव्यु° मु० क० । ६. °नैव अन्यदा अ० मु० । ७. °दाभावेन श° क० मु० । ८. °नाकारेण, अविशदेन वा अ० । ९. °जनात् प्रवृ° अ० ब० । १०. यदि प्रति° अ० ब० । ११. तदेव पार° अ० । तदेव पर° क० । १२. स्फुटतरेण तान° मु० ।

व्युत्पत्तिकाले कालान्तरे वा नेन्द्रियगोचरः। तत् कथं तत्र शब्दाः प्रवर्तमाना नयनादिगोचरेऽर्थे वृत्ता भवन्ति ?। नापि शब्दोऽर्थानां कारणं स्वहेतोरेव तेषामुत्पत्तेः। नाप्यर्थकार्यम् विद्यमानेऽप्यर्थे दर्शनप्रतिपादनाभिप्रायविवक्षादिभिर्व्यवधानात् । तन्ना[ध्य]क्षतः[1] संबन्धवेदनम्।

§ ३. नाप्यनुमानतः तदभावे तदनवतारात्। अथार्थापत्त्या[2] संबन्धवेदनम्। तथाहि–व्यवहारकाले शब्दार्थौ प्रत्यक्षे[3] प्रतिभातः श्रोतुश्च शब्दार्थप्रतिपत्तिं चेष्टया प्रतिपद्यन्ते[4] व्यवहारिणः तदन्यथानुपपत्त्या तयोः संबन्धं विदन्ति। तदप्यसत्। सिध्यत्येवं काल्पनिकः संबन्धो न वास्तवः। तथाहि–श्रोतुः प्रतिपत्तिः संकेतानुसारिणी दृश्यते, कलिमार्यादिशब्देभ्यो द्रमिडार्ययोर्[5]विपरीतप्रतिपत्तिदर्शनात्। तन्न वस्तु शक्यसंकेतक्रियम्।

§ ४. संकेतव्यवहारकाला[6]व्यापिनि वस्तुनि निष्फलश्च संकेतः । तथाहि–कथं नाम अस्माच्छब्दादमुमर्थं प्रतिपद्यन्तां व्यवहारकाले प्रतिपत्तार इति संकेतं कुर्वते प्रेक्षाकारिणः। स चान्यत्वे न संभवति[7]।

§ ५. अथ कालान्तरस्थायिनो नित्यस्य वा[8] विशेषस्य सामान्यस्य वा आकृतेर्वा[9] अवयवसंयोगलक्षणायाः सद्भावात् कथं न संकेतकरणसाफल्यम्। तदसत्। नित्यस्य क्रमयौगपद्यायोगेन अर्थक्रियाविरहतोऽसत्त्वात् । यदि च वस्तुनि शब्दवृत्तिः[10] स्यात्, तदा न कश्चिद् दरिद्रः स्यात् शब्दस्यैव सर्वार्थप्रतिपादकत्वात् । जातेरभिधानान्नेदमिति[11][12] चेत्; न जातेरभावात्।

§ ६. अथावभासमानापि कथं नास्तीति चेत्; न, जातिप्रतिभासाऽभावात्। तथाहि–दर्शने परिस्फुटतयाऽसाधारणमेव रूपं चकास्ति, न साधारणम्। अथ साधारणमपि रूपमनुभूयते गौर्गौरिति। तदसत्। सावले(शाबले)यादिरूपविवेकेनाप्रतिभासनात्। न च सावले(शाबले)यादिरूपमेव[13] साधारणं, प्रतिव्यक्ति[14]भिन्नरूपोपलम्भात्। नापि कल्पनाज्ञाने। कल्पनापि पुरः परिस्फुटमुद्भासमानं[15] व्यक्तिरूपं व्यवस्यन्ती हृदि चाभिजल्पाकारं[16] प्रतीयते न तद्व्यतिरिक्तो वर्णाक्षराद्याकार[17]शून्यः प्रतिभासो लक्ष्यते। वर्णादिस्वरूपरहितं च जातेरूपमुपगम्यते। तन्न कल्पनावसेयाऽपि सा। यच्च न क्वचिद्विज्ञाने भाति तदसत्[18] शशविषाणमिव।

§ ७. भवतु वा जातिः शब्दार्थः[19] तथापि न शब्दात् प्रवृत्तिः स्यात् ज्ञानमात्रलक्षणत्वाज्जात्यर्थक्रियायाः। तस्याश्च[20] तदैव निष्पन्नत्वात् । अथ जात्या व्यक्तिर्[21]लक्ष्यते तेन लक्षितलक्षणावृत्तिः। तदसत्। क्रमवत्प्रतीतेरभावात्–पूर्वं जातिः पश्चाद् व्यक्तिरिति। किं च यदि नाम शब्दाज्जातिरा[22]भाति व्यक्तेः किमायातम्, येन सा[23] तां लक्षयति[24] ?। संबन्धाच्चेत्[25]।

१. तन्नाक्षितः अ० ब०। २. °त्त्या संवेदनम् अ० क० मु०। ३. प्रत्यक्षः प्रतिभावतः मु० क०। ४. °पद्यते मु० क०। ५. द्रविडार्य मु०। ६. °हारकला° मु० क०। ७. संभावयन्ति मु०। ८. °स्य तत्रापि विशे° मु० क०। ९. °र्वाऽव्ययवसं(?) अ०। १०. शब्दः वृत्तिः अ० ब०। ११. °धानान्नैवमिति चेत् जाते° क०। १२. °मिति जाते ब०। १३. रूपमिव क०। १४. प्रतिशक्ति क०। १५. °भानशक्तिस्वरूपं क०। १६. हृदि याभि° मु० क०। १७. °क्षराकारशू° ब०। १८. भाति तच्छशवि° अ०। १९. जातिः तथापि अ०। २०. तस्यास्तु मु० क०। २१. जात्या शक्ति° क०। २२. जातिः पराभाति ब०। २३. येन तां मु०। २४. लक्षति मु० क०। २५. संबन्धत्वाच्चेत् मु० क०।

[1]संबन्धस्तयोः किं तदैव प्रतीयते आहोस्वित् पूर्वम् ? । न तावत् तदा व्यक्तेरनधिगतेः । अधिगमे वा किं लक्षितलक्षणया ? । सैव शब्दार्थः स्यात् । तस्मात् तदनधिगमे[2] तद्गत-संबन्धानधि[3]गतेर्न तदा तत्प्रतीतिः । नापि पूर्वम् । यदि नामैकदा अकार्यकारणभूतयोः [4]सहभावः तथापि सर्वदा ताभ्यां तथा भाव्यमिति कोऽयं नियमः ? ।

§ ८ अथ जातेरिदमेव रूपं यदुत विशेषनिष्ठता । ननु सर्वदा सर्वत्र जाति[5]र्व्यक्तिनिष्ठेति किम् अध्यक्षेणाधिगम्यते अनुमानेन वा ? । न तावत् प्रत्यक्षेण सर्वव्यक्तीनां युगपदप्रतिभासनात् नैकदा तन्निष्ठता तेन गृह्यते । क्रमेणापि व्यक्तिप्रतीतौ निरव[6]धेर्व्यक्तिपरंपरायाः सकलायाः परिच्छेत्तुमशक्यत्वादिति न तन्निष्ठताग्रहः । नाप्यनुमानेन तत्पूर्वकत्वेन तस्य तदभावेऽप्रवृत्तेः । तन्न जात्या व्यक्त्युपलक्षणम् ।

§ ९. किंच, जातेरपि शब्देन प्रतिपादनं न संभवति, तत्र संकेतासंभवात् । तथाहि— प्रतिपन्नायां तस्यां संकेतः । तत्प्रतिपत्तिश्च [7]प्रत्यक्षानुमानाभ्यां [8]नेत्युक्तम्, शब्दैकप्रमाण-समधिगमे चानवस्थेतरेतराश्रयत्वं वा स्यादिति ।

§ १०. किं च, शब्दवाच्यं यद्यक्षणिकं तदा व्यवहारकाल[9]भावि क्रमवत् विज्ञानं नोत्पद्येत "नाक्रमात् क्रमिणो भावः[10]" [ प्रमाणवा० १.४५ ] । न च स्वविषयज्ञानोत्पादना-दन्यत्[11] वाच्यत्वं । तन्न शाब्दं[12] विज्ञानं अवस्तुविषयत्वात् प्रमाणम् । इत्याशङ्क्याह—**तापच्छेद-कषैः शुद्धमिति ।**

**ताप-च्छेद-कषैः शुद्धं वचनं त्वागमं विदुः ।**

§ ११. **तापश्च च्छेदश्च कषश्च । तैर्यद्वचनं शुद्धं** तत् प्रमाणमिति । [13]एतदुक्तं भवति—न शब्दस्य[14] बाह्यार्थाविनाभावित्वेनार्थप्रतिपादकत्वात् प्रामाण्यम् । किन्तु पुरुषप्रामाण्यमेव [15]शाब्दसंक्रान्तं प्रमाण[16]त्वेनाभिधीयते इत्युक्तम् ।

§ १२. यच्च 'अशक्यक्रियत्व-वैफल्यादि दूषणम्' अभाणि क्षणिकपक्षाश्रयणेन तन्नोभया-त्मकवस्तुवादिनां क्षतिमावहति अस्पष्टविशेषविषयत्वं च परोक्षस्योक्तम् । तेन न केवल-[17]सामान्यपक्षभावी दोषः संभवी ।

§ १३. अथ किमिदम् अस्पष्टत्वम् ? । किं ग्रहणम्, उताग्रहणम् ? । यदि ग्रहणम्, कथमस्पष्टत्वम् ? । अथाग्रहणम् । तदा कथं तत्प्रतीतिरिति । न, अनिदन्त्वप्रतीतेरस्पष्टत्व-प्रतिपादनात् । अपि च, घटशब्दादुत्पन्नं विज्ञानं पटं किं न प्रत्येति यदि निर्विषयं शाब्दं विज्ञानम् ? । [18]अर्थं संकेतवशात् वस्त्वन्तरमपि प्रत्येत्येव । ननु का प्रतीतिः ? । किं ग्रहण-माहोस्विदग्रहणम् ? । यदि ग्रहणम् तदा कथं निर्विषयम् ? । अथाग्रहणम् तदा [19]कस्तद्विष-यार्थः ? । अथ दृश्यविकल्प्यैकीकरणेन तद्व्यवसायः । न, अग्रहणे व्यवसायाऽयोगात् ।

---

१. चेत् स संब° ब० । २. °गमे न तद्ग° ब० । ३. गतिर्न मु० । ४. °भूतयोः ताभ्यां मु० । ५. जातिर्शक्ति क० । ६. °वधिर्व्य° मु० क० । ७. °श्च न प्र° मु० क० । ८. भ्यामित्यु° मु० क० । ९. °काले नाक्रमात् अ० । १०. भावाः ब० । ११. °न्यवाच्य° ब० । १२. शब्द° अ० । शब्दात् वि° मु० । तन्न अशब्दात् क० । १३. °मिति न मु० क० । १४. शब्दबाह्या अ० ब० । १५. मेव संक्रान्तं मु० क० । १६. प्रमाणशब्दत्वेना° मु० क० । १७. केवलप्रामाण्यप° मु० । १८. अतः मु० क० । १९. तदा सद्विष° मु० । तदा तद्विष° क० ।

प्रत्यक्षस्यापि ग्रहणं न व्यवसायादन्यत् । नहि प्रत्यक्षं वस्तु अयःसन्दंशकन्यायेन गृह्णाति । किं तर्हि ? । तद्विषयव्यवसाय एव तद्ग्रहः । स च शाब्देऽपि समानः । किन्तु स्पष्टास्पष्टत्वकृतो विशेष इति । [ ५४[1] ]

§ १. ननु एवं सर्वागमानां प्रामाण्यमासज्येत । नैतदस्ति । एवं हि सर्वप्रत्यक्षाणामपि प्रामाण्यं स्यात् । अथ तत्र कारणादिशुद्धिकृतो विशेषः । अत्रापि समानः इति दर्शयितुं तापादीन्याख्यातुमाह – तापो हीत्यादि ।

**तापो ह्याप्तप्रणीतत्वमाप्तो रागादिसंक्षयात् ॥ ५४ ॥**
**कषः पूर्वापराघातश्छेदो मानसमन्वयः ।**

§ २. इह पुरुषप्रामाण्यात् शब्दप्रामाण्यमुक्तम् । पुरुषस्तु त्रिभिर्गुणैः प्रमाणम् । सर्वज्ञत्वेन, वीतरागत्वेन, अमूढत्वेन च । तानेव त्रिभिर्विशेषणैर्दर्शयति । नाऽवीतरागोऽनाप्तत्वं जहाति । न मूढः पूर्वापराव्याहतं वक्ति । नासर्वज्ञः प्रमाणसंवादि रचयति ।

§ ३. अथ वीतरागस्य वचने किं प्रयोजनमस्ति, किं वा नास्ति ? । यद्यस्ति कथं वीतरागः ? । अथ नास्ति । तदा न प्रेक्षापूर्वकारी । किं च, आराधयितुर्यदि फलं ददाति नेरस्य[1](नेतरस्य) तदा कथं वीतरागः ? । अथ न ददाति । तदा किं तेन आराधितेनेति ? । नैतदस्ति । दिनकरदृष्टान्तेन चिन्तामण्यादिदृष्टान्तेन हि शास्त्रकारैः समाहितमिति नेह प्रतन्यते ।

§ ४. तदेवं गुणत्रयवैकल्यान्नागमान्तराणां प्रामाण्यम् । तथाहि[2] लोभादिमूलोऽधर्मः । स्नानं चाधर्मशोधनम् इति पूर्वापरव्याघातः । तथा[3],

"गंगाद्वारे कुशावर्ते[4] विल्वके नीलपर्वते ।
स्नात्वा कनखले[5] तीर्थे संभवेन्न पुनर्भवे ॥"

इत्यभिधाय पुनरप्युक्तम् –

"चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ।
शतशोऽपि हि तद्धौतं सुराभाण्डमिवाशुचि ॥" [ जाबाल० ४.५४ ]

तथा, "न हिंस्यात् सर्वभूतानि" [ छान्दो० अ० ८ ] इत्यभिधाय पुनर्हिंसाभिधानात् । तथाहि[6] –

"षट्शतानि[7] नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य वचनान्न्यूनानि पशुभिस्त्रिभिः ॥"

तथा, आगमान्तरप्रणेतॄणामवीतरागत्वम्, अङ्गनासमालिङ्गनात् सुप्रसिद्धमेव । [ ५५[1] ]

§ १. तथा प्रमाणसंवाद्युत्पादव्ययध्रौव्यात्मकवस्त्वनभिधानादप्रामाण्यमित्याह मल्लवादी –

**'विधिनियमभङ्गवृत्ति[8]व्यतिरिक्तत्वादनर्थकवचोवत् ।**
**जैनादन्यच्छासनमनृतं भवतीति वैधर्म्यम्[9] ॥ ५६ ॥' इति ।**

१. नेतस्य मु० क० । २. तथा लोभा° अ० मु० । ३. तथा च गं° क० । ४. °वर्ते चैलके क० । °वर्ते वैलके मु० । ५. कनकखले अ० ब० । ६. °नात् तथा आग° मु० । ७. °ब० मु० क० आदर्शेषु नास्तीदं पद्यम् सं० । ८. °वृत्तिरिक्त क० । ९. °तीति वैधर्म्यमिति तथाहि क० । °तीति°वैधर्ममिति वैधर्म्यप्रयोगः मु० ।

§२. वैधर्म्यमिति वैधर्म्यप्रयोगः। तथाहि–उत्पादव्ययध्रौव्याभिधायकत्वेन सत्यत्वं[1] व्याप्तम्। तद्व्यापकाभावाद् व्याप्याभावप्रतिपादनं वैधर्म्यप्रयोगः। विधिश्च नियमश्च भङ्गश्च ते तथोक्ताः। तेषु वृत्तिस्तदभिधानम्। तद्व्यतिरिक्तत्वात् तद्रहितत्वात्। जैनादन्यच्छासनमिति। शास्यन्ते जीवादयोऽनेनेति शासनमाम्नायः जिनप्रणीतः। तस्मादन्यद्वेदादि। अनृतं असत्यार्थं भवति अनर्थकवचोवदनर्थका[2] उन्मत्तकास्तद्वचनमिव। यद्वा, अनर्थकं च तद्वचश्च[3] दशदाडिमादिवाक्यवत्। विधिरुत्पादः, भङ्गो व्ययः, नियमो ध्रौव्यमिति तदात्मकं सकलमेव[4] वस्तु, तस्य साकल्येनाप्रतिपादनाद् आगमान्तराणां न प्रामाण्यमिति।

अन्य-शासनस्याप्रामाण्यम्।

§३. नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता हि सप्तनयाः। तत्र द्रव्यास्तिकपर्यायास्तिकौ मूलनयौ[5]। शेषास्तद्भेदाः। तदुक्तम्।

"दव्वट्ठिओ अ पज्जवणओ य सेसा वियप्पा सिं" ॥ [सन्मति १.३]

तत्र कापिलं शुद्धद्रव्यास्तिकम्। बौद्धं शुद्धपर्यायास्तिकम्। शेषदर्शनानि शुद्धाशुद्धानि इति।

§४. तत्र सांख्यो ध्रौव्यमेव प्रतिपन्नवान्। न विधिविगमौ। तस्य हि न किंचिदुत्पद्यते नापि विनश्यति। तदुक्तम्–

"असदकरणादुपादानग्रहणात् सर्वसंभवाभावात्।
शक्तस्य[6] शक्यकरणात् कारणभावाच्च सत् कार्यम् ॥" [सांख्य० ९]

एवं पञ्चभिः हेतुभिः[7] सत्कार्यवादः समर्थितः। तथाहि–यदसत् तन्न केनापि क्रियते यथा आकाशकुसुमम्। असच्च परमतेन कारणे कार्यमिति व्यापकविरुद्धोपलब्धिप्रसङ्गः[8]। न चैवम्। तस्मात् सत्[9] कारणे कार्यमिति। तथा, उपादानग्रहणादिति। उपादानं कारणं[10] तस्य नियतस्यैव ग्रहणम्। अन्यथा सर्वस्यैव अविद्यमानत्वाविशेषाद् ग्रहणं स्यात् न वा कस्यचित्। न चैवम्। अतः सत् कार्यमिति। तथा सर्वसंभवाऽभावाद् इति। सर्वस्मात् सर्वं कार्यमुत्पद्येत। पूर्वं कारणाश्रयणेन प्रसंग उक्तः, संप्रति तु कार्यमाश्रित्येति विशेषः। न च सर्वं सर्वतो भवति। तस्मादयं नियमः। तत्रैव तस्य सद्भावादिति। तथा, शक्तस्य शक्यकरणादिति। यद्यप्यसत्कार्यवादिभिर्नियतमेव कारणं नियतकार्यकरणशक्तिकमुपेयते, तथापि शक्यमेव कार्यं करोति। यच्च नीरूपं तदनाधेयातिशयम्। तथाभूतं च कथं केनचिच्छक्येत कर्तुम्। तस्मात् सदेव शक्यते कर्तुम्, नासदिति। तथा, उक्तन्यायादसत्कार्ये[11] न किंचित् कारणं स्यात्। अस्ति च कारणम्। तदाह[12]–कारणभावाच्च सत्कार्यमिति।

§५. तदसत्। एवं हि न[13] कार्यकारणे स्याताम्। न हि यद् यतोऽव्यतिरिक्तं तत् तस्य कारणं कार्यं वेति व्यपदेष्टुं युक्तम्, कार्यकारणयोर्भिन्नलक्षणत्वात्[14]। अन्यथा हि 'इदं कार्यं कारणम्' इति व्यवस्था न स्यात्। मा भूदिति चेत्; न, अभ्युपगमविरोधात्। तथाहि–

१. सत्वं मु०। २. °र्थकमवोचदनर्थका ब०। ३. तद्वचनं च मु० क०। ४. °त्मकसक° क०। ५. मौलनयौ ब०। ६. व्यक्त° मु०। ७. पञ्चभिः सत्का° अ० मु० ब०। ८. °ब्धिः प्रसङ्गः क०। ९. तस्मात् स्यात् सत् मु०। १०. उपादानकारणं मु० क०। ११. °दसत्कार्ये क० मु०। १२. तथाह अ० ब०। १३. हि कार्य° क०। १४. °कारणतयो° क०।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥" [ सांख्य० ३ ]

इत्यभ्युपगमात् । [1]स बाध्येत । सर्वेषां हि कार्यत्वं कारणत्वं वा प्रसज्येत । यद्वा पुरुषवन्न [2]प्रकृतित्वं विकृतित्वं वा सर्वेषां स्यात् । पुरुषस्य वा प्रकृतिविकृतित्वं प्रसज्येत । तदसंबद्धमिदम् । उक्तञ्च ।

"यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च ।
वदता विन्ध्यवासित्वं ख्यापितं विन्ध्यवासिना ॥"

इति ।

§६. 'हेतुमत्त्वादिधर्मासंगि व्यक्तम् अव्यक्तमन्यदिति' एतदपि बाध्येत । न हि यद् यतोऽव्यतिरिक्तस्वभावं तत् ततो विपरीतं युक्तम्, रूपान्तरलक्षणत्वाद्वैपरीत्यस्य । सत्त्वरजस्तमसां चैतन्यस्य च भेदे अन्यनिमित्ताभावात् ततश्च [3]यदि न भेदः सर्वं[4] विश्वमेकं द्रव्यं स्यात् । सहोत्पत्तिप्रसंगश्च भवेदिति ।

§७. अथ नापूर्वरूपोत्पत्त्या कार्यकारणत्वमभ्युपगम्यते यतो रूपाभेदे तद्विरुध्येत । किन्तु प्रधानं महदादिरूपेण परिणमति, सर्प इव कुण्डलादिरूपेणेति । ततो[5] रूपाभेदेऽपि कार्यकारणव्यपदेशो न विरोधमनुभवतीति । तदसत् । परिणामासिद्धेः । तथाहि—किमसौ पूर्वरूपापरि[6]त्यागेन [7]परित्यागेन वा ? । प्रथमपक्षे अवस्थानां सांकर्यं स्यात् । ततश्च वृद्धावस्थायामपि बालाद्यवस्थोपलभ्येत[8] । द्वितीयपक्षे न परिणामः स्यात् । पूर्वकं [9]हि स्वरूपं निरुद्धम् अपरं चोत्पन्नमिति कस्य परिणामः ।

§८. अपि च तस्यैवान्यथाभावः परिणामो भवद्भिर्वर्ण्यते । स चैकदेशेन, सर्वात्मना वा ? । न तावदेकदेशेन एकस्यैकदेशासंभवात् । नापि सर्वात्मना । पूर्वपदार्थनिरासेन पदार्थान्तरोत्पादप्रसंगात् । अतो न तस्यैवान्यथात्वं युक्तम् । तस्य स्वभावान्तरोत्पादनिबन्धनत्वात् ।

§९. व्यवस्थितस्य धर्मिणो धर्मान्तरनिवृत्तौ धर्मान्तरप्रादुर्भावलक्षणः परिणामोऽभ्युपगम्यते न[10] तत्स्वभावान्यथात्वमिति चेत्; [11]तदयुक्तम् । यतो[12] विपद्यमान उत्पद्यमानश्च धर्मो धर्मिणोऽर्थान्तरभूतोऽभ्युपगन्तव्योऽन्यथा धर्मिण्यवस्थिते[13] तस्य तिरोभावाविर्भावासंभवात्[14] । तथाहि—यस्मिन्ननुवर्तमाने यो व्यावर्तते स ततो भिन्नो यथा घटे अनुवर्तमाने ततो व्यावर्तमानः पटः । व्यावर्तते च धर्मिण्यनुवर्तमानेऽपि आविर्भावतिरोभावासङ्गी धर्मकलाप इति कथमसौ ततो न[15] भिन्न इति धर्मी तदवस्थ एवेति कथं परिणतो नाम ? । यतो[16] नार्थान्तरभूतयोः [17]कटपटयोरुत्पादविनाशेऽचलितरूपस्य घटादेः परिणामो भवति, अतिप्रसंगात् । अन्यथा चैतन्यमपि परिणामि स्यात् ।

---

१. मात् सर्वे° अ० । २. प्रकृतित्वं च सर्वेषां मु० । ३. ततश्च न क० । ४. सर्ववि° अ० ब० मु० । ५. ततः प्रकृते रूपा° मु० क० । ६. पूर्वरूपात्या° अ० ब० । ७. °गेन वा पूर्वरूपपरि° मु० । ८. °लभ्यते अ० । ९. पूर्वकं स्व° क० अ० । १०. °म्यते ननु स्व° मु० क० । ११. चेत् असदेतत् क० मु० । १२. यतः प्रच्यवमान उत्पद्य क० मु० । १३. धर्मिण्यस्थिते अ० ब० मु० । १४. °भावानां सं° क० । १५. ततो भिन्न ब० । ततो नाभिन्न मु० । १६. यथा मु० क० । १७. °तयोः घटयोरु° मु० । °तयोः घटपटयोरु° क० ।

§ १०. तत्संबद्ध[1]योर्धर्मयोरुत्पा[2]दविनाशात् तस्यासौ अभ्युपगम्यते नान्यस्येति चेत्; न, सदसतोः संबन्धाभावेन तत्संबन्धा[3]योगात् । तथाहि—संबन्धो भवन् सतो वा भवेदसतो वेति ? । न तावत् सतः, समधिगता[4]शेषस्वभावस्यान्यानपेक्षितया क्वचिदपि पारतन्त्र्याऽसंभवात् । नाप्यसतः । सर्वोपाख्याविरहतया तस्य क्वचिद्प्याश्रितत्वानुपपत्तेः । न हि शशविषाणादिः क्वचिद्प्याश्रित उपलब्धः ।

§ ११. न च व्यतिरिक्तधर्मान्तरोत्पादविनाशे सति परिणामो भवद्भिर्व्यवस्थाप्यते । किं तर्हि ? यत्रात्मभूतस्वभावानुवृत्तिरवस्थाभेदश्च[5] तत्रैव तद्व्यवस्था । न चात्य[6]न्तभेदे धर्माणामात्मभूतो धर्मोऽनुवर्तत इति । तन्न[7] भेदे परिणामः कश्चित् । एकान्ता[8]भेदे धर्मो[9] वा स्यात् धर्मी वा । न तत्रापि कश्चित् परिणाम इति ।

§ १२. ननूक्तम्—न सलिलात् कल्लोलानां भेदो नाप्यहेरुत्फणाद्यवस्थाना[10]म्, अथ च भिन्ना इव प्रतीयन्ते । तद्वद्धर्माणामाविर्भावतिरोभावमात्रम् परिणामो नापूर्वविधिरिति । अथ कोऽयमाविर्भावः ? । किं स्वभावातिशयोत्पत्तिरुत तद्विषयं विज्ञानम्, आहोस्विद् उपलम्भावरणविगम इति ? । तत्र न तावदाद्यः पक्षः । यतः स्वभावातिशयो यद्यस[11]न्नुत्पद्यते तदा कथं सत्कार्यवादः ? । अथ सन् तदा नाविर्भावः । अथ तस्याप्यवस्था पूर्वमसती पश्चाद्भवति । ननु साप्यवस्था यदि सती तदा कथं भवति ? । अथ न सती तदा कथं नापूर्वविधिरिति ? । तत्राप्यवस्थान्तराभ्युपगमेऽनवस्था । तन्न स्वभावातिशयोत्पत्तिराविर्भाव इति । नापि तद्विषयं विज्ञानम् । नित्यत्वोपगमात् । तथाहि—भवतां सिद्धान्तः 'संविदा[12]सर्गप्रलयादेकैव बुद्धिः' इति । न च न बुद्धिस्वभावा [13]तद्विषया वित्तिः, किन्तु मनःस्वभावेति वक्तव्यम् । यतो बुद्धिरुपलब्धिरध्यवसायो मनःसंवित्तिर्ज्ञानमित्यनर्थान्तरत्वात् । तन्न तद्विषयं विज्ञानमप्याविर्भावः । नाप्युपलम्भावरणविगमलक्षणः । न हि अनाधेया[14]नपनेयस्वरूपस्य नित्यस्यावरणं किंचित् । भवतु वा, तद्धि सद्वा स्यात् असद्वा ? । यद्यसत् कथं तस्य विगमः ?, स्वत एव तस्य विगमरूपत्वात् । विगमरूपस्याप्या[15]वारकत्वे न कदाचित् उप[16]लम्भोपलम्भः स्यात् । अथ सत् । तदा कथं तस्य विगमः ? । न हि भवन्मतेन किंचिद्विनश्यति । तिरोभावो विनाश इति चेत्; कोऽयं तिरोभावः ? किं स्वरूपविनाशः, पर्यायविनाशो वा, किं वाऽऽवरणयोगः, विज्ञानानुत्पादकत्वं वेति ? । तत्र न तावत् स्वरूप-पर्यायविनाशोऽनभ्युपगमात् । नाप्यावरणयोगो अविचलितरूपस्या[17]वरणायोगात् । अकिंचित्कुर्वाणस्यावरणत्वासंभवात् । अन्यथा जगतोऽपि स्यात् । करणे वा नित्यताहानेः । विज्ञानानुत्पादकत्वम[18]प्ययुक्तम् । येन हि[19] स्वरूपेण ज्ञानमकार्षीत् तस्य विद्यमानत्वात् सहकारिणोऽकिंचित्करत्वेन निरस्तत्वात् । तदेवमुत्पादव्ययावपि प्रमाणोपपन्नाविति तदनभ्युपगच्छतो द्रव्यास्तिकनयवादिनो मिथ्यात्वमिति ।

---

१. संबन्धयो° अ० मु० क० । २. °रुत्पाद्य वि° अ० । ३. °संबन्धित्वायो° मु० क० । ४. °गतशेष° क० । ५. °भेदस्य तत्रैव अ० । ६. नचात्यन्त्यभेदे अ० । न चासन्तभेदे क० । ७. इति न भेदे अ० ब० । ८. एकान्तभेदे मु० क० । ९. धर्माः वा स्युः धर्मी मु० क० । १०. °वस्था अथ मु० क० । ११. यद्यसदुत्प° मु० । १२. संविदसर्ग° अ० । १३. °स्वभावातिविषया अ० । °स्वभावो तद्विषया संवितिः मु० क० । १४. अनाधिया° अ० । १५. °स्यावारक° क० । १६. चित् उपलम्भः स्यात् मु० ब० । १७. °रूपस्यायोगात् अ० ब० मु० । १८. °त्वमस्य यु° मु० क० । १९. येन स्वरू° ब० ।

आत्मनः सर्वगतत्वस्य खण्डनम्।

§ १३. एतेन आकाशकालदिगात्ममनःशब्दानां केवलं ध्रौव्यमभ्युपगच्छन्तोऽशुद्धनयवादिनो निरस्ता इति। प्रमाणासंवाद्यर्थाभिधानात्। तथा हि—आत्मनः सर्वव्यापित्वं न प्रमाणसंवादि। तद्धि प्रत्यक्षं वा स्यादनुमानं वा?। न तावत् प्रत्यक्षम् परोक्षत्वेनाभ्युपगमात्। यस्याप्यभ्युपगमः सोऽपि न युक्तवादी यतः तत् प्रत्यक्षं नेन्द्रियजन्यम् अभ्युपगम्यते किन्तु आत्ममनःसन्निकर्षजम्। न च कूटस्थस्य प्रागिव मनसा संयोगः संभवति। तस्य हि यदसंयुक्तं रूपं तत् संयोगकाले किमस्ति किं वा नास्ति?। यद्यस्ति तदा न मनसा संयुज्यते। तथाहि—यदसंयुक्तरूपं तन्न मनसा संयुज्यते। यथा मुक्तात्मादि। असंयुक्तरूपश्च आत्मा पूर्वावस्थायामिति स्वभावविरुद्धोपलब्धिरिति। संयुक्तासंयुक्तस्वरूपयोः परस्परपरिहारेणावस्थानात्। अथैकरूपस्य[1] न स्वरूपद्वयम्। तेन नासंयुक्तस्वरूपः, सर्वदैव तद्रूपत्वात्। नैतदस्ति। यतो नैकरूपस्य संसरणं स्यात्। तथाहि—यदि कर्तृस्वरूपः तदा न भोक्तृस्वरूपः। अथ भोक्तृस्वरूपस्तदा न कर्तृस्वरूपः। यदि बद्धस्वभावो[2] न मुक्तस्वभावः। अथ मुक्तस्वभावः, तदा न बद्धस्वभाव इति। किंच, दिगादिभिरपि मनसः संयोगः किं न भवति?। अनात्मरूपत्वादिति चेत्; न, सर्वव्यापित्वे कूटस्थनित्यत्वे[3] महत्त्वे च सति कथमयं विभागोऽयमात्माऽनात्मा[4]ऽयमिति?। यस्य मनःसंबन्धः स आत्मा तदन्योऽनात्मेति चेत्; न, इतरेतराश्रयत्वप्रसंगात्। सत्यात्मत्वे मनःसंबन्धः, सति मनःसंबन्धे आत्मत्वमिति। शरीरसंबन्धेन[5] आत्मा तदन्योऽनात्मेति यद्युच्येत तत्रेदमुच्यते[6]—शरीरसंबन्धोऽपि आकाशादिभिः किं न भवति?। अनात्मरूपत्वात्। नोत्तरमितरेतराश्रयत्वाभिधानात्। तन्नात्ममनःसन्निकर्षोत्पन्नप्रत्यक्षाधिगम्यः। नाप्यनुमानगम्यः। तदभावे तस्याप्यभावात्।

§ १४. अथ 'सर्वगत आत्मा, सर्वत्रोपलभ्यमानगुणत्वात्' अतः सर्वगतस्यात्मनः सिद्धिः। तथाहि—सुखदुःखसाधनवस्तूत्पादो देशान्तरे नाहेतुकः। न चादृष्टादन्यः सुखादेर्हेतुः। न चादृष्टस्यानाधारस्य[7] गुणत्वात् तत्र सत्त्वम्। न चासत्त्वे कार्यकर्तृत्वमिति आत्मनः तत्रापि सत्त्वमिति[8]। नैतदस्ति। यतः तत्रात्मनः सत्त्वे सुखाद्युपलम्भः किं न भवति?। एकार्थसमवायिनो ज्ञानस्याभावादिति चेत्; तदपि तत्र किं न भवति?। शरीराभावादिति चेत्; तत् किं शरीरे समवेतं किं वा आत्मनि?। यदि शरीरे तदा शरीरं भोक्तृ स्यात् नात्मा। न चैषोऽभ्युपगमः परस्य। अथ आत्मनि। तदा सर्वत्रात्मनो विद्यमानत्वात् समवायस्य च व्यापित्वात् सर्वत्र सुखाद्युपलब्धिः स्यात्। मनःशरीरविशिष्टस्यैवोपलब्धिः नान्यस्येति[9] चेत्; न, एकत्वहानेः। तथाहि—यस्मिन् विशिष्यमाणे[10] यन्न विशिष्यते तत् ततो भिन्नम्। यथा नीलत्वेन विशिष्यमाणे पटे[11] अविशिष्यमाणो घटः। न विशिष्यते च शरीरात्मनि विशिष्यमाणे[12] देशान्तरस्थ आत्मेति।

§ १५. किंच, शरीरात्मनि स्थितमदृष्टं देशान्तरस्थसुखादि[13]साधक[14]वस्तूत्पादकमस्तु किं तत्र

१. °रूपस्य तस्य रूपद्वयं मु० क०। २. बन्ध° मु० क०। ३. °नित्यत्वे जडत्वे च मु० क०। ४. विभागोऽयमात्मा अयमिति अ०। ५. °संबन्धित्वादात्मा अ०। ६. °मुच्येत मु० क०। ७. °स्यानवारकस्य मु० क०। ८. °मिति यतः क०। ९. °न्यत्रेति अ० ब० क०। १०. विशेष्य° अ०। ११. घटे मु०। १२. °माणो देशा° मु० क०। १३. सुधादि क०। १४. °साधकमस्तु अ० ब० मु०।

अदृष्ट[1]कल्पनया ? । दूरत्वान्न इति चेत्; कथं चन्द्रादयो विज्ञानोत्पादकाः ? । तस्मान्नास्ति नियमः—सन्निहितेनैव कारणेन कार्यमुत्पादनीयम्, न दूरस्थेनेति । त[2]न्न सर्वत्रोपलभ्यमानगुणत्वेनात्मनः सर्वगतत्वम् । इत्येका[3]न्ताभेदवादिनो मिथ्यावादिन इति ।

§ १६. तथा, एकान्तभेदवादिनोऽभिदधति—विनाशस्याहेतुक[4]त्वाद् उदयानन्तरं ध्वंसात् कुतो द्रव्यस्य संभव इति । तथाहि—ये यद्भावं प्रत्यन[5]पेक्षाः ते तद्भावनियताः । यथा अन्त्या कारणसामग्री स्वकार्योत्पादने । अनपेक्षा[6]श्च विनाशं प्रति भावा[7] इति ।

(क्षणभङ्गवादिनः पूर्वपक्षः ।)

तथाहि विनाशहेतुना किं स्वरूपं क्रियते, किं वाऽभावः क्रियते ? । न तावत् स्वरूपम् । तस्य [8]स्वहेतोरेवोत्पन्नत्वात् । किं च, तत् स्वरूपं नित्यम्, अथानित्यम् ? । यदि नित्यं त[9]दा तस्याविनां[10]श्यत्वात् अकिंचित्करो विनाशहेतुः । अथानित्यं तदा तस्य स्वत एव नश्वरत्वात् किं विनाशहेतुना ? । अथ कालान्तरस्थायिनो[11] विनाशहेतुना विनाशः क्रियते । न, कालान्तरस्थायित्वे नित्यतैव स्यात् । येन हि[12] स्वभावेन भावः संवत्सरं[13] स्थितः स चेत् संवत्सरान्तेऽपि स्वभावः, पुनरन्यत् संवत्सरान्तरमासितव्यम् । तत्राप्येवमिति कालान्तरस्थायित्वाभ्युपगमे नित्यतैवापतति । तन्न पक्षान्तरसंभव इति । तत्र च विनाशहेतोरकिंचित्करत्वमिति । तन्न स्वरूपकरणाद्विनाशहेतुरिति ।

§ १७. अथाभा[14]वं करोति । तदपि नास्ति । यस्मादभावः किं पर्युदासरूपः किं वा प्रसज्यरूपः ? । तत्र न तावत् पर्युदासरूपः, तस्यै[15] वस्त्वन्तरलक्षणत्वात् । तत्करणे न विनाश्यस्य किंचित् कृतं स्या[16]त् । तथाहि—मुद्गराद् यदि कपालानामुत्पादो घटस्य किमायातम् ? । त[17]द्ध्वंशेन (तद्ध्वंसेन) तेषामुत्पादादिति चेत्; तदुत्पादेऽन्यस्य ध्वंसः किं न भवति ? । तस्यैव निर्वृ[18]त्तेरिति चेत्; न, निवृत्तेर्वस्त्वन्तररूपत्वात् तदुत्पादे सर्वस्य स्यात् न वा कस्यचिदपि[19] विशेषाभावादिति । असंबद्धं[20] च स्यात् । तथाहि—कपालोत्पत्तौ कपालोत्पत्तिरिति ।

§ १८. अपि च ध्वंसोऽपि किं घटस्वरूपः ? किं वा अर्थान्तरमिति ? किं वा तुच्छरूप इति ? । तदेवावर्तत इति अनवस्था । तन्नार्थान्तररूपाभावकरणे भावस्य किंचित्स्यात् । किन्तु स्वरसत एव निवर्तमानो घटक्षणो मुद्गरादिसहकारिकारणं प्राप्य कपालान्युत्पादयति । तदुत्पत्तौ च विजातीयसन्तानोत्पादे 'नाशितो घटः' इति जनस्याभिमा[21]न इति ।

§ १९. अथ प्रसज्यरूपमभावं करोति । तदपि नास्ति । निरूपस्य कर्तुमशक्यत्वात् । करणे वा भावरूपतैव स्यात् । यतो भवतीति भावोऽभिधीयते । नान्यद्भावस्यापि लक्षणम् । अथ भावो भावरूपतया भवति अभावोऽभावरूपतयेति । विचित्ररूपा हि पदार्था भवन्ति । न हि नीलं पीतरूपतया भवति । तदप्यसत् । यतः केनचिद्रूपेणोन्मज्जनं हि भवनमभि-

---

१. अदृष्टपरिक° क० । २. तत्र मु० क० । ३. °कान्तभेद° मु० क० । ४. °हेतुत्वात् अ० ब० । ५. प्रत्यपेक्षाः अ० मु० क० । ६. अनपेक्षश्च मु० क० । ७. भाव इति मु० क० । ८. तस्य हेतोरुत्प° मु० क० । ९. नित्यं तस्या° मु० क० । १०. °विनश्य° क० । ११. °स्थायिना वि° क० । १२. येन स्व° मु० क० । १३. संवत्सरः क० । १४. अथ भावं क० । अथ भावं न करोति मु० । १५. तस्याव-स्थान्तरल° क० । १६. कृतं तथाहि मु० । १७. तदंशेन तेषा° अ० तच्चांशेन तेषा° मु० । १८. निवृत्ति-रिति मु० क० । १९. °चिदभावादिति मु० क० । २०. असंबन्धं स्यात् मु० क० । २१. °भिधान इति मु० क० ।

धीयते। सर्वोपाख्यारहितस्य निरूपत्वात् न कस्यचिद्रूपस्य करणमिति कथं तत्र हेतुव्यापारः फलवानिति। तस्मात् अभावं करोति[1]—भावं न करोतीति क्रियाप्रतिषेधमात्रं स्यात्। तस्माद्विनाशस्य अहेतुकत्वाद् उदयानन्तरं ध्वंसः। कुतोऽनुगतस्य रूपस्य [2]संभवो येन त्रैरूप्यं वस्तुनः स्यादिति?।

§२०. अपि च, एकरूपत्वे वस्तुनः प्रथमे क्षणे यद्रूपं तदेव यदि द्वितीयादिष्वपि तदोत्पत्तिरूपत्वात् प्रथमक्षणस्येव सर्वेषामुत्पत्तिरूपता स्यादिति प्रतिक्षणमुत्पादे न कस्यचित् स्थितिरिति। अथ प्रथमे[3] क्षणे उत्पत्तिः द्वितीयादिषु तु स्थितिरिति। तदा [4]उत्पत्तिस्थित्योरुत्पत्तिस्थितिमद्भ्यां न भेद इति तयोरपि भेद[5] इत्यादिना क्षणिकस्य वस्तुनः सिद्धेः कुतो द्रव्यस्य संभव इति?।

क्षणभङ्गभङ्गः।

§२१. अत्र वदन्ति। यद्यहेतुकत्वं नाशस्य तदा नित्यं सत्त्वमसत्त्वं वा स्यात्। तत्र यदि घटाभावस्य सत्त्वं त[6]दा अहेतोर्देशकालनियमाभावाज्जगति घटस्य नामापि न स्यात्। अथाऽसत्त्वं तदा घटस्य नित्यत्वं व्यापित्वं वा प्रसज्येत। अथ न घटात् तद[7]भावस्य भेदः। [8]एवं तर्हि कथमभावस्याहेतुकत्वम्?। अन्यथा घटस्या[9]प्यहेतुकता स्यात्। अथ घटहेतोरन्यो न मु[10]द्गरादिर्हेतुरित्यहेतुकतोच्यते। यद्येवं प्रथमेऽपि क्षणे न घटस्य सत्त्वं स्यात्, विरोधि[11]नः संनिधानात्।

§२२. ननूक्तम्—न स्वरूपादन्यो[ऽ]भाव इति कः केन विरुध्यते?। यद्येवं तदा घटस्य नित्यत्वं व्यापित्वं च स्यात्। तथाहि—यस्य यत्र स्वरूपं तस्य तत्र सत्त्वम्। यथा प्रथमे क्षणे घटस्य। अस्ति च सर्वत्र देशे[12] काले घटस्य स्वरूपभूतोऽभाव इति। अथ स्वहेतोरेकक्षणस्थायी घट उत्पद्यते तेन तदात्मको विनाशः कथ्यते। न पुनर्विनाशो नाम कश्चिद् विग्रहवानिति। तेन द्वितीये क्षणे स[13] एव न भवति। न पुनस्तस्य किंचिद् भवति। अथ द्वितीये क्षणे घटस्य किं सत्त्वं किं वाऽसत्त्वम्?। यदि सत्त्वं कथं क्षणिकत्वम्? अथासत्त्वम् तदा तदसत्त्वम् यद्यहेतुकं तदा प्रथमेऽपि क्षणे किं न भवति?। अथ तदसत्त्वं न किंचिद् येन प्रथमेऽपि क्षणे स्यात्। यदि तन्न किंचिद् किं न घटो भवति?।

§२३. अथ द्वितीयादिक्षणेषु तुच्छरूपोऽस्याऽभावो भवति तेन न सत्त्वमिति। प्रथमे क्षणे तुच्छरूपाभावाभावात् सत्त्वमिति। ननु तुच्छरूपोऽभावः किं घटादभिन्नः किं वा भिन्न इति?। यद्यभिन्नः [14]तदा पूर्वः प्रसंगः—प्रथमेऽपि क्षणे सत्त्वं न स्यात्, सर्वदेशकालेषु वा सत्त्वं स्यात् इति। अथ भिन्नः स किं निर्हेतुकः किं वा हेतुमानिति?। यद्यहेतुकः तदा प्रथमेऽपि क्षणे घटस्य सत्त्वं न स्यात् अहेतुकत्वात् तस्य तत्रापि भावात्। अथ हेतुमांस्तदा कथमहेतुकोऽभावः इति?।

§२४. अपि च तुच्छरूपाभावोत्पत्तौ द्वितीयादि क्षणेषु यदि घटो न भवति त्रैलोक्यमपि[15] किन्न न भवति?। तत्संबन्धिनोऽभावस्योत्प[16]त्तेः स एव न भवति न तु[17] त्रैलोक्यमिति

---

१. करोतीति न करो° ब०। २. सद्भावो क०। ३. प्रथमक्षणे मु०। ४. तदोत्पत्तिस्थितिमद्भ्यां क० मु०। ५. भेदे इत्या° अ० ब०। ६. तदा हेतो मु०। ७. तदाभा° क०। ८. भेदः तर्हि मु०। ९. घटस्याप्य° मु०। १०. न मुद्गरादेर्हेतुकतोच्यते अ०। ११. विरोधिनि क०। १२. देशकाले मु० क०। १३. क्षणे एव मु० क०। १४. तथा अ० ब०। १५. °मपि न किन्न भ° मु० क०। १६. सत्तौ स अ०। १७. न त्रैलो° ब० मु० क०।

चेत्; कः संबन्धः ? । न तावत् तादात्म्यम्, तत्र पूर्वमेवोक्तं दूषणम् । अथ तदुत्पत्तिः । तदपि नास्ति[1] यतः किम् अभावेन घटो जन्यते किं वा घटेन [2]अभाव इति ? । तत्र यद्यभावेन घटो जन्यते तदा तत्का[3]रणवैफल्यं स्यात् । सर्वत्र च घटस्य सत्त्वं भवेदिति । अथ घटेनाभावो जन्यते तदा कथमहेतुकत्वम् ? । द्वितीयश्च घटक्षणोऽभावेन व्यवहितोत्पत्तिः स्यात् । अथ द्वितीय[4]घटक्षण एव प्रथमस्याभावो नान्यो[5]ऽभावोऽन्तराले कश्चिदिति । ननु तस्य क्षणिकत्वात् तद्विनाशे प्रथमघटस्योत्पत्तिः स्यात् । एवं कपालविनाशेपि ।

§२५. अपि च यदि वस्त्वन्तरमेवाभावः तदा यदुक्तं—'पर्युदास एवैको नञर्थः स्यात् सोऽपि वा न भवेत् । यदि हि किंचित् कुतश्चिद् व्यावर्तेत तदा तद्व्यतिरेकि[6] संस्पृश्येत तत्पर्युदासेन अन्यथा घटो न भवतीत्युक्ते पटो भवति इति पटस्य विधिरेवोक्तः स्यात् न घटस्य निवृत्तिरिति' [7]विरुध्येत । तस्मात् सुदूरमपि गत्वा वस्तूभयात्मकमभ्युपगन्तव्यम् । स्वरूपेण सत् पररूपेणासदिति । तेन भाववत् तदभावोऽपि हेतुमानिति ।

§२६. अपि चैवमेकान्तवादिनो जन्माप्यहेतुकं स्यात् । तथाहि—कारणेन कार्यस्य किं जन्म भिन्नं क्रियते [8]किं वाऽभिन्नं क्रि[9]यते ? । यदि भिन्नं क्रियते तदा कार्यस्य न किंचित् कृतं स्यात् । त[10]त्संबन्धित्वं च [11]संबन्धनिरासात् निरस्तम् । अथाभिन्नं क्रियते तदा तदेव क्रियते न जन्म । तच्च किं विद्यमानं क्रियते किं वा अविद्यमानम्[12] ? । यदि विद्यमानं तदा किं क्रियते ? । [13]अथाविद्यमानं तदा शशविषाणमपि क्रियेत । [14]अथाविद्यमानमेव क्रियते न तु अविद्यमानं क्रियत एव । तेन यस्य कारणमस्ति तत् क्रियते यस्य नास्ति तन्न क्रियते । ननु[15] अविद्यमानत्वा[16]विशेषेऽपि मृत्पिण्डो घटस्यैव कारणं न शशविषाण[17]स्येति किं कृतो नियमः ? । अथ यस्योत्पत्तिर्दृश्यते तस्य कारणं नेतरस्य । ननु अविद्यमानत्वाविशेषेऽपि एकस्योत्पत्तिर्नान्यस्येति कुतः ? । वस्तुस्वभावैरुत्तरं वाच्यमिति चेत्; एवं तर्हि हेतुमद्विनाशवाद्यप्येतद्वक्तुं शक्नोति । कपालोत्पत्तौ घटस्यै[18]वाभावः क्रियते नान्यस्येति वस्तुस्वभावैरुत्तरं वाच्यमिति । तद्युक्तिवादिना पादप्रसारणं न कर्तव्यम् किन्तु युक्तिरनुसरणीया ।

§२७. तत्रैकान्तवादे उत्पादव्ययौ [19]निर्युक्तिकाविति । अनेकान्तवाद एव युक्तिभारसह इति[20] तदेव वस्तु केनचिद्रूपेण विनश्यति केनचिदुत्पद्यते[21] नैकान्तेनासदुत्पद्यते नाप्येकान्तेन विनश्यति इति युक्तं । तदेवमुत्पादव्ययध्रौव्ययुक्तं वस्त्वनभिदधानानि आगमान्तराणि मिथ्यावादीनि इति । तस्मात् सूक्तम्—**जैनादन्यच्छासनमनृतं भवतीति** ।

§२८. ननु भवतु विधिनियमभङ्गवृत्ति[22]व्यतिरिक्तत्वादन्यच्छाशनमनृतमनम्ब(मम्ब)-

---

१. नास्तीति यतः क० । २. घटेनेति अ० । ३. तत्करण° मु० क० । ४. द्वितीये घट° अ० । ५. नाद्योऽ मु० क० । ६. °तिरेके सं° मु० क० । ७. विधिरुच्येत मु० क० । ८. भिन्नं क्रियते यदि क० । ९. वाऽभिन्नं यदि मु० । १०. तत्संबंधिनिरासात् अ० । तत्संबन्धनिरासात् मु० क० । ११. संबंधित्वनिरा° ब० । १२. °मानं क्रियते यदि ब० मु० । १३. क्रियते तदा मु० क० । १४. तथा° मु० क० । १५. न तु अ० । १६. त्वविशे° मु० क० । १७. स्यापि किं अ० ब० । १८. स्यैवं क्रि° मु० । १९. °यौ न युक्ति° मु० क० । २०. इत्यादि अ० ब० । २१. °द्यते नाप्येका° अ० । २२. व्यक्तिरि° अ० ।

रवपुषां त्व[1]भ्युपगमः कथम् ?, तस्य हि विधिनियमभङ्गवृत्त्यव्यतिरिक्तत्वादिति । तेऽपि स्त्रीणाममोक्षमनागममभ्युपेताः तेन मिथ्यादृश इति । तदुक्तम् ।

"पयमक्खरं च एगं[2] जो न रोएइ[3] सुत्तनिद्दिट्ठं ।
सेसं रोतन्तो वि हु मिच्छद्दिट्ठी जमालि व्व ॥"

तथाहि—यथा तिर्यङ्नारकामरासंख्यातायुःसम्मूर्च्छजनरेषु रत्नत्रयस्य निर्वाणहेतोरभावोऽभिहितोऽर्हता तथा न योषासु तथापि ते तत्र तदभावं प्रतिपन्ना इति । नापि प्रत्यक्षेण रत्नत्रयस्याभावः, परचेतोवृत्तीनां दुरन्वयत्वात् । नाप्यनुमानेन [4]प्रत्यक्षाभावे तस्याप्यभावात् । तदेवं प्रत्यक्षानुमानाग[5]माबाधितं ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयमविकलं कारणं निर्वाणस्य स्त्रीष्वस्तीति कथमनिर्मोक्ष इति । प्रयोगः—यदविकलं [6]कारणं तदवश्यमेव कार्यमुत्पादयति यथा अन्त्या बीजादिसामग्री अङ्कुरादिकम् । अविकलं च निःश्रेयसकारणं योषित्स्विति ।

§२९. [7]अथाधस्तादुत्कृष्टगमनवद् उपरिष्टादप्युत्कृष्टगमनासंभवः तासामिति स्त्रीत्वे[8]नैव विरुद्धं रत्नत्रयमित्यसिद्धो हेतुरिति चेत्; न, प्रतिबन्धाभावात् । न हि सप्तमपृथ्वीगमना[9]भावो मोक्षाभावेन व्याप्तो[10] विपर्यये व्याप्तेरसिद्धेः । [11]इह यद्यत्र नियम्यते तद्विपर्ययेण तद्विपक्षस्य व्याप्तौ नियमः सिध्यति । यथा वह्निना धूमस्य व्याप्तौ धूमाभावेन वह्न्यभावस्य व्याप्तिः । यथा वा शिंशपात्वस्य वृक्षत्वेन व्याप्तौ वृक्षत्वाभावस्य शिंशपात्वाभावेन व्याप्तिरिति । न चैवं सप्तमपृथ्वी[12]गमनं कारणं मोक्षगमनस्य नापि तदात्मकम् येन विपर्ययव्याप्तिः स्यादिति । न चाव्याप[13]कनिवृत्तावपि व्याप्यस्य निवृत्ति[14]रतिप्रसंगात् । न च स्त्रीत्वेनाविकलकारणं भवन्निर्वाणकारणं निवर्त्यमानमुपलब्धम् । येन [15]विरोधादसिद्धो हेतुः स्यादिति ।

§३०. न चोत्कृष्टाशुभपरिणामेन उत्कृष्टशुभपरिणामस्य व्याप्तिः येन तदभावे तस्याप्यभावतः प्रकृष्टाशुभार्जनायोग्यत्वे प्रकृष्टशुभार्जनायोग्यत्वं तासां स्यादिति । उक्तं च ।

"विषमगतयोऽप्यधस्तात् उपरिष्टात्तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगतिन्यूनताऽहेतुः ॥" [ स्त्रीमु० श्लो० ६ ]
"श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥" [ तत्त्वार्थसं० का० २७ ]

इति वचनात् नोत्कृष्टश्रुताभावेन सिद्ध्यभावः स्त्रीणामिति ।

§३१. न च वस्त्रेण व्यवधानं निर्वाणस्य, अन्यथा तद्रहितानां तस्य सत्त्वं स्यात् । मोहयुक्तत्वात् [ न ] इति चेत्; [16]स एव तर्हि परिग्रहोऽस्तु न वस्त्रादिरिति । अन्यथा "कप्पइ निग्गंथाणं निग्गंथीणं समणीणं" ति व्यपदेशो न स्यात् । तेन मूर्च्छां परिग्रहं वर्णयन्ति नोपकरणम् । तेन पुंसा[17]मपि वस्त्रपात्रादि धर्मोपकरणं न परिग्रह इति । तदुक्तम् ।

'यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोन्यदधिकरणमाहार्हन् ॥" [ स्त्रीमु० श्लो० १२ ]

१. त्वनभ्यु° ब० । २. एगं पि जो ब० । ३. रोवइ ब० । ४. °मानेन, अप्रत्यक्षे एतस्य मु० । ५. °गमबाधि° क० । ६. °विकलका° ब० । ७. अधस्ता° ब० मु० क० । ८. °नैव निरुद्धं अ० ब० । ९. गमनामोक्ष° अ० । गमनाभावे मोक्षा° क० । १०. व्याप्तिः मु० क० । ११. इत आरभ्य 'प्रोक्तमेतदुपकर° [ पं० २९ ] पर्यन्तं मु० प्रतौ नास्ति सं० । १२. गमकं अ० । १३. °पकलनिवृत्ताव- व्याप्यस्य अ० । १४. निवृत्तिरिति प्रसं° अ० । १५. विरुद्धादसि ब० । १६. स च एव परि° क० । १७. पुंसामिति वस्त्र अ० ।

§ ३२. अपि च, संसारस्य[1] किं कारणं वस्त्रादिः, किं वा रागादिरिति ? यदि वस्त्रादिः तदा तद्रहितानां मोक्षः स्यात् । अथ रागादिः तदा तद्विपक्षसेवया रागादिक्षयो न वस्त्रादित्यागेन । अथ वस्त्रादिधावनादौ हिंसा भवति । सा च संसारकारणमिति । तन्न, अप्रमत्तस्य हिंसायामपि बन्धाभावात् । तदुक्तम्—

"जियउ य मरउ य जीवो अजयाचारिस्स निच्छओ[2] बन्धो ॥
पययस्स नत्थि बन्धो हिंसामेत्तेण[3] दोसेण ॥" [प्रवच० ३. १७]

"उच्चालियम्मि पाए ईरियासमियस्स वट्टमाणस्स[4] ।
वावज्जेज्ज कुलिंगी मरेज्ज तं[5] जोगमासज्ज ॥
न[6] हु तस्स तण्णिमित्तो बन्धो सुहुमो वि देसिओ समए ॥"
[ओघ० ७४८-७४९]

तस्मात् प्रमादादिरेव हिंसा न वस्त्रादिधर्मोपकरणग्रहणमिति ।

§ ३३. अवन्द्याः स्त्रियः । तेन न निर्वान्तीति चेत्; ननु[7] कस्यावन्द्याः ? । किं सर्वस्य, किं वा एकस्य कस्यचिदिति ? । न तावत् प्रथमः पक्षः; चक्रवर्त्यादिभिर्वन्द्यत्वात् । द्वितीयपक्षे तु गणधरादीनामप्यनिर्मोक्षत्वप्रसंगः[8] । तेऽपि हि नार्हता वन्द्यन्ते । अथ महत्त्वे[9] सत्यवन्द्यत्वात् इत्युच्यते । तथाहि—महतीभिरपि[10] दिनदीक्षितो[11] वन्द्यते । न पुनस्तास्तेनेति । नैतदस्ति । महत्त्वामहत्त्वव्यवस्थितेरागमनिबन्धनत्वात् । 'धर्मस्य पुरुषप्रधानत्वात् तेन पुरुषस्य महत्त्वं न स्त्रीणाम्' इति आगमः ।

§ ३४. अतिसंक्लिष्टकर्मत्वादिति चेत् । न, कर्मलाघवस्य सम्यक्त्वादिप्राप्तौ तुल्यत्वात् ।

§ ३५. मायाप्रधानत्वात् सत्त्वरहितत्वात् इत्यपि न वक्तव्यम् । यतः—

"शीलाम्बुरोधवेलाः[12] गुणरत्नसमुज्ज्वला अतिस्वच्छाः ।
राज्यमपहाय साध्व्यः संजाताः सत्यभामाद्याः ॥"

"गार्हस्थ्येऽपि सुसत्त्वाः विख्याताः शीलवत्तया जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ? ॥" [स्त्रीमु० ३१]

§ ३६. अपि च यदि न स्त्रीणां मोक्षोऽस्ति तदाऽयमागमः कथम् ?

"अट्ठसयमेगसमए पुरिसाणं निव्वुई समक्खाया ।
थीलिंगेण च वीसं सेसा दसगं[13] तु बोद्धव्वा ॥"

औपचारिकत्वादस्येति चेत्—पुरुषस्यापि[14] स्त्रीवेदोदये सति स्त्रीवद् व्यवहृतिर्यथा लोके[15] पुरुषकार्याकरणात् पुरुषोऽपि स्त्रीति व्यवह्रियते । तदसत् । मुख्ये बाधकाभावात् । अन्यथा सर्वशब्दानां व्यवस्था[16] विलुप्येत । किं च, आप्ता अप्यौपचारिकशब्दैर्यदि वस्तु प्रतिपादयेयुः तदाऽऽप्तता हीयेत । प्रयोजनं चोपचारस्य न किंचिदस्ति । वेदोदये तत्संभवप्रतिपादनं

---

१. °रस्य कारणं अ० । २. निच्छिदा हिंसा प्रवच० । ३. हिंसामित्तेण समिदस्स प्रवच० । ४. वच्चमा° मु० । °यस्स संकमट्ठाए ओघ० । ५. तज्जोग° मु० अ० ब० । ६. न य तस्स ओघ० । ७. चेत कस्या° क० मु० । ८. गणधराणाम° अ० । ९. महत्त्वेपि सत्य° क० मु० । १०. °भिर्दिन मु० । ११. °क्षितेपि व° मु० क० । १२. शीलानुरोधवलाः मु० । शीलान्तुरोधवलाः क० । १३. दसगं च बो° अ० ब० । १४. °स्यापि हि स्त्री° क० । १५. लोकेषु क० । १६. °स्याऽवलु अ० ब० ।

रवपुषां त्व[1]भ्युपगमः कथम् ?, तस्य हि विधिनियमभङ्गवृत्त्यव्यतिरिक्तत्वादिति । तेऽपि स्त्रीणाममोक्षमनागममभ्युपेताः तेन मिथ्यादृश इति । तदुक्तम् ।

"पयमक्खरं च एगं[2] जो न रोएइ[3] सुत्तनिद्दिट्ठं ।
सेसं रोतन्तो वि हु मिच्छद्दिट्ठी जमालि व्व ॥"

तथाहि–यथा तिर्यङ्नारकामरासंख्यातायुःसम्मूर्च्छजनरेषु रत्नत्रयस्य निर्वाणहेतोरभावोऽभिहितोऽर्हता तथा न योषासु तथापि ते तत्र तदभावं प्रतिपन्ना इति । नापि प्रत्यक्षेण रत्नत्रयस्याभावः, परचेतोवृत्तीनां दुरन्वयत्वात् । नाप्यनुमानेन [4]प्रत्यक्षाभावे तस्याप्यभावात् । तदेवं प्रत्यक्षानुमानाग[5]माबाधितं ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयमविकलं कारणं निर्वाणस्य स्त्रीष्वस्तीति कथमनिर्मोक्ष इति । प्रयोगः–यदविकलं [6]कारणं तदवश्यमेव कार्यमुत्पादयति यथा अन्त्या बीजादिसामग्री अङ्कुरादिकम् । अविकलं च निःश्रेयसकारणं योषित्स्विति ।

§२९. [7]अथाधस्तादुत्कृष्टगमनवद् उपरिष्टादप्युत्कृष्टगमनासंभवः तासामिति स्त्रीत्वेनैव [8]विरुद्धं रत्नत्रयमित्यसिद्धो हेतुरिति चेत्; न, प्रतिबन्धाभावात् । न हि सप्तमपृथ्वीगमना[9]भावो मोक्षाभावेन व्याप्तो[10] विपर्यये व्याप्तेरसिद्धेः । [11]इह यद्यत्र नियम्यते तद्विपर्ययेण तद्विपक्षस्य व्याप्तौ नियमः सिध्यति । यथा वह्निना धूमस्य व्याप्तौ धूमाभावेन वह्न्यभावस्य व्याप्तिः । यथा वा शिंशपात्वस्य वृक्षत्वेन व्याप्तौ वृक्षत्वाभावस्य शिंशपात्वाभावेन व्याप्तिरिति । न चैवं सप्तमपृथ्वीग[12]मनं कारणं मोक्षगमनस्य नापि तदात्मकम् येन विपर्ययव्याप्तिः स्यादिति । न चाव्याप[13]कनिवृत्तावपि व्याप्यस्य निवृत्ति[14]रतिप्रसंगात् । न च स्त्रीत्वेनाविकलकारणं भवन्निर्वाणकारणं निवर्त्यमानमुपलब्धम् । येन [15]विरोधादसिद्धो हेतुः स्यादिति ।

§३०. न चोत्कृष्टाशुभपरिणामेन उत्कृष्टशुभपरिणामस्य व्याप्तिः येन तदभावे तस्याप्यभावतः प्रकृष्टाशुभार्जनायोग्यत्वे प्रकृष्टशुभार्जनायोग्यत्वं तासां स्यादिति । उक्तं च ।

"विषमगतयोऽप्यधस्तात् उपरिष्टात्तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगतिन्यूनताऽहेतुः ॥" [ स्त्रीमु० श्लो० ६ ]
"श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥" [ तत्त्वार्थसं० का० २७ ]

इति वचनात् नोत्कृष्टश्रुताभावेन सिद्ध्यभावः स्त्रीणामिति ।

§३१. न च वस्त्रेण व्यवधानं निर्वाणस्य, अन्यथा तद्रहितानां तस्य सत्त्वं स्यात् । मोहयुक्तत्वात् [ न ] इति चेत्; [16]स एव तर्हि परिग्रहोऽस्तु न वस्त्रादिरिति । अन्यथा "कप्पइ निग्गंथाणं निग्गंथीणं समणीणं" ति व्यपदेशो न स्यात् । तेन मूर्च्छां परिग्रहं वर्णयन्ति नोपकरणम् । तेन पुंसा[17]मपि वस्त्रपात्रादि धर्मोपकरणं न परिग्रह इति । तदुक्तम् ।

"यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोऽन्यदधिकरणमाहार्हन् ॥" [ स्त्रीमु० श्लो० १२ ]

---

१. त्वनभ्यु° ब० । २. एगं पि जो ब० । ३. रोवइ ब० । ४. °मानेन अप्रत्यक्षे एतस्य मु० । ५. °गमबाधि° क० । ६. °विकलका° ब० । ७. अधस्ता° ब० मु० क० । ८. °नैव निरुद्धं अ० ब० । ९. गमनामोक्ष° अ० । गमनाभावे मोक्षा° क० । १०. व्याप्तिः मु० क० । ११. इत आरभ्य 'प्रोक्तमेतदुपकर° [ पं० २९ ] पर्यन्तं मु० प्रतौ नास्ति सं० । १२. गमकं अ० । १३. °पकत्वनिवृत्तावव्याप्यस्य अ० । १४. निवृत्तिरिति प्रसं° अ० । १५. विरुद्धादसि ब० । १६. स च एव परि° क० । १७. पुंसामिति वस्त्र अ० ।

§ ३२. अपि च, संसारस्य[1] किं कारणं वस्त्रादिः, किं वा रागादिरिति ? यदि वस्त्रादिः तदा तद्रहितानां मोक्षः स्यात् । अथ रागादिः तदा तद्विपक्षसेवया रागादिक्षयो न वस्त्रादित्यागेन । अथ वस्त्रादिधावनादौ हिंसा भवति । सा च संसारकारणमिति । तन्न, अप्रमत्तस्य हिंसायामपि बन्धाभावात् । तदुक्तम्—

"जियउ य मरउ य जीवो अजयाचारिस्स निच्छओ[2] बन्धो ॥
पययस्स नत्थि बन्धो हिंसामेत्तेणं[3] दोसेण ॥" [प्रवच० ३. १७]

"उच्चालियम्मि पाए ईरियासमियस्स वट्टमाणस्स[4] ।
वावज्जेज्ज कुलिंगी मरेज्ज तं[5] जोगमासज्ज ॥
न[6] हु तस्स तण्णिमित्तो बन्धो सुहुमो वि देसिओ समए ॥"
[ओघ० ७४८-७४९]

तस्मात् प्रमादादिरेव हिंसा न वस्त्रादिधर्मोपकरणग्रहणमिति ।

§ ३३. अवन्द्याः स्त्रियः । तेन न निर्वान्तीति चेत्; ननु[7] कस्यावन्द्याः ? । किं सर्वस्य, किं वा एकस्य कस्यचिदिति ? । न तावत् प्रथमः पक्षः; चक्रवर्त्यादिभिर्वन्द्यत्वात् । द्वितीयपक्षे तु गणधरादीनामप्यनिर्मोक्षत्वप्रसंगः[8] । तेऽपि हि नार्हता वन्द्यन्ते । अथ महत्त्वे[9] सत्यवन्द्यत्वात् इत्युच्यते । तथाहि—महतीभिरपि[10] दिनदीक्षितो[11] वन्द्यते । न पुनस्तास्तेनेति । नैतदस्ति । महत्त्वामहत्त्वव्यवस्थितेरागमनिबन्धनत्वात् । 'धर्मस्य पुरुषप्रधानत्वात् तेन पुरुषस्य महत्त्वं न स्त्रीणाम्' इति आगमः ।

§ ३४. अतिसंक्लिष्टकर्मत्वादिति चेत् । न, कर्मलाघवस्य सम्यक्त्वादिप्राप्तौ तुल्यत्वात् ।

§ ३५. मायाप्रधानत्वात् सत्यरहितत्वात् इत्यपि न वक्तव्यम् । यतः—

"शीलाम्बु[12]रोधवेलाः गुणरत्नसमुज्वला अतिस्वच्छाः ।
राज्यमपहाय साध्व्यः संजाताः सत्यभामाद्याः ॥"

"गार्हस्थ्येऽपि सुसत्त्वाः विख्याताः शीलवत्तया जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ? ॥" [स्त्रीमु० ३१]

§ ३६. अपि च यदि न स्त्रीणां मोक्षोऽस्ति तदाऽयमागमः कथम् ?

"अट्ठसयमेगसमए पुरिसाणं निव्वुई समक्खाया ।
थीलिंगेण च वीसं सेसा दसगं तु[13] बोद्धव्वा ॥"

औपचारिकत्वादस्येति चेत्—पुरुषस्यापि[14] स्त्रीवेदोदये सति स्त्रीवद् व्यवहृतिर्यथा लोके[15] पुरुषकार्याकरणात् पुरुषोऽपि स्त्रीति व्यवह्रियते । तदसत् । मुख्ये बाधकाभावात् । अन्यथा सर्वशब्दानां व्यवस्था[16] विलुप्येत । किं च, आप्ता अप्यौपचारिकशब्दैर्यदि वस्तु प्रतिपादयेयुः तदाऽऽप्तता हीयेत । प्रयोजनं चोपचारस्य न किंचिदस्ति । वेदोदये तत्संभवप्रतिपादनं

१. °रस्य कारणं अ० । २. निच्छिदा हिंसा प्रवच० । ३. हिंसामित्तेण समिदस्स प्रवच० । ४. वच्चमा° मु० । °यस्स संकमट्ठाए ओघ० । ५. तज्जोग° मु० अ० ब० । ६. न य तस्स ओघ० । ७. चेत् कस्या° क० मु० । ८. गणधराणाम° अ० । ९. महत्त्वेपि सत्य° क० मु० । १०. °भिर्दिन मु० । ११. °क्षितेपि व° मु० क० । १२. शीलानुरोधवलाः मु० । शीलान्तुरोधवलाः क० । १३. दसगं च बो° अ० ब० । १४. °स्यापि हि स्त्री° क० । १५. लोकेषु क० । १६. °स्थाऽवलु अ० ब० ।

रत्नपुषां त्व[1]भ्युपगमः कथम्?, तस्य हि विधिनियमभङ्गवृत्त्यव्यतिरिक्तत्वादिति । तेऽपि स्त्रीणाममोक्षमनागममभ्युपेताः तेन मिथ्यादृश इति । तदुक्तम् ।

"पयमक्खरं च एगं[2] जो न रोएइ[3] सुत्तनिद्दिट्ठं ।
सेसं रोतन्तो वि हु मिच्छद्दिट्ठी जमालि व्व ॥"

तथाहि—यथा तिर्यङ्नारकामरासंख्यातायुःसम्मूर्च्छजनरेषु रत्नत्रयस्य निर्वाणहेतोरभावोऽभिहितोऽर्हता तथा न योषासु तथापि ते तत्र तदभावं प्रतिपन्ना इति । नापि प्रत्यक्षेण रत्नत्रयस्याभावः, परचेतोवृत्तीनां दुरन्वयत्वात् । नाप्यनुमानेन [4]प्रत्यक्षाभावे तस्याप्यभावात् । तदेवं प्रत्यक्षानुमानाग[5]माबाधितं ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयमविकलं कारणं निर्वाणस्य स्त्रीष्वस्तीति कथमनिर्मोक्ष इति । प्रयोगः—यदविकलं [6]कारणं तदवश्यमेव कार्यमुत्पादयति यथा अन्त्या बीजादिसामग्री अङ्कुरादिकम् । अविकलं च निःश्रेयसकारणं योषित्स्विति ।

§ २९. [7]अथाधस्तादुत्कृष्टगमनवद् उपरिष्टादप्युत्कृष्टगमनासंभवः तासामिति स्त्रीत्वे[8]नैव विरुद्धं रत्नत्रयमित्यसिद्धो हेतुरिति चेत्; न, प्रतिबन्धाभावात् । न हि सप्तमपृथ्वीगमना[9]भावो मोक्षाभावेन व्याप्तो[10] विपर्यये व्याप्तेरसिद्धेः । [11]इह यद्यत्र नियम्यते तद्विपर्ययेण तद्विपक्षस्य व्याप्तौ नियमः सिध्यति । यथा वह्निना धूमस्य व्याप्तौ धूमाभावेन वह्न्यभावस्य व्याप्तिः । यथा वा शिंशपात्वस्य वृक्षत्वेन व्याप्तौ वृक्षत्वाभावस्य शिंशपात्वाभावेन व्याप्तिरिति । न चैवं सप्तमपृथ्वी[12]गमनं कारणं मोक्षगमनस्य नापि तदात्मकम् येन विपर्ययव्याप्तिः स्यादिति । न चाव्याप[13]कनिवृत्तावपि व्याप्यस्य निवृत्ति[14]रतिप्रसंगात् । न च स्त्रीत्वेनाविकलकारणं भवन्निर्वाणकारणं निवर्त्त्यमानमुपलब्धम् । येन [15]विरोधादसिद्धो हेतुः स्यादिति ।

§ ३०. न चोत्कृष्टाशुभपरिणामेन उत्कृष्टशुभपरिणामस्य व्याप्तिः येन तदभावे तस्याप्यभावतः प्रकृष्टाशुभार्जनायोग्यत्वे प्रकृष्टशुभार्जनायोग्यत्वं तासां स्यादिति । उक्तं च ।

"विषमगतयोऽप्यधस्तात् उपरिष्टात्तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगतिन्यूनताऽहेतुः ॥" [ स्त्रीमु० श्लो० ६ ]
"श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥" [ तत्त्वार्थसं० का० २७ ]

इति वचनात् नोत्कृष्टश्रुताभावेन सिद्ध्यभावः स्त्रीणामिति ।

§ ३१. न च वस्त्रेण व्यवधानं निर्वाणस्य, अन्यथा तद्रहितानां तस्य सत्त्वं स्यात् । मोहयुक्तत्वात् [ न ] इति चेत्; [16]स एव तर्हि परिग्रहोऽस्तु न वस्त्रादिरिति । अन्यथा "कप्पइ निग्गंथाणं निग्गंथीणं समणीणं" ति व्यपदेशो न स्यात् । तेन मूर्च्छां परिग्रहं वर्णयन्ति नोपकरणम् । तेन पुंसा[17]मपि वस्त्रपात्रादि धर्मोपकरणं न परिग्रह इति । तदुक्तम् ।

"यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोन्यदधिकरणमाहार्हन् ॥" [ स्त्रीमु० श्लो० १२ ]

---

१. त्नभ्यु° ब० । २. एगं पि जो ब० । ३. रोवइ ब० । ४. °मानेन, अप्रत्यक्षे एतस्य मु० । ५. °गमबाधि° क० । ६. °विकलका° ब० । ७. अधस्ता° ब० मु० क० । ८. °नैव निरुद्धं अ० ब० । ९. गमनामोक्ष° अ० । गमनाभावे मोक्षा° क० । १०. व्याप्तिः मु० क० । ११. इत आरभ्य 'प्रोक्तमेतदुपकर° [ पं० २९ ] पर्यन्तं मु० प्रतौ नास्ति सं० । १२. गमकं अ० । १३. °पकत्वनिवृत्तावव्याप्यस्य अ० । १४. निवृत्तिरिति प्रसं° अ० । १५. विरुद्धादसि ब० । १६. स च एव परि° क० । १७. पुंसामिति वस्त्र अ० ।

§ ३२. अपि च, संसारस्य[1] किं कारणं वस्त्रादिः, किं वा रागादिरिति ? यदि वस्त्रादिः तदा तद्रहितानां मोक्षः स्यात् । अथ रागादिः तदा तद्विपक्षसेवया रागादिक्षयो न वस्त्रादित्यागेन । अथ वस्त्रादिधावनादौ हिंसा भवति । सा च संसारकारणमिति । तन्न, अप्रमत्तस्य हिंसायामपि बन्धाभावात् । तदुक्तम्—

"जियउ य मरउ य जीवो अजयाचारिस्स निच्छओ[2] बन्धो ॥
पययस्स नत्थि बन्धो हिंसामेत्तेण[3] दोसेण ॥" [ प्रवच० ३. १७ ]

"उच्चालियम्मि पाए ईरियासमियस्स वट्टमाणस्स[4] ।
वावज्जेज्ज कुलिंगी मरेज्ज तं[5] जोगमासज्ज ॥
न[6] हु तस्स तण्णिमित्तो बन्धो सुहुमो वि देसिओ समए ॥"
[ ओघ० ७४८-७४९ ]

तस्मात् प्रमादादिरेव हिंसा न वस्त्रादिधर्मोपकरणग्रहणमिति ।

§ ३३. अवन्द्याः स्त्रियः । तेन न निर्वान्तीति चेत्; ननु[7] कस्यावन्द्याः ? । किं सर्वस्य, किं वा एकस्य कस्यचिदिति ? । न तावत् प्रथमः पक्षः; चक्रवर्त्यादिभिर्वन्द्यत्वात् । द्वितीयपक्षे तु गणधरा[8]दीनामप्यनिर्मोक्षत्वप्रसंगः । तेऽपि हि नार्हता वन्द्यन्ते । अथ महत्त्वे[9] सत्यवन्द्यत्वात् इत्युच्यते । तथाहि—महतीभिरपि[10] दिनदीक्षितो[11] वन्द्यते । न पुनस्तास्तेनेति । नैतदस्ति । महत्त्वामहत्त्वव्यवस्थितेरागमनिबन्धनत्वात् । 'धर्मस्य पुरुषप्रधानत्वात् तेन पुरुषस्य महत्त्वं न स्त्रीणाम्' इति आगमः ।

§ ३४. अतिसंक्लिष्टकर्मत्वादिति चेत् । न, कर्मलाघवस्य सम्यक्त्वादिप्राप्तौ तुल्यत्वात् ।

§ ३५. मायाप्रधानत्वात् सत्त्वरहितत्वात् इत्यपि न वक्तव्यम् । यतः—

"शीलाम्बु[12]रोधवेलाः गुणरत्नसमुज्ज्वला अतिस्वच्छाः ।
राज्यमपहाय साध्व्यः संजाताः सत्यभामाद्याः ॥"

"गार्हस्थ्येऽपि सुसत्त्वाः विख्याताः शीलवत्तया जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ? ॥" [ स्त्रीमु० ३१ ]

§ ३६. अपि च यदि न स्त्रीणां मोक्षोऽस्ति तदाऽयमागमः कथम् ?

"अट्ठसयमेगसमए पुरिसाणं निव्वुई समक्खाया ।
थीलिंगेण च वीसं सेसा दसगं तु[13] बोद्धव्वा ॥"

औपचारिकत्वादस्येति चेत्—पुरुषस्यापि[14] स्त्रीवेदोदये सति स्त्रीवद् व्यवहृतिर्यथा लोके[15] पुरुषकार्याकरणात् पुरुषोऽपि स्त्रीति व्यवह्रियते । तदसत् । मुख्ये बाधकाभावात् । अन्यथा सर्वशब्दानां व्यवस्था[16] विलुप्येत । किं च, आप्ता अप्यौपचारिकशब्दैर्यदि वस्तु प्रतिपादयेयुः तदाऽऽप्तता हीयेत । प्रयोजनं चोपचारस्य न किंचिदस्ति । वेदोदये तत्संभवप्रतिपादनं

१. °रस्य कारणं अ० । २. निच्छिदा हिंसा प्रवच० । ३. हिंसामित्तेण समिदस्स प्रवच० । ४. वच्चमा° मु० । °यस्स संकमट्ठाए ओघ० । ५. तज्जोग° मु० अ० ब० । ६. न य तस्स ओघ० । ७. चेत् कस्या° क० मु० । ८. गणधराणाम° अ० । ९. महत्त्वेपि सत्य° क० मु० । १०. °भिर्दिन मु० । ११. °क्षितेऽपि व° मु० क० । १२. शीलानुरोधवलाः मु० । शीलाम्बुरोधवलाः क० । १३. दसगं च बो° अ० ब० । १४. °स्यापि हि स्त्री° क० । १५. लोकेषु क० । १६. °स्थाऽवलु अ० ब० ।

रवपुषां त्व[1]भ्युपगमः कथम् ?, तस्य हि विधिनियमभङ्गवृत्त्यव्यतिरिक्तत्वादिति । तेऽपि स्त्रीणाममोक्षमनागममभ्युपेताः तेन मिथ्यादृश इति । तदुक्तम् ।

"पयमक्खरं च एगं [2]जो न रोएइ[3] सुत्तनिद्दिट्ठं ।
सेसं रोतन्तो वि हु मिच्छद्दिट्ठी जमालि व्व ॥"

तथाहि—यथा तिर्यङ्नारकामरासंख्यातायुःसम्मूर्च्छजनरेषु रत्नत्रयस्य निर्वाणहेतोरभावोऽभिहितोऽर्हता तथा न योषासु तथापि ते तत्र तदभावं प्रतिपन्ना इति । नापि प्रत्यक्षेण रत्नत्रयस्याभावः, परचेतोवृत्तीनां दुरन्वयत्वात् । नाप्यनुमानेन [4]प्रत्यक्षाभावे तस्याप्यभावात् । तदेवं प्रत्यक्षानुमानाग[5]माबाधितं ज्ञानदर्शनचारित्रलक्षणं रत्नत्रयमविकलं कारणं निर्वाणस्य स्त्रीष्वस्तीति कथमनिर्मोक्ष इति । प्रयोगः—यदविकलं [6]कारणं तदवश्यमेव कार्यमुत्पादयति यथा अन्त्या बीजादिसामग्री अङ्कुरादिकम् । अविकलं च निःश्रेयसकारणं योषित्स्विति ।

§२९. [7]अथाधस्तादुत्कृष्टगमनवद् उपरिष्टादप्युत्कृष्टगमनासंभवः तासामिति स्त्रीत्वेनैव [8]विरुद्धं रत्नत्रयमित्यसिद्धो हेतुरिति चेत्; न, प्रतिबन्धाभावात् । न हि सप्तमपृथ्वीगमना[9]भावो मोक्षाभावेन व्याप्तो[10] विपर्यये व्याप्तेरसिद्धेः । [11]इह यद्यत्र नियम्यते तद्विपर्ययेण तद्विपक्षस्य व्याप्तौ नियमः सिध्यति । यथा वह्निना धूमस्य व्याप्तौ धूमाभावेन वह्न्यभावस्य व्याप्तिः । यथा वा शिंशपात्वस्य वृक्षत्वेन व्याप्तौ वृक्षत्वाभावस्य शिंशपात्वाभावेन व्याप्तिरिति । न चैवं सप्तमपृथ्वी[12]गमनं कारणं मोक्षगमनस्य नापि तदात्मकम् येन विपर्ययव्याप्तिः स्यादिति । न चाव्याप[13]कनिवृत्तावपि व्याप्यस्य निवृत्ति[14]रतिप्रसंगात् । न च स्त्रीत्वेनाविकलकारणं भवन्निर्वाणकारणं निवर्त्त्यमानमुपलब्धम् । येन [15]विरोधादसिद्धो हेतुः स्यादिति ।

§३०. न चोत्कृष्टाशुभपरिणामेन उत्कृष्टशुभपरिणामस्य व्याप्तिः येन तदभावे तस्याप्यभावतः प्रकृष्टाशुभार्जनायोग्यत्वे प्रकृष्टशुभार्जनायोग्यत्वं तासां स्यादिति । उक्तं च ।

"विषमगतयोऽप्यधस्तात् उपरिष्टात्तुल्यमासहस्रारम् ।
गच्छन्ति च तिर्यञ्चस्तदधोगतिन्यूनताऽहेतुः ॥" [ स्त्रीमु० श्लो० ६ ]
"श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥" [ तत्त्वार्थसं० का० २७ ]

इति वचनात् नोत्कृष्टश्रुताभावेन सिद्ध्यभावः स्त्रीणामिति ।

§३१. न च वस्त्रेण व्यवधानं निर्वाणस्य, अन्यथा तद्रहितानां तस्य सत्त्वं स्यात् । मोहयुक्तत्वात् [ न ] इति चेत्; [16]स एव तर्हि परिग्रहोऽस्तु न वस्त्रादिरिति । अन्यथा "कप्पइ निग्गंथाणं निग्गंथीणं समणीणं" ति व्यपदेशो न स्यात् । तेन मूर्च्छां परिग्रहं वर्णयन्ति नोपकरणम् । तेन [17]पुंसामपि वस्त्रपात्रादि धर्मोपकरणं न परिग्रह इति । तदुक्तम् ।

"यत् संयमोपकाराय वर्तते प्रोक्तमेतदुपकरणम् ।
धर्मस्य हि तत् साधनमतोन्यदधिकरणमाहार्हन् ॥" [ स्त्रीमु० श्लो० १२ ]

१. त्वनभ्यु° ब० । २. एगं पि जो ब० । ३. रोवइ ब० । ४. °मानेन अप्रत्यक्षे एतस्य मु० । ५. °गमबाधि° क० । ६. °विकलका° ब० । ७. अधस्ता° ब० मु० क० । ८. °नैव निरुद्धं अ० ब० । ९. गमनामोक्ष° अ० । गमनाभावे मोक्षा° क० । १०. व्याप्तिः मु० क० । ११. इत आरभ्य 'प्रोक्तमेतदुपकर° [ पं० २९ ] पर्यन्तं मु० प्रतौ नास्ति सं० । १२. गमकं अ० । १३. °पकत्वनिवृत्ताव-व्याप्यस्य अ० । १४. निवृत्तिरिति प्रसं° अ० । १५. विरुद्धादसि ब० । १६. स च एव परि° क० । १७. पुंसामिति वस्त्र अ० ।

§ ३२. अपि च, संसारस्य[1] किं कारणं वस्त्रादिः, किं वा रागादिरिति ? यदि वस्त्रादिः तदा तद्रहितानां मोक्षः स्यात् । अथ रागादिः तदा तद्विपक्षसेवया रागादिक्षयो न वस्त्रादित्यागेन । अथ वस्त्रादिधावनादौ हिंसा भवति । सा च संसारकारणमिति । तन्न, अप्रमत्तस्य हिंसायामपि बन्धाभावात् । तदुक्तम्—

"जियउ य मरउ य जीवो अजयाचारिस्स निच्छओ[2] बन्धो ॥
पययस्स नत्थि बन्धो हिंसामेत्तेण[3] दोसेण ॥" [ प्रवच० ३. १७ ]
"उच्चालियम्मि पाए ईरियासमियस्स वट्टमाणस्स[4] ।
वावज्जेज्ज कुलिंगी मरेज्ज तं[5] जोगमासज्ज ॥
न[6] हु तस्स तण्णिमित्तो बन्धो सुहुमो वि देसिओ समए ॥"
[ ओघ० ७४८-७४९ ]

तस्मात् प्रमादादिरेव हिंसा न वस्त्रादिधर्मोपकरणग्रहणमिति ।

§ ३३. अवन्द्याः स्त्रियः । तेन न निर्वान्तीति चेत्; ननु[7] कस्यावन्द्याः ? । किं सर्वस्य, किं वा एकस्य कस्यचिदिति ? । न तावत् प्रथमः पक्षः; चक्रवर्त्यादिभिर्वन्द्यत्वात् । द्वितीयपक्षे तु गणधरादीनाम्[8]प्यनिर्मोक्षत्वप्रसंगः । तेऽपि हि नार्हता वन्द्यन्ते । अथ महत्त्वे[9] सत्यवन्द्यत्वात् इत्युच्यते । तथाहि—महतीभिरपि[10] दिनदीक्षितो[11] वन्द्यते । न पुनस्तास्तेनेति । नैतदस्ति । महत्त्वामहत्त्वव्यवस्थितेरागमनिबन्धनत्वात् । 'धर्मस्य पुरुषप्रधानत्वात् तेन पुरुषस्य महत्त्वं न स्त्रीणाम्' इति आगमः ।

§ ३४. अतिसंक्लिष्टकर्मत्वादिति चेत् । न, कर्मलाघवस्य सम्यक्त्वादिप्राप्तौ तुल्यत्वात् ।

§ ३५. मायाप्रधानत्वात् सत्त्वरहितत्वात् इत्यपि न वक्तव्यम् । यतः—

"शीलाम्बुरोध[12]वेलाः गुणरत्नसमुज्ज्वला अतिस्वच्छाः ।
राज्यमपहाय साध्व्यः संजाताः सत्यभामाद्याः ॥"
"गार्हस्थ्येऽपि सुसत्त्वाः विख्याताः शीलवत्तया जगति ।
सीतादयः कथं तास्तपसि विसत्त्वा विशीलाश्च ? ॥" [ स्त्रीमु० ३१ ]

§ ३६. अपि च यदि न स्त्रीणां मोक्षोऽस्ति तदाऽयमागमः कथम् ?

"अट्ठसयमेगसमए पुरिसाणं निव्वुई समक्खाया ।
थीलिंगेण च वीसं सेसा दसगं तु[13] बोद्धव्वा ॥"

औपचारिकत्वादस्येति चेत्—पुरुषस्यापि[14] स्त्रीवेदोदये सति स्त्रीवद् व्यवहृतिर्यथा लोके[15] पुरुषकार्याकरणात् पुरुषोऽपि स्त्रीति व्यवह्रियते । तदसत् । मुख्ये बाधकाभावात् । अन्यथा सर्वशब्दानां व्यवस्था[16]विलुप्येत । किं च, आप्ता अप्यौपचारिकशब्दैर्यदि वस्तु प्रतिपादयेयुः तदाऽऽप्तता हीयेत । प्रयोजनं चोपचारस्य न किंचिदस्ति । वेदोदये तत्संभवप्रतिपादनं

---

१. °रस्य कारणं अ० । २. निच्छिदा हिंसा प्रवच० । ३. हिंसामित्तेण समिदस्स प्रवच० । ४. वच्चमा° मु० । °यस्स संकमट्ठाए ओघ० । ५. तज्जोग° मु० अ० ब० । ६. न य तस्स ओघ० । ७. चेत् कस्या° क० मु० । ८. गणधराणाम° अ० । ९. महत्त्वेपि सत्य° क० मु० । १०. °भिर्दिन मु० । ११. °क्षितेऽपि व° मु० क० । १२. शीलानुरोधवलाः मु० । शीलान्नुरोधवलाः क० । १३. दसगं च बो° अ० ब० । १४. °स्यापि हि स्त्री° क० । १५. लोकेषु क० । १६. °स्याऽवलु अ० ब० ।

प्रयोजनमिति चेत्। न[1], क्षीणवेदस्यैव निर्वाणप्राप्तेः। न च स्त्रीवेदोदये सति क्षपकश्रेण्यारम्भकत्वं येन तथा व्यपदेशः स्यात्। न हि दोषवन्तो गुणश्रेणिमारभन्ते। अथ कदाचित् तस्य स्त्रीवेदोदय आसीत् तेन तथा व्यपदेशः, तर्हि क्रोधाद्युदयोऽपि कदाचित् आसीत्, तेन किन्न व्यपदिश्यन्ते क्रोधवन्तः[2] ईयन्तः सिध्यन्तीति। तस्मात् औपचारिकत्वमागमस्य प्रतिपद्यमानो[3] विधिवाक्यस्यैव प्रामाण्यमिच्छतो मीमांसकस्यानुहरति।

§ ३७. अपि च चतुर्दशगुणस्थानानि स्त्रीणामर्हतोक्तानि निर्मोक्षत्वे विरुध्यन्ते।

एवं जिनवरकथितं स्त्रीष्वपि मोक्षं न साधु मन्यन्ते
विध्यादिवादिनोऽपि हि तथापि मिथ्यादृशोऽह्रीकाः।
एवं सप्तनयाम्बुधेर्जिनमतात् बाह्यागमा येऽभवन्
स्थित्युत्पादविनाशवस्तुविरहात् तान् सत्यतायाः क्षिपन्।
[4]यो बौद्धावधिबुद्धतीर्थिकमतप्रादुर्भवद्विक्रमः
मल्लो मल्लमिवान्यवादमजयच्छ्रीमल्लवादी विभुः॥

प्रामाण्यलक्षणमबाध्यमनन्यनेयं सूत्रा[5][6]भिधानिगदितं विशदं यदर्थम्।
मोक्षार्थसाधनपदार्थविधौ पटीयः प्रोक्तं प्रमाणमिह शाब्दमिदं गरीयः॥ [ ५६ ]

॥ इति श्रीशान्त्याचार्यविरचितायां वार्तिकवृत्तौ आगमपरिच्छेदः[7] ॥

[8]सूरिश्चन्द्रकुलामलैकतिलकश्चारित्ररत्नाम्बुधिः
सारे लाघवमादधाति च गिरेर्यो वर्धमानाभिधः।
तच्छिष्यावयवः स सूरिरभवच्छ्रीशान्तिनामा कृता
येनेयं विवृतिर्विचारकलिका नामा स्मृतावा[त्मनः] ॥ १ ॥

अवज्ञानं[9] हीने समधिकगुणे द्वेषमधिकम्
समाने संस्पर्धां गुणवति गुणी यत्र कुरुते।
तदस्मिन् संसारे विरलसुजनेऽपास्तविषया
प्रतिष्ठाशा शास्त्रे तदपि च[10] भवेत् कृत्यकरणम्॥ २ ॥[11]

॥ ग्रन्थाग्र[12] २८७३ ॥

---

१. नाक्षीण मु० क०। २. क्रोधवन्तः सि° अ०। ३. प्रतिपाद्यमाने मु० क०। ४. यो ध्रौद्धावधिबुद्धिती° अ०। ५. °वेयंस्तत्रा° अ०। ६. सूत्रभिदा नि° ब०। ७. °परिच्छेदः चतुर्थः संपूर्णः इत्येवं एषा पुष्पिका—सूरिश्चन्द्रेत्यादिग्रन्थकृत्प्रशस्तिश्लोकद्वयानन्तरं मुद्रितप्रतौ वर्तते। सं०। ८. इदं पद्यं अ० प्रतौ नास्ति। ९. अवज्ञा न हीने क०। १०. तदपि न भवेत् अ० ब० मु०। ११. ॥ २ ॥ मंगलं महा श्रीः ॥ लिपीकृतं लेया व्यास लादुराम जेठमल। रवासी अहिपुरमध्ये। जसलमेरुस्थः मुथा ज्ञानचन्दः बरेडीयागोत्रीयः। यस्य भार्यायां लिखापितमिदं पुस्तकं। श्रीमद्विजयानन्दसूरीश्वराणां प्रथमशिष्यपंडितश्रीमल्लक्ष्मीविजयाभिधानाः, तेषां शिष्यहंसाख्योपदेशात् लिखापितं क०। इति श्रीशांत्या……आगमपरिच्छेदः चतुर्थः संपूर्णः। संवत् १९६५ शाके १८३० पौष कृष्ण द्वितीया २ तिथौ सौम्यवासरे समाप्तम्—मु०। १२. अ० मु० क० आदर्शेषु नास्ति सं०।

# टिप्पणानि।

पृ० ११. पं० ४. **'हिताहितार्थ'**—इस कारिका की दो व्याख्याएँ वृत्तिमें हैं। उनमें से दूसरी व्याख्या (पृ० १३. पं० १२) स्पष्टतया दिङ्नागके 'प्रमाणसमुच्चय' के 'प्रमाण-भूताय' इत्यादि मंगल श्लोक का अनुकरण करके की गई है[1]। दिङ्नागने 'प्रमाणसमुच्चय' की रचना करते समय बुद्ध भगवान् को 'प्रमाणभूत' कहा है। वही बात शान्त्याचार्यने प्रस्तुत कारिका की दूसरी व्याख्या में कही है।

न्यायभाष्यकार वात्स्यायनने कहा है कि "प्रमाणेन खल्वयं ज्ञातार्थमुपलभ्य तमर्थम-भीप्सति, जिहासति वा" (१. १. १)। उद्द्योतकरने स्पष्टीकरण किया है कि उपेक्षणीयार्थ की प्रतिपत्ति से पुरुष की प्रवृत्ति या निवृत्ति होती नहीं है किन्तु सुखहेतु या दुःखहेतु अर्थ की तथाभूत प्रतिपत्ति ही प्रवर्तक या निवर्तक होती है।—न्यायवा. पृ० ७।

इसी बात को लक्ष्य में रख कर आचार्य धर्मकीर्तिने 'प्रमाणसमुच्चय' के उक्त मंगल श्लोक के वार्तिक में कहा है कि भगवान् हेयोपादेय तत्त्व के ज्ञाता होने से प्रमाण है[2]।—प्रमाणवा० १. ३४। उन्हों ने ज्ञान के प्रामाण्य का भी समर्थन उसी प्रकार से किया है।—प्रमाणवा० १. ५। ३. २१७। फलितार्थ यह है कि प्रमाण हेयोपादेय तत्त्व के विवेक में समर्थ होना चाहिए। धर्मोत्तरने 'न्यायबिन्दु' की टीका में आदिवाक्य की व्याख्या में स्पष्ट कहा है कि—सर्व पुरुषार्थ की सिद्धि सम्यग्ज्ञान से होती है और वह सिद्धि हेय के हान में और उपादेय के उपादान में पर्यवसित है।—न्यायबि० टी० पृ० ८। उन्हों ने उपेक्षणीयार्थ को हेय के अन्तर्गत मान लिया है।

यद्यपि वात्स्यायनने प्रमाण के—हान, उपादान और उपेक्षा बुद्धि ऐसे तीन फल माने हैं (न्यायभा० १. १. ३; १. १. ३२) फिर भी उन्हों ने प्रमाण को, जैसा ऊपर कहा गया है, हेय के हान में और उपादेय के उपादान में समर्थ बताया है। उद्द्योतकरने उस का समर्थन किया है। ठीक वैसे ही यद्यपि सिद्धसेन और समन्तभद्रने प्रमाण के तीन फल माने हैं और उस का समर्थन अकलंकने किया है।—(न्याया० २८; आप्तमी० १०२; न्यायवि० का० ४७६) फिर भी अकलंकने अनेकत्र प्रमाण को हेयार्थ के हान में और उपादेयार्थ के उपादान में समर्थ बताया है[3]। साथ ही उपेक्षणीयार्थ की उपेक्षा की बात नहीं कही। प्रभाचन्द्राचार्य जैसों ने धर्मोत्तरादि की तरह उपेक्षणीयार्थ के पार्थक्य का भी निरास किया है।—प्रमेयक० पृ० ४।

इससे स्पष्ट है कि अकलंकने इस विषय में वात्स्यायनादि के पूर्वोक्त कथन का अनुसरण

---

१. प्रभाचन्द्रने भी 'परीक्षामुख' के प्रथमश्लोक की दूसरी व्याख्या वैसे ही की है—प्रमेयक० पृ० ७। २. तुलना—"हिताहितविधिव्यासेधसम्भावनम्" आत्मतत्त्वविवेक पृ० १। ३. "हिता-हितार्थप्राप्तिपरिहारसमर्थे द्वे एव प्रमाणे"—प्रमाणसं० पृ० ९७ पं० ७; लघी० स्व० का० ६१; न्यायवि० का० ४ इत्यादि।

किया है। उन्हीं का अनुकरण शान्त्याचार्य ने अन्य जैनाचार्यों की तरह[1] प्रस्तुत कारिका मे किया है।

पृ० ११. पं० ५. **'सिद्धसेनार्कसूत्रितम्'**–इससे स्पष्ट है कि शान्त्याचार्य ने सिद्धसेन के सूत्र के ऊपर वार्तिक किया है। वे अपने वार्तिक[2] का विशेष नामकरण नहीं करते किन्तु वार्तिक की स्वोपज्ञ वृत्ति को उन्हों ने 'विचारकलिका'[3] ऐसा नाम दिया है जो वृत्तिगत प्रशस्तिश्लोक से स्पष्ट है।

सिद्धसेन का वह सूत्र 'न्यायावतार' नामक द्वात्रिंशिका ही है; क्यों कि वार्तिक का आधारभूत 'प्रमाणं स्वपराभासि' इत्यादि शास्त्रार्थ संग्राहक जो श्लोक उन्होंने दिया है वह न्यायावतार की प्रथम कारिका हैं।

श्वेताम्बर जैन सम्प्रदाय के आद्य वैयाकरण श्री बुद्धिसागर के सहोदर आचार्य जिनेश्वर ने 'श्वेताम्बरों के पास अपना प्रमाणलक्षण ग्रन्थ नहीं है; वे परोपजीवी हैं[4]' ऐसे आक्षेप के उत्तर में पूर्वाचार्यों का गौरव दिखाने के लिए आद्य सूरि की सुकृति[6] न्यायावतार की ही उक्त कारिका को ले कर के 'श्लोकवार्तिक' की रचना की है, और उसे स्वोपज्ञ वृत्ति से विभूषित किया है।

अतएव आचार्य सिद्धसेन के ही न्यायावतार के ऊपर दो वार्तिकों की रचना हुई है यह स्पष्ट है।

इन दोनों वार्तिकों के भी पूर्व में आ० सिद्धर्षि ने इसी न्यायावतार के ऊपर एक संक्षिप्त टीका लिखी है।

इस प्रकार हम देखते हैं कि श्वेताम्बर आचार्यों ने स्पष्टरूप से सिद्धसेनाचार्य की इस छोटीसी कृति का काफी महत्त्व बढाया है।

दिगम्बराचार्यों ने भी खासकर अकलंक ने[7] इस का अच्छा उपयोग किया है।

न्यायावतार को हम जैनन्याय का आद्य लक्षणग्रन्थ कह सकते हैं।

पृ० ११. पं० ६. **'नमः स्वतःप्रमाणाय'**–वृत्ति के इस मंगल श्लोक के साथ कुमारिल कृत मंगल तुलना के योग्य है–

**"विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे"–मीमांसा श्लोकवा० १।**

जैनसंमत आप्त का प्रामाण्य स्वतः है। मीमांसक का प्रत्येक प्रमाण स्वतःप्रमाण है[8]; फिर भी उन के मत से आप्तस्थानीय महेश्वर, मनु आदि अतीन्द्रियार्थ के साक्षाद्द्रष्टा नहीं हैं। ऐसे पदार्थों का उन का ज्ञान वेदाश्रित है और वह वेद किसी पुरुष के द्वारा निर्मित या उपदिष्ट नहीं है किन्तु नित्य है–[9]अपौरुषेय है। वेदस्वरूप दिव्यचक्षु मिलने पर महेश्वर का

---

१. परीक्षा० १. २; प्रमेयक० पृ० ४; प्रमाणन० १. ३। २. 'तद्वाचः किल वार्तिकं मृदु मया प्रोक्तं शिशूनां कृते' का० ५७। ३. 'येनेयं विवृतिर्विचारकलिका नाम्ना'। ४. प्रमालक्ष्म का० ४०४। ५ प्रमालक्ष्मवृत्ति का० ४०५। ६ 'श्लोकैर्वार्तिकमाद्यसूरिसुकृतौ'–प्रमालक्ष्मटीकाके मंगलाचरणकी कारिका० ४। ७ देखो 'न्यायावतार की तुलना' का परिशिष्ट। ८. "स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्"–श्लोकवा० २. ४७। ९ "यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः"–श्लोकवा० २. ६३। "वेदस्यापौरुषेयत्वे सिद्धा स्वेव प्रमाणता"–श्लोकवा० २.९७।

ज्ञान विशुद्ध हो सकता है लेकिन जैनों के आप्त की तरह अपने दोषों का क्षय करके सकल अतीन्द्रिय पदार्थों का साक्षात्कार करना उन का काम नहीं ।

जैन, बौद्ध, नैयायिक, वैशेषिक, सांख्य और योग इन सभी के परमाप्त सभी वस्तुओं का साक्षात्कार करके उन के विषय में दूसरों को उपदेश करते हैं अतएव वे प्रत्यक्ष से अपने अपने पक्ष के उपदेष्टा कहे जाते हैं। जब कि मीमांसक के मत से वे ऐसा नहीं कर सकते। मीमांसक के मत से अतीन्द्रिय वस्तुओं का उपदेश आगमाश्रित है और वह आगम स्वयंसिद्ध है। मीमांसकेतर के मत से आगम आप्ताश्रित है और आप्त स्वयंसिद्ध है।

मंगल की रचना के समय स्तोतव्य पुरुष को ग्रन्थगत विषयानुकूल विशेषण देने की प्रथा प्रायः प्राचीन और नवीन ग्रन्थों में देखी जाती है। उसी का अनुसरण करके शान्त्याचार्य ने प्रस्तुत वृत्ति के मंगल में और वार्तिक के प्रथम श्लोक की व्याख्या में भगवान् को 'प्रमाण' कहा है।

आ० दिग्नाग ने भी 'प्रमाणसमुच्चय' की रचना करते समय भगवान् बुद्ध को 'प्रमाणभूत' कहा है। प्रमाण, खासकर प्रत्यक्ष प्रमाण, बौद्ध के मत से निर्विकल्पक होता है अतएव धर्मकीर्ति ने 'प्रमाणवार्तिक' के प्रारम्भ में भगवान को 'विधूतकल्पनाजाल' कहा।

जैनाचार्य प्रभाचन्द्र भी भगवान को 'प्रमाणलक्षण' कहते हैं। कुमारिल जब वेदाश्रित मीमांसा दर्शन का समर्थन करने के लिए प्रस्तुत हुए तब उन्हों ने महादेव को 'त्रिवेदीदिव्य-चक्षुष्' कहा।

पूज्यपाद जब मोक्षमार्गशास्त्र की टीका करने लगे तो भगवान को 'मोक्षमार्ग के नेता' कहा—'मोक्षमार्गस्य नेतारम्'—सर्वार्थ०।

योगविषयक ग्रन्थ का प्रणयन करते समय आचार्य हरिभद्र ने भगवान को अयोगम्, योगिगम्यं ( योगदृ० ), योगीन्द्रवन्दितम् ( योगबिन्दु ) कहा। जब कि दार्शनिक कृति में उन्हों ने भगवान को 'सद्दर्शन' ( षड्द० ) कहा है। वे ही जब 'सर्वज्ञसिद्धि' रचते हैं तब भगवान को 'अखिलार्थज्ञताऽऽश्लिष्टमूर्ति' कहते हैं। 'अनेकान्त की जयपताका' फहराते समय वही आचार्य भगवान को 'सद्भूतवस्तुवादी' के रूप में देखते हैं।

वेदान्त के किसी भी ग्रन्थ में यदि मंगलाचरण है तो वह ब्रह्म के स्वरूप प्रतिपादक विशेषणों से युक्त अवश्य होगा।

ऐसे और भी उदाहरण दिये जा सकते हैं। इतने उदाहरणों से हम उक्त नतीजे पर पहुंच सकते हैं कि यह भी एक प्रथा अवश्य रही कि ग्रन्थकार अपने प्रतिपाद्य विषय के अनुकूल विशेषण से इष्ट देवको भूषित करते थे।

पृ० ११. पं० ७. **'पञ्चरूपेण'**—आवश्यकनिर्युक्ति में नमस्कार शब्द का पदार्थ बताते समय कहा है कि "'दव्वभावसंकोयणं' पदार्थ है"[1]। अर्थात् नमस्कार दो प्रकार से होता है—एक तो बाह्य शरीर के अवयवों का संकोचन, यह द्रव्यसंकोचनरूप द्रव्य नमस्कार है; और दूसरा विशुद्ध मन को प्रणति में लगाना, यह भावसंकोचरूप भाव नमस्कार है[2]। मनःशुद्धिपूर्वक जो

१. आवनि० ३४२; विशेषा० २८४०। २. विशेषा० २८५७।

द्रव्यनमस्कार किया जाय वही सफल है। कोरा द्रव्य नमस्कार निष्फल होता है। द्रव्य नमस्कार न भी हो किन्तु भाव नमस्कार हो तब भी वह फलदायी है[1]।

प्रस्तुत में शान्त्याचार्य जिन भगवान को पञ्चरूप से नमस्कार करने की बात कहते हैं। यद्यपि यह उल्लेख उन के द्रव्य नमस्कार का ही है फिर भी वह भावनमस्कारपूर्वक ही होगा ऐसा समझना चाहिए। उन्हों ने अपने भाव नमस्कार की सूचना भगवान के गुणवर्णनसे दी है।

द्रव्य नमस्कार जिन पांच रूप से किया जाता है उन का वर्णन वंदनकप्रकीर्णकमें है–

**"दो जाणू दोण्णि करा पंचमगं होइ उत्तमंगं तु।**
**पणिवाओ पंचंगो भणिओ सुत्तट्ठदिट्ठीहिं॥" वंदन० १४।**

अर्थात् प्रणाम पांच अंगों से किया जाता है। दो हाथ, दो जानु और मस्तक इन पांच अंगों के संकोचन से द्रव्य नमस्कार होता है।

पृ० ११. पं० ८. **'अन्यार्थवत्तेति'** इस पद्य में शान्त्याचार्यने सज्जनों को निर्मत्सर होकर अपने ग्रन्थ की परीक्षा करने को कहा है। यह एक पुरानी प्रथा का अनुकरण मात्र है। महाकवि कालिदासने भी ऐसा ही अपनी कृति 'रघुवंश'में किया है[2]; और कालिदासके बाद भी यही प्रथा बराबर चालू रही[3]।

'अपूर्वार्थक होने से ग्रन्थ की रचना अनावश्यक है, क्यों कि वह स्वरुचिविरचित होने से सत्पुरुषों के आदर योग्य नहीं। यदि पूर्वप्रसिद्धार्थक ग्रन्थकी रचना करते हो तब तो और भी अनादरणीय है; क्यों कि पिष्टपेषण होनेसे व्यर्थ है' इन आक्षेपों का समाधान आचार्य विद्यानन्दने अपने तत्त्वार्थश्लोकवार्तिकमें दिया है (पृ० २. पं० २२)।

शान्त्याचार्यने भी 'अन्यार्थवत्ता' शब्द से उपर्युक्त दोनों आक्षेपों का उल्लेख किया जान पाडता है। क्यों कि इस शब्द का 'अन्य अर्थ से युक्तता' अर्थात् अपूर्वार्थकत्व और 'अन्यों के अर्थसे युक्तता' अर्थात् पूर्वार्थकता ऐसे दोनों अर्थ स्पष्टतया फलित होते हैं।

शान्त्याचार्यने इन आक्षेपों का उत्तर दिया है कि दूसरों ने इसी बात को सामान्य रूप से कही है और मैंने उसे अन्यथा अर्थात् विशेष रूप से कहा है। अतएव मेरा कथन मात्र अपूर्वार्थक भी नहीं और मात्र पूर्वार्थक भी नहीं। सत्पुरुषों को चाहिए कि वे इस की परीक्षा करें।

इस के साथ जयन्तके ये शब्द तुलनीय हैं–

**"कुतो वा नूतनं वस्तु वयमुत्प्रेक्षितुं क्षमाः।**
**वचोविन्यासवैचित्र्यमात्रमत्र विचार्यताम्॥"–न्यायमं० पृ० १।**

**"आदिसर्गात्प्रभृति वेदवदिमा विद्याः प्रवृत्ताः, संक्षेपविस्तरविवक्षया तु तांस्तांस्तत्र कर्तृनाचक्षते"–पृ० ५।**

इन्हीं का अनुकरण हेमचन्द्राचार्यने 'प्रमाणमीमांसा' के प्रारंभ में किया है–पृ० १।

पृ० ११. पं० ८ **'अन्यार्थ'** तुलना–**यद्यपूर्वार्थमिदं तत्त्वार्थश्लोकवार्तिकं न तदा वक्तव्यम्, सतामनादेयत्वप्रसंगात्, स्वरुचिविरचितस्य प्रेक्षावतामनादरणीयत्वात्। पूर्वप्रसिद्धार्थं तु सुतरामेतन्न वाच्यम्, पिष्टपेषणवद्वैयर्थ्यात्–इति ब्रुवाणं प्रत्येतदुच्यते"।** इत्यादि तत्त्वार्थश्लो० पृ० २ पं० २२; प्रमेयक० पृ० ६. पं० ५।

---

~~१. विशेषा० २८५८,२८५९।~~ २. "तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः" रघु० १.१०।
३. "सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः" श्लोकवा० ३; न्यायमं० पृ० १।

पृ० ११. पं० १०. **'अभिधेयप्रयोजनम्'** शान्त्याचार्यने स्वकीय वार्तिककी प्रथम कारिकाको 'आदिवाक्य' मान करके कहा है कि इस वाक्यसे ग्रन्थकारने ग्रन्थके अभिधेयके प्रयोजनका अभिधान किया है। अत एव हम यहाँ आदिवाक्यके विषयमें कुछ चर्चा करें तो अनुपयुक्त न होगा।

आदिवाक्य के विषयमें निम्नलिखित मुद्दों पर विचार करना इष्ट है—

(१) आदिवाक्यका स्वरूप और स्थान।

(२) आदिवाक्यकी चर्चाका प्रारंभ कब हुआ?।

(३) आदिवाक्यका प्रतिपाद्य।

(४) आदिवाक्यका प्रयोजन।

(५) आदिवाक्यके विषयमें अनेकान्त।

(१) ग्रन्थकार जब लिखने बैठता है तब कुछ न कुछ प्रारम्भमें लिखेगा ही। उसके आदिवाक्य होने पर भी यहाँ उस एक वाक्य या अनेक वाक्योंके समुदायरूप महावाक्यको 'आदिवाक्य' कहना इष्ट है जिसमें ग्रन्थके अभिधेयादिका प्रतिपादन किया गया हो[1]।

वैसा आदिवाक्य ग्रन्थके प्रारम्भमें या मङ्गलके अनन्तर भी लिखनेकी प्रथा है। प्राचीन सूत्रग्रन्थोंमें विना मङ्गलके ही आदिवाक्य उपलब्ध होते हैं और बादमें मङ्गल करना जब आवश्यक माना जाने लगा तब मंगलके अनन्तर भी कुछ ग्रन्थकारोंने आदिवाक्यका उपन्यास[2] किया है।

प्राचीन कालसे ग्रन्थोंके आदिवाक्य दो प्रकारके मिलते हैं—

(अ) सामान्यतः विषयप्रतिपादक।

(ब) विशेषतः विषयप्रतिपादक।

(अ) सामान्यतः विषयप्रतिपादक वाक्यमें प्रतिपाद्य विषयका विभागशून्य सामान्य कथन होता है। अर्थात् ऐसे वाक्योंमें प्रतिपाद्य विषयका सामान्यरूपसे नामकरण मात्र होता है। ऐसे वाक्य हम प्राचीन श्रौतसूत्र और गृह्यसूत्रोंमें तथा दार्शनिक सूत्रग्रन्थोंमें पाते हैं। जैसे—"अथ विध्यव्यपदेशे सर्वक्रत्वधिकारः" लाट्यायनश्रौ०। "अथातो गृह्यस्थालीपाकानां कर्म"—पारस्करगृ०। "अथातो धर्मं व्याख्यास्यामः"—वैशे० इत्यादि।

(ब) विशेषतः विषयप्रतिपादक वाक्योंमें संक्षिप्त किन्तु विभागपूर्वक विषयनिर्देश होता है। जैसे—"अथातो दर्शपूर्णमासौ व्याख्यास्यामः—आपस्तम्बश्रौतसूत्र; "प्रमाणप्रमेयसंशय" इत्यादि न्यायसूत्र; "लक्षणं चावृतिस्तत्त्वं" इत्यादि 'मध्यान्तविभाग' की प्रथम कारिका; "प्रमाणं स्वपराभासि" इत्यादि न्याया० का प्रथम श्लोक इत्यादि।

(२) ऊपर हम देख चुके कि श्रौतसूत्रके कालमें भी आदि वाक्यकी रचना तो होती थी। किन्तु श्रौतसूत्रकी बात तो जाने दें दार्शनिक सूत्रग्रन्थोंमें भी आदिवाक्यकी चर्चा

१. "शास्त्रं चेदारम्भणीयं क्रमवृत्तित्वाद्वाचः प्रथममवश्यं किमपि वाक्यं प्रयोक्तव्यम्..." इत्यादि न्यायमं० पृ० ६। २. श्लोकवा० का० २। प्रमाणसं० का० २। लघी० का० ३। न्यायमं० पृ० १. का० ५। इत्यादि।

अर्थात् आदिवाक्यमें क्या कहना चाहिए और उसे क्यों कहना चाहिए यह चर्चा देखी नहीं जाती। इन मूल ग्रन्थोंकी जब टीकाएँ लिखी जाने लगीं तब ही इस चर्चा का सूत्रपात होता है। व्याकरण महाभाष्यके प्रारम्भमें ही पतञ्जलिने व्याकरणके प्रयोजनोंका प्रतिपादन किया है। इससे हम इस नतीजे पर पहुँचते हैं कि पतञ्जलिके समयमें ग्रन्थारम्भमें प्रयोजनका प्रतिपादन करनेकी प्रथाने[1] मूर्तरूप धारण किया था। इससे पहलेके ग्रन्थोंमें ऐसी चर्चा हमारे देखनेमें आई नहीं और बादके प्रायः सभी ग्रन्थोंके प्रारम्भमें आदिवाक्यकी विविधरूपसे चर्चा देखी जाती है। इससे यही कहना पडता है कि यह चर्चा पतञ्जलि जितनी प्राचीन अवश्य है। 'व्याकरणका[2] ही प्रयोजन बतानेकी क्यों आवश्यकता हुई' ऐसी शंकाका समाधान भी पतञ्जलिको करना पडा है–यह बात भी उक्त नतीजेकी पोषक ही है।

(३) आदिवाक्यके प्रतिपाद्यके विषयमें जो मतभेद हैं उन सभीका समावेश निम्नोक्त दो प्रकारोंमें हो जाता है–

(अ) प्रयोजनादित्रयका प्रतिपादन।

(ब) अनुबन्धचतुष्टयका प्रतिपादन।

(अ) प्रयोजन, अभिधेय और सम्बन्ध ये तीन प्रयोजनादित्रय कहे जाते हैं। आदिवाक्यसे इन तीनोंका प्रतिपादन गौणमुख्यभावसे अनेक प्रकारसे आचार्योंने बताया है। उनमेंसे मुख्य प्रकार ये हैं–

१ शास्त्रके प्रयोजनका प्रतिपादन।

२ अभिधेयके प्रयोजनका प्रतिपादन।

३ अभिधेय और प्रयोजनका साक्षात् प्रतिपादन तथा सम्बन्धका अर्थात्।

४ प्रयोजनादित्रयका प्रतिपादन।

५ प्रयोजन और सम्बन्धका प्रतिपादन।

६ शब्दतः शास्त्रके प्रयोजनका और अर्थतः अभिधेयका, अभिधेयके प्रयोजनका तथा सम्बन्धका प्रतिपादन।

इन मतोंकी विशेषता और उनके माननेवालोंका वर्णन इस प्रकार है–

१–कुमारिलके मतसे आदिवाक्यमें शास्त्रके प्रयोजनका वर्णन होता है। सम्बन्ध आक्षेपलभ्य है जो कि शास्त्र और प्रयोजनका साध्यसाधनभावरूप है। शिष्य[3]प्रश्नानन्तर्यादि अन्य सम्बन्ध नहीं। यही मत शान्तरक्षितको (वादन्याय पृ० १) और अष्टशती

---

१. "कानि पुनः शब्दानुशासनस्य प्रयोजनानि" इत्यादि पृ० १६। २. पृ० ३७। ३. (१) शिष्यप्रश्नानन्तर्यरूप संबंधकी कल्पना माठरने और गौडपादने सांख्यकारिकाकी अपनी अपनी वृत्तिमें की है। पूज्यपादने सर्वार्थसिद्धिमें भी वैसी ही कल्पना की है। (२) गुरुपर्वक्रमसम्बन्ध की कल्पना नन्दीसूत्रके प्रारम्भमें है और किसी मीमांसकने भी की है–न्यायरत्ना० श्लो० २४। सांख्यकारिकाके अन्तमें भी गुरुपर्वक्रम है। (३) क्रियानन्तर्यरूपसम्बन्ध भी कहीं कहीं देखा जाता है–शांकरभाष्य० सू० १। तत्त्ववै० १.१। न्यायरत्ना० श्लो० २२। शास्त्रवा० का० १।

